# शब्दकल्पद्रुमः।

## पञ्चमकाण्डम्।



श, तालव्यशकारः। स तु शवर्गीयप्रथमवर्णः। चतुस्त्रिंशद्वर्णश्च। अस्योच्चारणस्थानं तालु। इति तन्त्रव्याकरणे॥ (तथा च शिक्षायाम्। १७।
"कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू॥")
अस्य स्वरूपं यथा,—
"शकारं परमेशानि! शृणु वर्णं शुचिस्मिते!।
रक्तवर्णप्रभाकारं स्वयं परमकुण्डली॥
चतुर्वर्गप्रदं देवि! शकारं ब्रह्मविग्रहम्।
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये!॥
रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा।
त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम्॥"
इति कामधेनुतन्त्रम्॥ * ॥
(बङ्गीयवर्णमालायाम्), तल्लेखनप्रकारो यथा,
"कुञ्चिता वामतो दक्षगता च गोह्यतिरेखया।
पुनरूर्द्ध्वगता तासु वह्निचन्द्रदिवाकराः।
मात्रा भवानी विज्ञेया ध्यानमस्य प्रचक्षते॥"
इति वर्णोद्धारतन्त्रम्॥ * ॥
तद्वाचकानि यथा,—
"शः सव्यश्च कामरूपी कामरूपो महामतिः।
सौख्यनामा कुमारोऽस्थि श्रीकण्ठो वृषकेतनः॥
वृषघ्नः शयनं शान्ता सुभगा विस्फुलिङ्गिनी।
मृत्युर्देवो महालक्ष्मीर्महेन्द्रः कुलकौलिनी॥
बाहुर्हंसो वियद्वक्रं हृदयं त्वङ्कुशः खलः।
वामोरुः पुण्डरीकात्मा कान्तिः कल्याण-
वाचकः॥"
इति योगिनीतन्त्रे ३भागे ७पटले वर्णाभिधानम्॥
(काव्यादावस्य प्रथमप्रयोगे सुखं फलम्। यथा, वृत्तरत्नाकरटीकायाम्।
"शः सुखं सस्तु खेदम्॥"
धात्वनुबन्धविशेषः। यथा, कविकल्पद्रुमः।
"————षो हतादिः श् तुदादिकः॥"
एतेन तुदौ शश् व्यथे तुदति इति स्यात्॥)
शं, क्ली, शुभम्। इति त्रिकाण्डशेषशब्दरत्नावल्यौ॥ (यथा, देवीभागवते। ३। १८। ७।
"न च हर्म्ये वने शं मे दीर्घिकायां न पर्व्वते॥")
शं, [म्] अ, कल्याणम्। (यथा, रातेन्द्रकर्णपुरे। ५१।
"यः कीर्त्तौ भवतो वतो नृपगुणैर्यैः शंतनुः शन्तनुः॥")
शुभम्। शास्त्रम्। इति शब्दरत्नावली॥
शः, पुं, शिवः। शस्त्रम्। इति शब्दरत्नावली॥
शंयुः, त्रि, (शं शुभमस्यास्तीति। शं + "कंशंभ्यां बभयुस्तितुतयसः।" ५। २। १३८। इति युस्।) शुभान्वितः। इति त्रिकाण्डशेषः॥ (यथा भट्टिः। ४। १८।
"कुर्व्वाणा पश्यतः शंयून् स्त्रियो सुखमानना॥")
पुं, बृहस्पतिपुत्त्रोऽग्निविशेषः। यथा, महाभारते। ३। २१८। २।
"आहुतिष्वेव यस्याग्नेर्हविषाज्यं विधीयते।
सोऽग्निर्बृहस्पतेः पुत्त्रः शंयुर्नाम महाव्रतः॥")
शंवः, पुं, मुषलाग्रस्थलौहमण्डलकः। वज्रम्। इति धरणिः॥
शंवः, त्रि, (शमस्यास्तीति। शं + "कंशंभ्यामिति।" ५। २। १३८। इति वः।) शुभान्वितः। इति त्रिकाण्डशेषः॥
शंवरं, क्ली, (शं वृणोतीति। वृ + अच्।) जलम्। इत्यमरः॥
शंस, उ हिंसास्तुत्योः। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्। क्त्वावेट्।) तालव्यादिः। उ, शंसित्वा शस्त्वा। यः शंसति सतामिति हलायुधः॥ अनेकार्थत्वात् कथनेऽप्ययम्। यथा रघौ। "शशंस वाचा पुनरुक्तयेवेति। न मे ह्रिया शंसति किञ्चिदीप्सित-मित्यादि च। इति दुर्गादासः॥
शंसा, स्त्री, (शंस + अः। स्त्रियां टाप्।) वाक्यम्। वाञ्छा। इति मेदिनी॥ प्रशंसा। इति शब्दरत्नावली॥
शंसितः, त्रि, (शंस + क्तः।) निश्चितः। इति हलायुधः॥ हिंसितः। स्तुतः। इति शन्सधातोः क्तप्रत्ययेन निष्पन्नमेतत्॥ (यथा, महाभारते। १। ११६। २५।
"ब्राह्मणाश्च महात्मानः सोमपाः शंसित-व्रताः॥")
शंस्ता, [ऋ] पुं, (शंस + "तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ।" उणा० २। ९४। इति तृन्। यद्वा, छन्दसि "ग्रसितस्कभितस्तभितेति।" ७। २। ३४। इति निपातनात् साधुः।) स्तोता। होता। इति संक्षिप्तसारोणादिवृत्तिः॥ (प्रशास्ता। यथा, ऋग्वेदे। १। १६२। ५।
"होताध्वर्युरावया अग्निमिन्धो
ग्रावग्राभ उत शंस्ता सुविप्रः॥"
"शंस्ता प्रशास्ता।" इति तद्भाष्ये सायणः॥)
शंस्थः, त्रि, (शं शुभे तिष्ठतीति। शम् + स्था + "स्थः कच।" ३।२।७७। इति कः।) शुभान्वितः। शंपूर्व्वस्थाधातोर्डप्रत्ययेन निष्पन्नमिदम्॥
शंस्थाः, त्रि, (शं + स्था + "स्थः कच।" ३। २। ७७। इति क्विप्।) शुभान्वितः। शम्-पूर्व्वष्ठाधातोः क्विप्प्रत्ययेन निष्पन्नमेतत्॥
शंस्यः, त्रि, (शंस + ण्यत्। "ईडवन्दवृशंसदुहां ण्यतः।" ६।१।२१४। इत्याद्युदात्तः।) हिंस्यः। स्तुत्यः। शन्सधातोः ध्यण्प्रत्ययेन निष्पन्नमेतत्॥
शक, इ ङ त्रासशङ्कयोः। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-त्रासे अक०-शङ्कायां सक०-सेट्।) त्रासो भयम्। शङ्का संशयारोपः। इ, शङ्क्यते व्याघ्राज्जनेन। ङ, शङ्कते पुरुषत्वं स्थाणौ। स्थाणुर्वा पुरुषो वा इति संशयमारोपयतीत्यर्थः। इति दुर्गादासः॥
शक, न इर् ऊ शक्तौ। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-अक०-सक० च-वेट्।) न, शक्नोत्यशक्यमप्याजौ विजेतुं य इति हलायुधः। इर्, अशकत् अशकीत् अशाक्षीत्। इदित्त्वे नास्मामित्यं ङ इत्यन्ये। ऊ, शकिष्यति शक्ष्यति। पृथक्पाठादयो न स्वादिः। ०दावेवानिमावित्यन्ये। षष्ठस्वरानुबन्धः केषाञ्चिदनुरोधात्। द्वावेव सकर्म्मकौ। तथा च। शक्योऽस्य मन्युर्भवता विने-

शकुनीश्वर, पुं, ( शकुनीनां पक्षिणामीश्वरः । ) गरुडः । इति धनञ्जयः ॥

शकुन्त, पुं, ( शक्नोति उत्पतितुमिति । शक + "शकेरुनोन्तोन्त्युनयः ।" उणा० ३।४९। इति उन्त । ) पक्षी । इत्यमरः ॥ ( यथा, महाभारते । १ । ७२ । ११ ।
"नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः ।
पर्य्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ॥")
कीटभेदः । भासपक्षी । इति मेदिनी ॥

शकुन्तला, स्त्री, ( शकुन्तैः पक्षिभिर्लायते पाल्यते इति । ला + घञर्थे कः । स्त्रियामाप । ) मेनकाप्सरसि विश्वामित्रेण जनिता कन्या । सा कण्वमुनिना प्रतिपालिता । दुष्मन्तराजेन विवाहिता । अस्याः पुत्त्रो भरतः राजचक्रवर्त्ती । तस्या नामकारणं यथा,—
"निर्ज्जने तु वने यस्मात् शकुन्तैः परिरक्षिता ।
शकुन्तलेति नामास्याः कृतञ्चापि ततो मया ॥"
इति महाभारते ।१।७२।१५॥
अस्या विवरणं कालिदासकृताभिज्ञानशकुन्तल नाटके द्रष्टव्यम् । पाद्मे स्वर्गखण्डे प्रथमादि पञ्चाध्यायेषु महाभारते आदिपर्व्वणि ६९ अध्यायमारभ्य ५ द्रष्टव्यम् ॥

शकुन्तलात्मज, पुं, ( शकुन्तलाया आत्मजः पुत्त्रः । ) भरतराजः । यथा,—
"दौष्मन्तिर्भरतः सर्व्वदमः शकुन्तलात्मजः ॥"
इति हेमचन्द्रः ॥

शकुन्ति, पुं, ( शक्नोति उत्पतितुमिति । शक + उन्ति । ) पक्षिमात्रम् । इत्यमरः ॥ ( यथा, ऋग्वेदे । २ । ४२ । ३ ।
"अवक्रन्द दक्षिणतो गृहाणां
सुमङ्गलो भद्रवादी शकुन्ते ॥" )
भासपक्षी । इत्युणादिकोषः ॥

शकुल, पुं, ( शक्नोति गन्तुं वेगेनेति । शक + "मद्गुरादयश्च ।" उणा० १ । ४२ । इति उरच । रस्य लः । ) मत्स्यविशेषः । इत्यमरः ॥ शउल इति भाषा ॥ ( यथा, महाभारते । १२ । ११७ । २ ।
"नातिगाधे जलाधारे सुहृदः शकुलास्त्रयः ।
प्रभूतमत्स्ये कौन्तेय ! बभूवुः सहचारिणः ॥")
अस्य गुणाः । मधुरत्वम् । रूक्षत्वम् । ग्राहित्वम् । पित्तामयित्वम् । गुरुत्वञ्च । इति राजवल्लभः ॥

शकुलगण्ड, पुं, ( शकुलस्य गण्ड इव गण्डो यस्य । ) गण्डमत्स्यः । इति त्रिकाण्डशेषः ॥

शकुलादन, पुं, श्वेतदूर्व्वा । इत्यमरः ॥

शकुलादनी, स्त्री, गण्डदूर्व्वा । इति राजनिर्घण्टः ॥

शकुलाक्षी, स्त्री, ( शकुलानां अदनं यस्याः । ङीष् । ) कटुकी । इत्यमरः ॥ कटकी इति भाषा । जलपिप्पली । इति मेदिनी ॥ काचड़ादाम इति भाषा । मांसी । शितुलिका । जलपिप्पली । कटफल । इति विश्वः ॥ गजो वचा । इति राजनिर्घण्टः ॥

शकुलार्भक, पुं, ( शकुलस्य अर्भक इव । ) गडकमत्स्यः । इत्यमरः ॥ ( गडुइमाछ इति भाषा । )

शकुली, स्त्री, ( शकुल + ङीष । ) मत्स्यविशेषः । स्गाल इति भाषा । महाशकुल इति कश्चित् । अस्या आकारो गुणाश्च ।
"शकुली रोहिताकारा भूमौ प्रायश्चरत्यसौ ।
गुर्व्वी पाके च मधुरा भेदिका दोषकोपना ॥"
इति राजवल्लभः ॥
पुस्तकान्तरे शकुली इति च पाठः ॥ ( नदीविशेषः । यथा, मार्कण्डेये । ५७ । २३ ।
"सुमेरुजा शुक्तिमती शकुली त्रिदिवा क्रमुः ।
ऋक्ष्यपादप्रसूता वै तामाम्या वेगवाहिनी ॥")

शकृत्, क्ली, ( शक्नोति सन्तुमिति । शक + "शकेऋतिन् ।" उणा० ४ । ५८ । इति ऋतिन् । ) विष्ठा । इत्यमरः ॥ ( यथा भागवते ।३।३०।१९।
"स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति ॥")

शकृत्करि, पुं स्त्री, ( शकृतं करोतीति । शकृत् + कृ + "स्तम्बशकृतोरिन् ।" ३।२।२४। इति इन् । ) वत्सः । इत्यमरः ॥ दन्त्यादिरिति विद्याविनोदः ॥

शकृत्कार, त्रि, मलत्यागकारकः । शकृत् करोति अर्थे शकृच्छब्दात् कृधातोः अण् (अच्) प्रत्ययेन निष्पन्नः ॥

शकृद्द्वार, क्ली, ( शकृतो द्वारम् । ) मलद्वारम् । तत्पर्य्यायः । अपानम् २ पायु ३ गुदम् ४ च्युति ५ अधोमर्म्म ६ त्रिवलीकं ७ वली ८ । इति हेमचन्द्रः ॥

शक्कुर, पुं, वृषः । इति हेमचन्द्रः ॥

शक्करि, पुं, वृषः । इति त्रिकाण्डशेषः ॥

शक्करी, स्त्री, छन्दोभेदः । नदीभेदः । मेखला । इति मेदिनी ॥ सा च समस्तषड्विंशति छन्दोऽन्तर्गतचतुर्दशच्छन्दः । यथा —
"उक्थात्युक्था तथा मध्या प्रतिष्ठान्या
सुपूर्व्विका ।
गायत्त्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥
त्रिष्टुप् च जगती चैव तथातिजगती मता ।
शक्करी सातिपूर्व्वा स्यादष्ट्यत्यष्टी तथा मता ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संकृतिश्चापि तथा चैवातिसंकृतिः ॥
इत्याख्या पञ्चशानां छन्दसां क्रमशः कृता ॥"
तत्र चतुर्द्दशाक्षरपादकच्छन्दांसि सन्ति । तेषां नामानि लक्षणानि यथा ।
म्तौ गौ गौ नौ म परत्वभिरलवाधा । १ ।
ज्ञेय वसन्ततिलकं तभजा जगौ गः । २ ।
नजरजलगुरौ रचैरपराजिता । ३
ननभनलगितिप्रहरणकलिका । ४ ।
मतौ नो मो गौ यदि गदिता वासन्तीयम् ।५।
इह ननरचिरं लोलामृतौ म्भौ गौ चर्म्मो चेत् ।६।
ननभिरिह यतिर्नौ सौ च नान्दीमुखीयम् ।७।
इति छन्दोमञ्जरी ॥
एतेषामुदाहरणानि बाहुल्यभिया नोक्तानि ।

शक्त, त्रि, ( शक + क्त । ) शक्तिविशिष्टः । समर्थः । तत्पर्य्यायः । क्षमः २ क्षमः ३ प्रभुः ४ उत्कः ५ । इति हेमचन्द्रः ॥ ( यथा, मनुः । ९ । २०७ ।
"भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्म्मणा ।
स निर्भाज्यः स्वकादंशात् किञ्चिद्दत्त्वोपजीवनम् ॥" )
प्रियंवदः । इति शक्तशब्दटीकायां स्वामी ॥

शक्तव, पुं भूम्नि, भ्रष्टयवादिचूर्णम् । छातु इति भाषा । यथा —
"धाना भ्रष्टयवे भूम्नि स्त्रियां पुंभूम्नि शक्तवः ।
कश्चित्तु शक्तुरस्त्रीति वस्तुरा भूमनि स्त्रियाम् ॥"
इति जटाधरः ॥
अस्य विवरणं शक्तुशब्दे द्रष्टव्यम् ॥

शक्ति, स्त्री, ( शक + क्तिन् । ) कार्य्यजननसामर्थ्यम् । यथा, —
"या देवी सर्व्वभूतेषु शक्तिरूपेण संस्थिता ।"
इति देवीमाहात्म्यटीकायां नागोजीभट्टः ॥
शक्यते जेतुमनया । सा प्रभावोत्साहमन्त्रजभेदात्त्रिधा । तत्र प्रभुत्वे साधकत्वात् कोषदण्डौ प्रभुशक्तिः १ । विक्रमेण स्वशक्त्या विस्फुरणमुत्साहशक्तिः २ । सन्ध्यादीनां सामादीनाञ्च यथावस्थानं मन्त्रशक्तिः ३ ॥ सामर्थ्यमात्रम् । तत्पर्य्यायः । द्रविणम् २ तरः ३ सहः ४ बलम् ५ शौर्य्यम् ६ स्थाम ७ शुष्मम् ८ पराक्रमः ९ प्राणः १० । इत्यमरः ॥ शुष्मः ११ सहम् १२ । इति शब्दरत्नावली ॥ ऊर्ज्जः १३ । इति जटाधरः । कान्तिः । सा तु शर्व्वलानामाक्षम् । इति नानार्थे अमरभरतौ ॥ गौरी । इति मेदिनी ॥ लक्ष्मीः । इति शब्दमाला ॥ * ॥
त्रिशक्तयो यथा,—
"एषा त्रिशक्तिरुद्दिष्टा नयसिद्धान्तगामिनी ।
एषा श्वेता परा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता ॥
एषैव रक्ता रजसि वैष्णवी परिकीर्त्तिता ।
एषैव कृष्णा तमसी रौद्री देवी प्रकीर्त्तिता ॥
परमात्मा यथा देवो एक एव त्रिधा स्थितः ।
प्रयोजनवशाच्छक्तिरेकैव त्रिविधाभवत् ॥"
इति वाराहे त्रिशक्तिमाहात्म्यनामाध्यायः ॥*॥
अपि च ।
"बिन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं
स्मृतम् ।
तयोर्योगे भवेन्नादस्तेभ्यो जातास्त्रिशक्तयः ॥"
इति क्रियासारः ॥
अन्यच्च ।
"इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी ।
त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरो-
मिति ॥"
इति गोरक्षसंहिता ॥*॥
अष्ट शक्तयो यथा,—
"इन्द्राणी वैष्णवी शान्ता ब्रह्माणी ब्रह्मवादिनी ।
कौमारी नारसिंही च वाराही विकटाकृतिः ।
माहेश्वरी महामाया भैरवी भीमरूपिणी ।
अष्टौ च शक्तयः सर्व्वा रक्षस्तु प्रययुर्म्मुदा ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे बाणयुद्धं नाम
११९ अध्यायः ॥*॥

नव शक्तयो यथा,—
"नव पद्मे चाष्टदले मध्ये च भक्तिपूर्व्वकम् ।
वैष्णवीञ्चैव ब्रह्माणीं रौद्रीं माहेश्वरीं तथा ॥
नारसिंहीञ्च वाराहीमिन्द्राणीं कार्त्तिकीं तथा ।
सर्व्वशक्तिस्वरूपाञ्च प्रधानां सर्व्वमङ्गलाम् ॥
नवशक्तीश्च संपूज्य घटे देवांश्च पूजयेत् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६१ अध्यायः ॥ *॥
पञ्चाशद्विष्णुशक्तयो यथा,—
"कीर्त्तिः कान्तिस्तुष्टिपुष्टी धृतिः शान्तिः क्रिया दया ।
मेधा सहर्षा श्रद्धा स्याल्लज्जा लक्ष्मीः सरस्वती ॥
प्रीती रती रमा प्रोक्ताः क्रमेण स्वरशक्तयः ।
जया दुर्गा प्रभा सत्या चण्डा वाणी विलासिनी ॥
विरजा विजया विश्वा विनदा सुनदा स्मृतिः ।
ऋद्धिः समृद्धिः शुद्धिश्च भक्तिर्मुक्तिर्मतिः क्षमा ॥
रमोमा क्लेदिनी क्लिन्ना वसुदा वसुधा परा ।
परा परायणा सूक्ष्मा सन्ध्या प्रज्ञा प्रभा निशा ॥
अमोघा विद्युता चेति शक्तयः सर्व्वकामदाः ।
एताः प्रियतमाङ्केषु निषण्णाः सस्मिताननाः ॥
विद्युद्दामसमानाङ्गाः पङ्कजाभयबाहवः ॥" *॥
पञ्चाशद्रुद्रशक्तयो यथा,—
"गुणोदरी स्याद्विरजा शाल्मली तदनन्तरम् ।
लोलाक्षी वर्त्तुलाक्षी च दीर्घघोणा समीरिता ॥
सुदीर्घमुखीगोमुख्यौ दीर्घजिह्वा तथैव च ।
कुण्डोदर्य्यूर्द्धकेश्यौ च तथा विकृतमुख्यपि ॥
ज्वालामुखी ततो ज्ञेया पश्चादुल्कामुखी ततः ।
सुश्रीमुखी चैव विद्यामुख्येताः स्वरशक्तयः ॥
महाकालीसरस्वत्यौ सर्व्वसिद्धिसमन्विते ।
गौरी त्रैलोक्यविद्या स्यान्मन्त्रशक्तिस्ततः परम् ॥
आत्मशक्तिर्भूतमाता तथा लम्बोदरी स्मृता ।
द्राविणी नागरी भूयः खेचरी चापि मञ्जरी ॥
रूपिणी चित्रिणी पश्चात् काकोदर्य्यपि पूतना ।
स्याद्भद्रकाली योगिन्यौ शङ्खिनी गर्ज्जिनी तथा ॥
कालरात्रिश्च कुब्जिन्या कपर्दिन्यपि वज्रया ।
जया च सुमुखेश्वर्य्यौ रेवती माधवी ततः ॥
वारुणी वायवी प्रोक्ता पश्चाद्रक्षोविदारिणी ।
ततश्च सहजा लक्ष्मीर्व्यापिनी माययान्विता ॥
एता रुद्राङ्कपीठस्थाः सिन्दूरारुणविग्रहाः ॥
रक्तोत्पलकपालाभ्यामलङ्कृतकराम्बुजाः ॥"
इति प्रपञ्चसारः ॥ *॥
कुलशक्तयो यथा,—
"शक्तयः परमेशानि ! विदग्धाः सर्व्वयोषितः ।
नटी कापालिकी वेश्या मालिनी कुङ्कुमालिनी ॥
चाण्डाली च कुलाली च रजकी नापिताङ्गना ।
गोपिनी योगिनी शुद्रा ब्राह्मणी राजकन्यका ॥
काचाङ्गना च देवेशि ! तथैव शङ्खकारिणी ।
एता षड्विंशतिः कन्या देवानामपि दुर्लभाः ॥
दैवज्ञा व्याधवामा च तथा मांसापहारिणी ।
बौद्धा च यवनी देवि तथा रसपचारिणी ॥
वेश्या चतुर्व्विधा प्रोक्ता द्विविधा कुङ्कुमालिनी ।
धीवरी द्विविधा प्रोक्ता तथैव गणिकाङ्गना ॥
कुम्भकारी द्विधा प्रोक्ता तथैव गोपिनी स्मृता ।
घातवैद्याङ्गना देवि यवनी द्विविधा स्मृता ॥
बौद्धकन्या त्रिधा देवि तथा कोचाङ्गना प्रिया ।
पूर्व्वोक्ताभिः सहैकत्र चतुःषष्टिश्च शक्तयः ॥"
इति रेवतीतन्त्रे ३ पटलः ॥ *॥
अपि च ।
"पश्वाचारेण देवेशि ! कुलशक्तिं प्रपूजयेत् ।
नटी कापालिकी वेश्या रजकी नापिताङ्गना ॥
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ।
मालाकारस्य कन्या च नव कन्या प्रकीर्त्तिताः ।
विशेषवैदग्ध्ययुताः सर्व्वा एव कुलाङ्गनाः ।
रूपयौवनसम्पन्ना शीलसौभाग्यशालिनी
पूजनीया प्रयत्नेन ततः सिद्धिर्भवेद् ध्रुवम् ॥"
इति गुप्तसाधनतन्त्रे १ पटलः ॥ *॥
तस्याः प्रशंसा यथा ।
"शक्तिं विना महेशानि ! सदाहं शवरूपकः ।
शक्तियुक्तो यदा देवि ! शिवोऽहं सर्व्वकामदः ॥
शक्तियुक्तं जपेन्मन्त्रं न मन्त्रं केवलं जपेत् ।
सावित्रीसहितो ब्रह्मा सिद्धोऽभूद्गगनन्दिनि ॥
द्वारवत्यां कृष्णदेवः सिद्धोऽभूत् सत्यया सह ।
तथा कोचवधूसङ्गात्मम सिद्धिर्व्वरानने ॥
ईश्वरोऽहं महादेवि ! केवलं शक्तियोगतः ।
शक्तियोगेन देवेशि यदि सिद्धिर्न जायते ॥
तदैव परमेशानि मम वाक्यं वृथा भवेत् ।
यद्दत्तं जलगण्डूषं शक्तिवक्त्रे सुरेश्वरि ! ॥
सिन्धुरूपं महेशानि ! तज्जलं नात्र संशयः ।
स्त्रीयेष्टदेवीभावेन भोजयेत्ताञ्च यत्नतः ॥
शक्तिश्च कथ्यते देवि शृणुष्व सुरसुन्दरि ।
त्रयोदशाब्दादूर्द्ध्वं या पञ्चविंशतिवार्षिकी ॥
अप्रसूता विशेषेण प्रथमेऽपि भवेत् प्रिये ।
सुन्दरी तु विशेषेण प्रसूता वाप्रसूतिका ॥
अवश्यं पञ्चमं कुर्य्यात् शक्तिमात्रे महेश्वरि ॥"
इति शक्तिकागमसर्व्वस्वम् ॥ *॥
तस्या उत्पत्तिमाहात्म्यादिर्यथा,—
नारायण उवाच ।
"सह बुद्ध्या बुद्धिमन्तो न यत्नुश्चितं सराः ।
सर्व्वे शक्त्यालया विश्वे शक्तिमन्तो हि जीविनः ॥
ब्रह्मादितृणपर्य्यन्तं सर्व्वं प्राकृतिकं जगत् ।
सत्यं नित्यं विना साञ्च मया शक्तिः प्रकाशिता ॥
आविर्भूता च सा मत्तः सृष्टौ देवी मदीच्छया ।
तिरोहिता च सा शेषे सृष्टिसंहरणे मयि ।
सृष्टिकर्त्री च प्रकृतिः सर्व्वेषां जननी परा ।
मम तुल्या च मन्माया तेन नारायणी स्मृता ।
सुचिरञ्च तपस्तप्तं शम्भुना ध्यायता च माम् ।
तेन तस्मै मया दत्ता तपसां फलरूपिणी ॥
व्रतञ्च लोकशिक्षार्थमस्या न स्वार्थमेव च ।
स्वयं व्रतानां तपसां फलदात्री नरोत्तमे ॥
मायया मोहिताः सर्व्वे किमस्या वास्तवं व्रतम् ।
साध्यमस्या व्रतफलं कल्पे कल्पे पुनः पुनः ॥
सुरेश्वरा यदंशाश्च ब्रह्मविष्णुमहेश्वराः ।
कलाः कलांशरूपाश्च जीविनश्च सुरादयः ॥
मृदा विना कुलालश्च घटं कर्त्तुं यथाक्षमः ।
विना स्वर्णं स्वर्णकारः कुण्डलं कर्त्तुमक्षमः ॥
विना शक्त्या तथाहञ्च स्वसृष्टिं कर्त्तुमक्षमः ।
शक्तिप्रधाना सृष्टिश्च सर्व्वदर्शनसम्मता ॥
अहमात्मा च निर्लिप्तोऽदृश्यः साक्षी च देहिनाम् ।
देहाः प्राकृतकाः सर्व्वे नश्वराः पाञ्चभौतिकाः ॥
अहं नित्यशरीरी च भक्तानुग्रहविग्रहः ।
सर्व्वाधारा च प्रकृतिः सर्व्वात्माहं जगत्सु च ॥
अहमात्मा मनो ब्रह्मा ज्ञानरूपो महेश्वरः ।
पञ्च प्राणाः स्वयं विष्णुर्बुद्धिः प्रकृतिरीश्वरी ॥
शक्त्यो निद्रादयश्चैताः सर्व्वाश्च प्रकृतेः कलाः ।
सा च शैलेन्द्रकन्येयं इति वेदनिरूपितम् ॥"
इति ब्रह्मवैवर्त्ते गणेशखण्डे ७ अध्यायः ॥ *॥
अपि च ।
"सा शक्तिः सृष्टिकाले च पञ्चधा चेश्वरेच्छया ।
राधा पद्मा च सावित्री दुर्गा देवी सरस्वती ॥
प्राणाधिष्ठातृदेवी या कृष्णस्य परमात्मनः ।
प्राणाधिकप्रियतमा सा राधा परिकीर्त्तिता ॥
ऐश्वर्य्याधिष्ठातृदेवी सर्व्वमङ्गलकारिणी ।
परमानन्दरूपा च सा लक्ष्मीः परिकीर्त्तिता ॥
विद्याधिष्ठातृदेवी या परमेशस्य दुर्लभा ।
वेदशास्त्रयोगमाता सा सावित्री प्रकीर्त्तिता ॥
बुद्ध्यधिष्ठातृदेवी या सर्व्वशक्तिस्वरूपिणी ।
सर्व्वज्ञानात्मिका सर्व्वा सा दुर्गा दुर्गनाशिनी ॥
वागधिष्ठातृदेवी या शास्त्रज्ञानप्रदा सदा ।
कृष्णकण्ठोद्भवा या च सा च देवी सरस्वती ॥
पञ्चधादौ स्वयं देवी मूलप्रकृतिरीश्वरी ॥
ततः सृष्टिक्रमेणैव बहुधा कलया च सा ।
योषितः प्रकृतेरंशाः पुमांसः पुरुषस्य च ॥
इति च ब्रह्मवैवर्त्ते गणेशखण्डे ४० अध्यायः ॥ *॥
ब्रह्माणीशक्त्युत्पत्तिर्यथा,
"ततो ब्रह्मादयो देवा भयं जग्मुः सवासवाः ।
यदि स्यान्निर्ज्जितो देवः क्षयः सर्व्वदिवौकसाम् ॥
एतस्मिन्नन्तरे शक्र ! ब्रह्मा चिन्तयते क्रियाः ।
स्त्रीरूपधारिणी भूत्वा सहायत्वं महेश्वरे ॥
क्षिप्रं कुरु स्वकार्य्ये त्वं एवं विश्वेश्वरे रणे ।
ततो चोदितवान् शम्भुः स्वशक्तिं किरणोज्ज्वलाम् ॥
ब्रह्मरूपधरां किन्तु ललनाकारविग्रहाम् ।
हंसस्यन्दनमारूढ़ा स्वकीयायुधधारिणी ॥
तर्ज्जयन्ती महौघेन दानवानां भयङ्करी ।
तस्य घोराणि कर्म्माणि दृष्ट्वा स विस्मयन् शिवः ॥
का पुनः सृष्टः सुश्रेष्ठा सदातिप्रतिपक्षजित् ।
तस्याः शक्तिं द्वितीयाञ्च सृजामि अपराजिताम् ॥"
इति देवीपुराणे घरवधे ब्रह्माण्युत्पत्तिः ॥ *॥
मन्त्राणां शक्तिमन्त्रविचारनिषेधो यथा ।
"योऽसावनादिमध्यान्तशिवशक्तिमयः परः ।
तस्यैव परमानन्दा सर्व्वकिल्विषनाशिनी ॥
तत्प्रभावेण प्राप्नोति तपोयज्ञादिकं फलम् ।
मन्त्राणां देवशक्तीनां न विचारो वराङ्गने ॥"
इति देवीपुराणे नन्दाकुण्डप्रदेशः प्रथमाध्यायः ॥ *॥

शक्यतावच्छेदकं, त्रि, (शक्यताया अवच्छेदकम् ।) शक्यांशे भासमानधर्म्मः । यथा ।
"एवञ्च तादृशधर्म्मस्य शक्यतावच्छेदकत्वं दुर्व्वारमेव ।" इति शक्तिवादः ॥

शक्रः, पुं, (शक्नोति दैत्यान् नाशयितुम् । शक + "स्फायितञ्चीति ।" उणा० २।१३ । इति रक् ।) इन्द्रः । इत्यमरः । (यथा, रघुः । ३ । ३८ ।
"धनुर्भृतामग्रत एव रक्षिणां
जहार शक्रः किल गूढ़विग्रहः ॥")
कुटजवृक्षः । अर्ज्जुनवृक्षः । इति मेदिनी ॥ ज्येष्ठानक्षत्रम् । यथा,—
"शक्रो निर्म्मलितस्तोयं विश्वविरिञ्चौ हरिर्वसु-
वरुणः ।
अजपादोऽहिब्रध्नः पूषा चेतीश्वरा भानाम् ॥"
इति ज्योतिस्तत्त्वम् ॥

चतुर्द्दशेन्द्रा यथा,—
"विश्वभुक् च विपश्चिच्च सुचित्तिः शिविरेव च ।
विभुर्मनोजवश्चैव सर्व्वोजस्वी बलिस्तथा ॥
अद्भुतश्च तथा शान्तिस्तथा देवपरो वृषः ।
ऋतधामा दिवःस्वामी शुचिः शक्राश्चतुर्द्दश ॥"*
ब्राह्मदिनमासाब्देषु इन्द्राणां नाशसंख्या यथा ।
"ब्राह्मे दिने वै नश्यन्ति चतुर्द्दश पुरन्दराः ।
शतानि मासि चत्वारि विंशत्या सहितानि च ।
अब्दे पञ्चसहस्राणि चत्वारिंशच्छतानि च ॥"
इत्याद्ये वह्निपुराणे गणभेदनामाध्यायः ॥*॥

इन्द्रत्वप्राप्तिकारणं यथा,—

इन्द्र उवाच ।

"रमाकान्त भवत्प्रीत्यै कृतं क्रतुशतं पुरा ।
तेन पुण्येन सम्प्राप्तं मया पौरन्दरं पदम् ॥
इदानीं नूतनः कोऽपि जातो दिवि पुरन्दरः ।
न तेन धर्म्मो विहितो न तेन क्रतवः कृताः ।
मम सिंहासनं दिव्यं कथमाक्रान्तमच्युत ॥
इत्येवं वदतस्तस्य श्रुत्वा वाक्यं रमापतिः ।
उन्मीलितस्मिताधरोऽप्याजुवाच मधुरं वचः ॥

श्रीभगवानुवाच ।

देवाद्यो मनुष्यान्ता मम सेवापरायणाः ।
मद्ध्यानजनरता लोका मद्भक्तिस्तुतिपाठकाः ॥
मन्मूर्त्तिषु कृतध्याना मद्यात्राश्रवणा इह ।
मत्पादोदकनैवेद्यभोजिनोऽन्नधनेव ये ॥
मन्नामकीर्त्तनपरा मम स्तुतिपरायणाः ।
मन्मन्त्रजापका नित्यमनन्याश्रयसम्पदः ॥
किं विधित्वं किमिन्द्रत्वं देवत्वमपरं किमु ।
तेषामलभ्यं यत्किञ्चित् दुर्लभं नास्ति संसृतौ ॥
किं दानैरल्पफलदैः किं तपोभिः किमध्वरैः ।
सेव्यमानैः क्षितितले स मम प्रीतिमान् सदा ॥

इन्द्र उवाच ।

भगवन् कर्म्मणा केन स त्वत्प्रीतिपरो भवेत् ।
तद्वदस्व महाबाहो प्रपन्नभयभञ्जन ॥

श्रीभगवानुवाच ।

अनेकधा मद्भजनं मम प्रीतिकरं परम् ।
यद्भक्त्या तत् पदं लेभे तत् शृणुष्व पुरन्दर ॥
जपत्यष्टादशाध्यायगीतानां श्लोकपञ्चकम् ।
तया भक्त्या तु संप्राप्तं तव साम्राज्यमुत्त-
मम् ॥"
इति पाद्मोत्तरखण्डे ८६ अध्यायः ॥
(समर्थे, त्रि । यथा, ऋग्वेदे । ४ । १६ । ६ ।
"विश्वानि शक्रो नर्य्याणि विद्वा-
नपो रिरेच सखिभिर्निकामैः ॥"
"विद्वान् जानन् शक्रः समर्थ इन्द्रः ।" इति तद्भाष्ये सायणः ॥)

शक्रक्रीड़ाचलः, पुं, (शक्रस्य क्रीड़ाचलः क्रीड़ा-पर्व्वतः ।) सुमेरुपर्व्वतः । इति हलायुधः ॥

शक्रगोपः, पुं, इन्द्रगोपकीटः । इति जटाधरः ॥ (यथा, हरिवंशे । ६६ । ५ ।
"नववर्षावसिक्तानि शक्रगोपाकुलानि च ।
नष्टदावाग्निमार्गाणि वनानि प्रचकाशिरे ॥")

शक्रजः, पुं, (शक्राज्जायते इति । जन + डः ।) काकः । इति त्रिकाण्डशेषः ॥ इन्द्रजाते, त्रि ॥

शक्रजातः, पुं, (शक्राज्जातः ।) काकः । इति शब्दरत्नावली ॥ इन्द्रजाते, त्रि ॥

शक्रजित्, पुं, (शक्रं जितवानिति । जि + क्विप् ।) रावणपुत्त्रः । इति त्रिकाण्डशेषः ॥ (यथा, रघुः । १४ । ८३ ।
"अपि प्रभुः सानुशयोऽधुना स्यात्
किमुत्सुकः शक्रजितोऽपि हन्ता ॥")
इन्द्रजेतरि, त्रि ॥

शक्रद्रुमः, (शक्रस्य द्रुमः ।) देवदारुवृक्षः । इति भावप्रकाशः ॥

शक्रधनुः, [स्] क्ली, (शक्रस्य धनुः ।) इन्द्रधनुः । इत्यमरः ॥ रामधनु इति रामधनुक इति च भाषा ॥
"इन्द्रायुधं शक्रधनुः कौशिकायुधमित्यपि ।
ऐरावतं रोहितं स्याद्वक्रं यदि तद्धनुः ॥"
इति शब्दरत्नावली ॥
(यथा, महाभारते । ५ । ५६ । ११ ।
"यथाकाशे शक्रधनुः प्रकाशते
न चैकवर्णं न च वेद्मि किन्नु तत् ॥")

शक्रध्वजः, (शक्रस्य ध्वजः ।) इन्द्रध्वजः । (यथा, आर्य्यासप्तशत्याम् । २६८ ।
"ते श्रेष्ठिनः क्व सम्प्रति शक्रध्वज ! यैः कृत-
स्तवोच्छ्रायः ।
ईषां वा मेढिं वाधुनातनास्त्वां विधित्सन्ति ॥")
तद्विवरणं यथा,—

वृषवाहन उवाच ।

"भगवन् श्रोतुमिच्छामि तस्य उत्थापनं यथा ।
क्रियते दिन ऋक्षञ्च द्रव्यमन्त्रविधिं वद ॥

अगस्त्य उवाच ।

नृपाणां कथितं शक्र बृहस्पतिसमीपतः ।
यथा तथा प्रवक्ष्यामि विधिं केतोः समुच्छ्रये ॥

बृहस्पतिरुवाच ।

शुभाहे ऋक्षे करणे मुहूर्त्ते शुभमङ्गले ।
दैवज्ञः सूत्रधारश्च वनं गच्छेत् सहायवान् ॥
देवीप्रतिष्ठाविधिना यात्रायां या प्रचोदिता ।
गत्वा वृक्षं शुभं पुण्यं धवार्ज्जुनप्रियङ्करम् ॥
उदुम्बराजकर्णञ्च पञ्चैते शोभना हरेः ।
ध्वजार्थे वर्जयेद्वृक्षं देव उद्यानजान् द्रुमान् ॥
कन्या मध्ये तु या यष्टी करमानेन कल्पयेत् ।
एकादशकरा वत्स नव पञ्च करापरा ॥
जरालतां कृमिच्छितां तथा पक्षिनिकेतनाम् ।
वल्मीकपिठवनजां सुशुष्ककोटरान्तराम् ॥
कुब्जाञ्च चटसिक्ताञ्च तथा स्त्रीनामगर्हिताम् ।
विद्युद्वज्रहताञ्चैव दग्धाञ्च परिवर्जयेत् ॥
अलाभे चन्दनं चाम्रं शालशाकमयं तथा ।
कर्त्तव्यं शक्रचिह्नार्थे न चान्यं वृक्षजं क्वचित् ॥
शुभभूमिभवं ग्राह्यं शुभतोयं शुभावहम् ।
ततः संपूजयेद्वृक्षं प्राङ्मुखोदङ्मुखोऽपि वा ॥
नमो वृक्षपते वृक्ष त्वामर्च्चयति पार्थिवः ।
ध्वजार्थं तत्त्वतो नाथ अन्यथा उपगम्यताम् ॥
रात्रौ देयो बलिस्तत्र शुगर्घ्ये लघव च ।
वासवानां महावृक्षं ज्ञात्वा कान्यत्र गम्यताम् ॥
ध्वजार्थे देवराजस्य न चाग्निस्तत्र अत्र च ।
पूजयित्वा ततो वृक्षं बलिं भूताय दापयेत् ॥
प्रभाते छेदयेद्वृक्षं शुभस्वप्नादिदर्शनैः ।
मुक्ताम्बरधरश्चैव समुन्नतरणं नदी ॥
वृक्षान्नस्मान् शुभान् चौरानारोहेत देवतर-
लयम् ।
देयो द्विजस्तथा साधुलिङ्गवृक्षा हरेरपि ॥
प्रतिमा पूजिता स्वप्ने क्षिप्रं सिद्धिफलप्रदा ।
मत्स्यमांसदधिलाभं रुधिरं स्तरोदनम् ॥
अगम्यागमनं दृष्ट्वा आशु सिद्धिफलप्रदम् ।
इमांस्तिलं धनं धान्यं शत्रुनाशं यथा शुभम् ॥
फलं पुष्पं सिता दूर्व्वा स्वप्ने लब्धा जयावहाः ।
शङ्खगावस्तथा दन्तिलाभा राज्यप्रदायकाः ॥
गौः सवत्सा नवसुना दृष्टा पुत्त्रफलप्रदा ।
पङ्कस्योदरगं कूपे व्याधिमोक्षकरं चिरात् ॥
एवं स्वप्नान् शुभान् दृष्ट्वा तथा छिन्देत पाद-
पम् ।
उदङ्मुखः प्राङ्मुखो वा मधुवज्राक्तपर्शुना ॥
पूर्व्वोत्तरे च पतनं शस्तोऽशब्दोऽव्रणः शुभः ।
अलंघपादपे चान्ये अन्यथा तु परित्यजेत् ॥
चतुरङ्गुलं त्यजेत् मूले चाग्रे तत्तु जले क्षिपेत् ।
तथा तमानयेद्वत्स शकटेन वृषैरपि ॥
युवानैर्वलसम्पन्नैर्नेयं तत्पुरतः परम् ।
नीयमाना यदा यष्टी समा वा चतुरस्रका ॥
हृता वा भङ्गमाधत्ते राज्ञः पुत्त्रं पुरोहितम् ।
अरभङ्गे बलं भिन्द्याद्राज्यनाशं क्षयं तथा ॥
अर्थस्य अक्षभङ्गेन शान्तिन्तत्र तु कारयेत् ।
इन्द्रर्णच्छत्रमन्त्रेण जातदेवसमापि वा ॥
तथा नीत्वा शुभे लग्ने पुरस्तादुपवेशयेत् ।
द्वारशोभां पथरथ्या गृहे हट्टे च कारयेत् ॥
यदा पटहनादाश्च वेश्याशङ्खद्विजातयः ।
मङ्गलैर्वेदशब्दैश्च ता नेया यत्र उच्छ्रयेत् ॥
तत्रस्याश्चित्रकर्म्मावनिर्म्मितैस्तान्तु वेष्टयेत् ।
वस्त्रैरक्तजरोमोत्थैः शुभैः शुक्लैर्यथाक्रमम् ॥
नन्दोपनन्दसंज्ञाश्च कुमार्य्यः प्रथमांशगाः ।
देव्यो जयविजयाख्याः षोड़शांशव्यवस्थिताः ॥

कुब्जं दृष्टादग्धीयुक्तं लताच्छन्नं तरुं त्यजेत् ॥
पक्षिवाससमाकीर्णं कोटरैर्बहुभिर्युतम् ।
पवनानलविध्वस्तं तरुं यत्नेन वर्जयेत् ॥
नारीसंज्ञाश्च ये वृक्षा अतिह्रस्वा अतिकृशाः ।
तान् सदा वर्जयेद्धीरः सर्व्वदा शक्रपूजने ॥
अर्ज्जुनोऽप्यश्वकर्णश्च प्रियको धव एव च ।
औडुम्बरश्च पञ्चैते केतवे सत्तमाः स्मृताः ॥
अन्ये च देवदार्व्वाद्याः शालाद्यास्तरवस्तथा ।
प्रशस्तास्तु परिग्राह्या नाप्रशस्ताः कदाचन ।
तत्र वृक्षं ततो राजा स्पृष्ट्वा मन्त्रमिमं पठेत् ॥
यानि वृक्षे तु भूतानि तेभ्यः स्वस्ति नमोऽस्तु वः ।
उपहारं गृहीत्वेमं क्रियतां वासवध्वजः ॥
पार्थिवस्त्वां वरयते स्वस्ति तेऽस्तु नगोत्तम ।
ध्वजार्थं देवराजस्य पूजेयं प्रतिगृह्यताम् ॥
ततोऽपरेऽह्नि तं छित्त्वा मूलमष्टाङ्गुलं पुनः ।
जले क्षिपेत्तदग्रस्य छित्त्वैवं चतुरङ्गुलम् ॥
ततो नीत्वा पुरद्वारं केतुं निर्म्माय तत्र वै ।
शुक्लाष्टम्यां भाद्रपदे केतुं वेदीं प्रवेशयेत् ॥
द्वाविंशद्धस्तमानस्तु अधमः केतुरुच्यते ।
द्वात्रिंशत्तु ततो ज्यायान् द्वाचत्वारिंशदेव च ।
ततोऽधिकः समाख्यातो द्वापञ्चाशत्तयोत्तमः ।
कुमार्य्यः पञ्च कर्त्तव्याः शक्रस्य नृपसत्तम ।
शालमय्यस्तु ताः सर्व्वाश्चपराः शक्रमातृकाः ॥
केतोः पादप्रमाणेन कार्य्याः शक्रकुमारिकाः ॥
मातृकार्द्धप्रमाणास्तु यन्त्रं हस्तद्वय तथा ।
एवं कृत्वा कुमारीश्च मातृकां केतुमेव च ॥
एकादश्यां सिते पक्षे यष्टिं तामधिवासयेत् ।
अधिवास्य ततो यष्टिं गन्धद्वारादिमन्त्रकैः ॥
द्वादश्यां मण्डलं कृत्वा वासवं विस्तृतात्मकम् ।
अच्युतं पूजयित्वा तु शक्रं पश्चात् प्रपूजयेत् ॥
शक्रस्य प्रतिमां कुर्य्यात् कानकीं दारवीं तथा ।
अन्यतैजसभूतां वा सर्व्वाभावे तु मृण्मयीम् ॥
तां मण्डलस्य मध्ये तु पूजयित्वा विशेषतः ।
ततः शुभे मुहूर्त्ते तु केतुमुत्थापयेन्नृपः ॥
वज्रहस्त सुरारिघ्न बहुनेत्र पुरन्दर ।
क्षेमार्थं सर्व्वलोकानां पूजेयं प्रतिगृह्यताम् ॥

एह्येहि सर्व्वामरसिद्धसंघै-
रभिष्टुतो वज्रधरामरेश ।
समुत्थितस्त्वं श्रवणाद्यपादे
गृहाण पूजां भगवन् नमस्ते ॥

एवमुत्तरतन्त्रोक्तैर्द्दृढनजवनादिभिः ।
इति मन्त्रेण तन्त्रेण नानानैवेद्यवेदनैः ॥
आपूपैः पायसैः पानैर्गुडैर्धानाभिरेव च ।
भक्ष्यैर्भोज्यैश्च विविधैः पूजयेच्छ्रीविवृद्धये ॥
घटेषु दशदिक्पालान् ग्रहांश्च परिपूजयेत् ।
साध्यादीन् सकलान्देवान् मातॄः सर्व्वाश्च तु-
क्रमात् ॥
ततः शुभे मुहूर्त्ते तु शानिवर्द्धकिसंयुतः ।
केतोरुत्थानभूमिन्तु यज्ञवेद्याश्च पश्चिमे ।
विप्रैः पुरोहितैः सार्द्धं गच्छेद्राजा सुमङ्गलैः ॥
रज्जुभिः पञ्चभिर्बद्धं यन्त्रस्थं समातृकम् ।
कुमारीभिश्च संयुक्तं दिक्पालानाञ्च पेटकैः ॥”

पेटकैः स्थाने पट्टकैरिति च पाठः ।
“दृढैश्चिरतिकाम्नैश्च नानाद्रव्यसुपूरितैः ।
यथावर्णैर्यथादेशयोजितैर्व्वस्त्रवेष्टितैः ॥
युक्तं तं किङ्किणीजालैर्द्दृढघण्टौघचामरैः ।
भूषितं मकुटैश्च मालैर्व्वहुविधैस्तथा ॥
बहुपुष्पैः सुगन्धैश्च भूषितं रत्नमालया ।
चित्रमाल्याम्बरधरैश्चतुर्भिरपि तोरणैः ॥
उत्थापयेन्महाकेतुं राजामात्यैः शनैः शनैः ।
समुत्थाप्य महाकेतुं पूजितं मण्डलान्तरे ॥
प्रतिमां तां नयेन्मूलं केतोः शक्रं विचिन्तयन् ।
यजेत् पूर्व्ववत्तत्र शचीं मातलिमेव च ॥
जयन्तं तनयं तस्य वज्रमैरावतं तथा ।
ग्रहांश्चाप्यथ दिक्पालान् सर्व्वांश्च गणदेवताः ॥
अपूपाद्यैः पूजयेत्तु बलिभिः पायसादिभिः ।
पूजितानाञ्च देवानां शक्रहोमं समाचरेत् ॥
होमान्ते तु बलिं दद्यात् वासवाय महात्मने ॥
तिलं घृतं चाक्षतञ्च पुष्पं दूर्व्वां तथैव च ।
एतैस्तु जुहुयाद्देवान् स्वैः स्वैर्म्मन्त्रैर्नरोत्तमः ॥
ततो होमावसाने तु भोजयेदपि ब्राह्मणान् ।
एवं संपूजयेन्नित्यं सप्तरात्रं दिने दिने ॥
ब्राह्मणैः सहितो राजा वेदवेदाङ्गपारगैः ।
सर्व्वत्र शक्रपूजासु यज्ञेषु परिकीर्त्तितः ॥
त्रातारमिति मन्त्रोऽयं वासवस्य प्रियः सदा ।
एवं कृत्वा दिवाभागे शक्रोत्थापनमादितः ॥
श्रवणर्क्षयुतायान्तु द्वादश्यां पार्थिवः स्वयम् ।
अन्त्यपादे भरण्यास्तु निशि शक्रं विसर्ज्जयेत् ॥
सुप्तेषु सर्व्वलोकेषु यथा राजा न पश्यति ।
षण्मासान्मृत्युमाप्नोति राजा दृष्ट्वा विसर्ज्जनम् ॥
शक्रस्य नृपशार्द्दूल तस्मान्नेक्षेत तं नृपः ।
विसर्ज्जनस्य मन्त्रोऽयं पुराङ्गिरदुदीरितः ॥
सार्द्धं सुरासुरगणैः पुरन्दर शतक्रतो ।
उपहारं गृहीत्वेमं महेन्द्रध्वज गम्यताम् ॥
सूतके तु समुत्पन्ने वारे भौमस्य वा शनेः ।
भूमिकम्पादिकोत्पाते वासवं न विसर्ज्जयेत् ॥
उत्पाते सप्तरात्रन्तु तथोपप्लवदर्शने ।
अतीत्य शनिभौमौ च ह्यन्यर्क्षेऽपि विसर्ज्जयेत् ॥
मृतके त्वथ संप्राप्ते अतीते सूतके पुनः ।
तस्मिंस्तस्मिन् दिने चैव सूतकान्ते विसर्ज्जयेत् ॥
तथा रक्षेन्नृपः केतुं पतन्ति शकुना यथा ।
न केतौ नृपशार्द्दूल यावन्नपि विसर्ज्जनम् ॥
शनैः शनैः पातयेत्तु यथोत्थापनमादितः ।
कृतं तथान्यथा भग्ने केतौ मृत्युमवाप्नुयात् ॥
विसृष्टं शक्रकेतुं तं सालङ्कारं तथा निशि ।
क्षिपेदनेन मन्त्रेण त्वगाधे सलिले नृपः ॥
तिष्ठ केतो महाभाग यावत् संवत्सरं जले ।
भवाय सर्व्वलोकानामन्तरायविनाशक ॥
उत्थापयेत्तूर्य्यरवैः सर्व्वलोकस्य वै पुरः ।
रात्रौ विसर्ज्जयेत् केतुं विशेषोऽयं प्रपूजने ॥
एवं यः कुरुते पूजां वासवस्य महात्मनः ।
स चिरं पृथिवीं भुक्त्वा वासवं लोकमाप्नुयात् ॥
न तस्य राज्ये दुर्भिक्षं नेतयो नाप्यधर्म्मकृत् ।
स्वास्यन्ति मृत्युर्नाकाले जनानां तत्र जायते ॥
तत्तुल्यः कोऽपि नान्योऽस्ति प्रियः शक्रस्य
पार्थिव ।
तस्य पूजा सर्व्वपूजा केशवाद्याश्च तद्गताः ॥
सकलकलुषहारि व्याधिदुर्भिक्षनाशि
सकलभवनिवेशं सर्व्वसौभाग्यकारि ।
सुरपतिगणनामोद्घोषणं शक्रकेतोः
प्रतिशरदमनेकैः पूजयेन श्रीविवृद्ध्यै ॥”
इति श्रीकालिकापुराणे ८८ अध्यायः ॥

**शक्रोत्सवः**, पुं, ( शक्रस्योत्सवः । ) इन्द्रस्य उत्सवः । तत्पर्य्यायः । ध्वजोत्थानम् २ । इति त्रिकाण्डशेषः ॥ ( यथा, महाभारते । १ । ६३ । २७ ।
“वरदानमहायज्ञैस्तथा शक्रोत्सवेन च ।
संपूजितो मघवता वसुश्चेदीश्वरो नृपः ॥”)
अस्य विवरणं शक्रोत्थानशब्दे द्रष्टव्यम् ॥

**शक्लः**, पुं, (शक + “मृडशकवधिभ्यः क्लः ।” उणा० ४ । १०८ । इति क्लः । ) प्रियंवदः । इति शक्लशब्दटीकायां भरतः ॥

**शक्वरः**, पुं, वृषः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**शक्वरी**, स्त्री, ( शक्नोति कर्म्माणि कर्त्तुमिति । शक + “स्नामदिपदीति ।” उणा० ४ । ११२ । इति वनिप् । “वनो र च ।” ४ । १ । ७ । इति ङीब्रौ । ) अङ्गुली । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥ नदीविशेषः । मेखला । छन्दोभेदः । इति मेदिनी ॥ स तु चतुर्द्दशाक्षरपादवृत्तम् । तद्भेदा यथा । असंबाधा १ वसन्ततिलकम् २ सिंहोद्धता ३ अपराजिता ४ प्रहरणकलिका ५ वासन्ती ६ लोला ७ नान्दीमुखी ८ । इति छन्दोमञ्जरी ॥ ( ऋक् । यथा, ऋग्वेदे । १० । ७१ । ११ ।
“ऋचां त्वः पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्वरीषु ॥”*॥
शक्नोति क्षीरादिप्रदानेन तद्भक्तं प्रीणयितुं स्पर्शनेन वा पापमपनेतुमिति । शक + वनिप् । ङीब्रौ च । गौः । इति निघण्टुः । २ । ११ ॥ )

**शक्वा**, [न्] पुं, (शक्नोतीति । शक् + “स्नामदिपदीति ।” उणा० ४ । ११२ । इति वनिप् । ) हस्ती । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

**शङ्कः**, पुं, शकटादिवाहकवृषभः । यथा,—
“स्कन्धवाहस्तु शङ्कश्च षङ्गी गौरश्वधूर्त्तिजः ।’
इति हारावली ॥

**शङ्करः**, पुं, ( शं कल्याणं करोतीति । शम् + कृ + “शमिधातोः संज्ञायाम् ।” ३ । २ । १४ । इति अच् । ) शिवः । इत्यमरः ॥ अस्य व्युत्पत्तिर्यथा,—
“सदा ध्यानाच्च भक्तानां शमनं यश्चिरामयम् ।
भूतनाथत्वमप्यस्मात्तेनाहं शङ्करः स्मृतः ॥”
इति स्कन्दपुराणम्
अस्य भस्मास्थिधारणकारणं यथा,—
‘विसृज्य तान् ब्रह्मविष्णुमयान् वृषभवाहनः ।
आदाय शवान् सर्व्वान् कामरूपान्तरं ययौ ॥
उग्रतारां ततो देवी गणाश्च प्राह शङ्करः ।

संक्षिप्तसारोवादिदर्शिनः ॥ पूगकर्णकी । पाँती इति भाषा । इति केचित् ॥

शङ्खत्वचः, पुं, (शङ्खरिव त्वचः ।) शालत्वचः । इति रत्नमाला ॥

शङ्खोषः, पुं, शङ्खमल्लाः । इति जटाधरः ॥

शङ्खोचिः, पुं, मत्स्यविशेषः । शाँकोच इति भाषा । यथा,—

"अथ शङ्खः शङ्खचिः स्यात् शङ्खोचिः शङ्खचीत्यपि ॥"

इति शब्दरत्नावली ॥

शङ्खः, पुं, क्ली, (शाम्यति अशुभमस्मादिति । शम + "शमेः खः ।" उणा० १ । १०४ । इति खः । ) समुद्रोद्भवजन्तुविशेषः । शाँख इति भाषा । तत्पर्य्यायः । कम्बुः २ । इत्यमरः ॥ कम्बोजः ३ अब्जः ४ जलजः ५ । इति शब्दरत्नावली ॥ अर्णोभवः ६ पावनध्वनिः ७ अन्तःकुटिलः ८ महानादः ९ श्वेतः १० पूतः ११ मुखरः १२ दीर्घनादः १३ बहुनादः १४ हरिप्रियः १५ । अस्य गुणाः । कटुरसत्वम् । शीतलत्वम् । पुष्टिवीर्य्यबलप्रदत्वम् । गुल्मशूलकफश्वासविषदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।

"कम्बुशङ्खनखश्चापि शुक्तिशम्बूककर्कटाः ।
जीवा एवंविधाश्चान्ये कोषस्थाः परिकीर्त्तिताः ॥
कोषस्था मधुराः स्निग्धाः पित्तवातहरा हिमाः ॥
बृंहणा बहुवर्च्चस्का वृष्याश्च बलवर्द्धनाः ॥"

इति भावप्रकाशः ॥

अन्यच्च ।

"शङ्खोदधिमलौ शीतौ कषायावतिलेखनौ ।"

इति राजवल्लभः ॥

अस्योत्पत्त्यादिर्यथा ।

"अथ शम्भुर्हरेः शूलं जग्राह दानवं प्रति ।
ग्रीष्ममध्याह्नमार्त्तण्डशतकल्पसमुज्ज्वलम् ॥
शूलञ्च भ्रमणं कृत्वा पपात दानवोपरि ।
चकार भस्मसात्तञ्च सरथञ्चावलीलया ॥
स शिवस्तेन शूलेन दानवस्यास्थिजालकम् ।
प्रेम्णा च प्रेरयामास लवणोदे च सादरम् ॥
अस्थिभिः शङ्खचूडस्य शङ्खजातिर्बभूव ह ।
नानाप्रकाररूपा च शश्वत्पूता सुरार्च्चने ॥
प्रशस्तं शङ्खतोयञ्च देवानां प्रीतिदं परम् ।
तीर्थतोयस्वरूपञ्च पवित्रं शम्भुना विना ॥
शङ्खशब्दो भवेद्यत्र तत्र लक्ष्मीश्च सुस्थिरा ।
स स्नातः सर्व्वतीर्थेषु यः स्नातः शङ्खवारिणा ॥
शङ्खे हरेरधिष्ठानं यतः शङ्खस्ततो हरिः ।
तत्रैव सततं लक्ष्मीर्दूरीभूतममङ्गलम् ॥
स्त्रीणाञ्च शङ्खध्वनिभिः शूद्राणाञ्च विशेषतः ।
भीता रुष्टा याति लक्ष्मीः स्थलमन्यत् स्थलान्तरात् ॥"

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १८ अध्यायः ॥

अथ शङ्खमाहात्म्यम् ।

ब्रह्मोवाच ।

"शृणु शङ्खस्य माहात्म्यं सर्व्वपापहरं शुभम् ॥
कपिलाक्षीरमादाय शङ्खे कृत्वा जनार्द्दनम् ।
यज्ञायुतसहस्रस्य स्नापयित्वा लभेत् फलम् ॥
पयस्विन्याः शुभं क्षीरं शङ्खे कृत्वा तु नारद ।
यः स्नापयति देवेशं स गच्छेद्ब्रह्मणः पदम् ॥
क्षिप्त्वा गङ्गोदकं शङ्खे यः स्नापयति माधवम् ।
नमो नारायणेत्युक्त्वा मुच्यते योनिसङ्कटात् ॥
शङ्खलग्नन्तु यत्तोयं भ्रमितं केशवोपरि ।
निःक्षिपेन्मूर्द्ध्नि सततं गङ्गास्नानेन तस्य किम् ॥
कृत्वा पादोदकं शङ्खे वैष्णवाय प्रयच्छति ।
तिलमिश्रं तुलस्या च चान्द्रायणफलं लभेत् ॥
नदीतडागजं वारि वापीकूपह्रदोद्भवम् ।
गाङ्गेयं तद्भवेत् सर्व्वं कृतं शङ्खे हरिप्रिय ॥
गृहीत्वा विष्णुपादाम्बु शङ्खे कृत्वा च वैष्णवः ।
यो वहेत् शिरसा नित्यं स मुने तापसोत्तमः ॥
त्रैलोक्ये यानि तीर्थानि वासुदेवाज्ञया मुने ।
शङ्खं तान्यधितिष्ठन्ति तस्मात् शङ्खं सदार्च्चयेत् ॥
त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
नमितः सर्व्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥
पुरतो वासुदेवस्य सपुष्पफलचन्दनैः ।
शङ्खः समर्च्चितो येन तस्य लक्ष्मीर्न दुर्लभा ॥
दर्शनेनापि शङ्खस्य किमु तस्यार्च्चनेन च ।
विलयं यान्ति पापानि हिमः सूर्य्योदये यथा ॥
गर्भा देवारिनारीणां विशीर्य्यन्ते सहस्रधा ।
तव नादेन पाताले पाञ्चजन्य नमोऽस्तु ते ॥
तीर्थोदकं हरेर्मूर्द्ध्नि भ्रामयेत् शङ्खसंस्थितम् ।
ददाति मुक्तिं देवेशः क्षीरसागरजाप्रियः ॥
यमदूताश्च कूष्माण्डपिशाचोरगराक्षसाः ।
दृष्ट्वा शङ्खोदकं मूर्द्ध्नि भीता यान्ति दिशो दश ॥
नित्ये नैमित्तिके काम्ये स्नानार्घ्यविलेपने ।
शङ्खं समर्च्चयति यः श्वेतद्वीपे वसेद्धि सः ॥"

इति पाद्मोत्तरखण्डे १२६ अध्यायः ॥

अथ दक्षिणावर्त्तशङ्खमाहात्म्यम् ।

"दक्षिणावर्त्तशङ्खेन गत्वा प्राक्स्रोतसं नदीम् ।
कृत्वाभिषेकं विधिवत् ततः पापैः प्रमुच्यते ॥
दक्षिणावर्त्तशङ्खेन तिलमिश्रोदकेन तु ।
उदके नाभिमात्रे तु यः कुर्य्यादभिषेचनम् ॥
प्राक्स्रोतसां तु वै नद्यां नरस्तत्राभयाप्लुतः ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥
दक्षिणावर्त्तशङ्खेन पात्रशोधं धरे स्थितम् ।
उदकं यः प्रतीच्छेत शिरसा हृष्टमानसः ।
तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति ।
न शङ्खेन पिबेत्तोयं न हन्यात्मत्स्यशूकरौ ॥"

इति वाराहे प्रबोधनीमाहात्म्याध्यायः ॥

दक्षिणावर्त्तशङ्खतोयेन विष्णुपूजाफलं यथा । स्कान्दे ।

"दक्षिणावर्त्तशङ्खस्य तोयेन योऽर्च्चयेद्धरिम् ।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥"

इत्याह्निकाचारतत्त्वम् ॥

स च शङ्खः रत्नविशेषः । तल्लक्षणादि यथा,—

"क्षीरोदकूलेऽपि सुराष्ट्रदेशे
तदन्यतोऽपि प्रभवन्ति शङ्खाः ।
अरुष्कवर्णाः शशिशुभ्रभासः
सुसूक्ष्मवक्त्रा गुरवो महान्तः ॥
ते वामदक्षिणावर्त्तभेदेन द्विविधा मताः ।
दक्षिणावर्त्तशङ्खस्तु कुर्य्यादायुर्यशो धनम् ॥
तेनैव शिरसा यस्तु श्रद्दधानः प्रतीच्छति ।
वारि छित्वा स पापानि पुण्यमाप्नोति मानवः ॥
इत्यत्वं श्रियताच्चलं शङ्खस्येति गुणत्रयम् ।
वामावर्त्तभङ्गदोषो हि दैवयोगाद्विनश्यति ॥
ब्रह्मादिजातिभेदेन स पुनस्तु चतुर्विधः ॥"

इति युक्तिकल्पतरुः ॥

श्रीकृष्णार्ज्जुनादिशङ्खनामानि यथा,—

"पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्म्मा वृकोदरः ॥
अनन्तविजयं राजा कुन्तीपुत्त्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥"

इति श्रीभगवद्गीतायाम् १ अध्यायः ॥

अयन्तु रणवाद्यविशेषः । यथा,—

"भेरीतूर्य्यं गन्धतूर्य्यं रणतूर्य्यं महास्वनः ।
संग्रामपटहः शङ्खस्तथा चाभयडिण्डिमः ॥
महाद्वन्द्वो गुणाभोगभीरुः कोलाहलोऽपि च ।
गुरुवाद्यस्य पर्य्यायश्चान्ये भेदाः शङ्खादयः ॥"

इति शब्दरत्नावली ॥

ललाटास्थि । ( यथा, सुश्रुते । १ । ५ ।
"तत्र भ्रूगण्डशङ्खललाटाक्षिपुटौष्ठदन्तवेष्टकक्षाकुक्षिवङ्क्षणेषु तिर्य्यक्छेद उक्तः ॥" ) कुबेरस्य निधिविशेषः । ( यथा, महाभारते । २ । १० । ३६ ।
"निधिप्रवरमुख्यौ च शङ्खपद्मौ धनेश्वरौ ॥"
यथा च मार्कण्डेये । ६८ । ४२—४५ ।
"रजस्तमोमयश्चान्यः शङ्खसंज्ञो हि यो निधिः ।
तेनापि नीयते विप्र तद्गुणित्वं निधीश्वरः ॥
एकस्यैव भवत्येष नरं नान्यमुपैति च ।
यस्य शङ्खो निधिस्तस्य स्वरूपं क्रौष्टुके शृणु ॥
एक एवात्मना मृष्टमन्नं भुङ्क्ते तथाम्बरम् ।
कदन्नभुक् परिजनो न च शोभनवस्त्रधृक् ॥
न ददाति सुहृद्भार्य्याभ्रातृपुत्त्रस्नुषादिषु ।
स्वपोषणपरः शङ्खी नरो भवति सर्व्वदा ॥")
नखीनामगन्धद्रव्यम् । इत्यमरमेदिनीकारौ ॥ ( यथा, सुश्रुते । ६ । १७ ।
"मनःशिला मृगमदशङ्खमाक्षिकैः
ससिन्धुकासीसरसाञ्जनैः क्रिया ॥" )
कर्णसमीपास्थि । इति राजनिर्घण्टः ॥ ( यथा, याज्ञवल्क्ये । ३ । ८६ ।
"कर्णौ शङ्खौ भ्रुवौ दन्तवेष्टावोष्ठौ ककुन्दरे ॥")
अष्टनागनायकान्तर्गतनागविशेषः । ( यथा, मनसापूजापद्धतौ ।
"अनन्तो वासुकिः पद्मो महापद्मस्तु तक्षकः ।
कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकीर्त्तिताः ॥" )
हस्तिदन्तमध्यम् । इति त्रिकाण्डशेषः ॥ दशनिखर्व्वसंख्या । लक्षकोटिरिति यावत् । यथा,
"एकं दशशतञ्चैव सहस्रमयुतं तथा ।
लक्षञ्च नियुतं चैव कोटिरर्बुदमेव च ॥
वृन्दः खर्व्वो निखर्व्वश्च शङ्खपद्मौ च सागरः ।

शक्तियुक्ता। यथा,—

"शङ्खिनी चापिनी बाणभुशुण्डीपरिघायुधा ॥"

इति देवीमाहात्म्यम् ॥

उपदेवताविशेषः। शङ्खिनीवासशब्दार्थदर्शनात् ॥

शङ्खिनीफलः, पुं, ( शङ्खिन्याः फलमिव फलं यस्य।) शिरीषवृक्षः। इति राजनिर्घण्टः ॥

शङ्खिनीवासः, पुं, ( शङ्खिन्या वास आश्रयस्थानम्।) शाखोटवृक्षः। इति शब्दचन्द्रिका ॥

शङ्खी, [ न् ] पुं, (शङ्खोऽस्यास्तीति। शङ्ख+इनिः।) विष्णुः। समुद्रः। इति मेदिनी ॥ शाङ्खिकः। शङ्खविशिष्टे, त्रि। इति शब्दरत्नावली ॥ (यथा, हरिवंशे भविष्यपर्व्वणि। ६।१२।

"शङ्खिनं चक्रिणं विष्णुं खड्गिनं गदिनं विभुम् ॥"

शङ्खनिधिविशिष्टे च त्रि। यथा, मार्कण्डेये।६८।४५।

"स्वपोषणपरः शङ्खी नरो भवति सर्व्वदा ॥")

शच, इ ङ गत्याम्। इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट्।) ङ, शचते। इति दुर्गादासः ॥

शच, ङ वाचि। इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट्।) ङ, शचते। इति दुर्गादासः ॥

शचिः, स्त्री, ( शच वाचि+"सर्व्वधातुभ्य इन्।" उणा० ४।११७। इति इन्।) इन्द्रपत्नी। इत्यमरटीकायां भरतः ॥

शची, स्त्री, ( शचि+कृदिकारादिति ङीष्।) इन्द्रपत्नी। तत्पर्य्यायः। पुलोमजा २ इन्द्राणी ३। इत्यमरः ॥ शचिः ४ सची ५ सचिः ६। इति भरतः ॥ पूतक्रतायी ७ पौलोमी ८। इति जटाधरः ॥ माहेन्द्री ९ जयवाहिनी १० ऐन्द्री ११ शतावरी १२। इति शब्दरत्नावली ॥ ( यथा, रघुः। ३। २३।

"उमावृषाङ्कौ शरजन्मना यथा
यथा जयन्तेन शचीपुरन्दरौ।
तथा नृपः सा च सुतेन मागधी
ननन्दतुस्तत्सदृशेन तत्समौ ॥" )

शतमूली। स्त्रीकरणान्तरम्। तत्तु विदिकरणमिति केचित् ॥ इति मेदिनी ॥ ( कर्म्म। इति इति निघण्टुः।२।१॥ यथा, ऋग्वेदे।८।३२।१५।

"न किरस्य शचीनां नियन्ता सूनृतानाम् ॥"

प्रज्ञा। इति निघण्टुः। ३।६॥ वाक्। इति च निघण्टुः। १। ११॥)

शचीपतिः, पुं, (शच्याः पतिः।) इन्द्रः। इत्यमरः ॥ ( यथा, मार्कण्डेये। १५। ७०।

"यदि जानासि धर्म्मं त्वं त्वं वा शक्र शचीपते।
मम यावत् प्रमाणन्तु पुण्यं तद्वक्तुमर्हति ॥"

कर्म्मपालके, त्रि। यथा ऋग्वेदे।७।६७।५।

"शक्तं शचीपती शचीभिः ॥"

"हे शचपती शचीति कर्म्मनाम कर्म्मणां पालकौ।" इति तद्भाष्ये सायणः।)

शट, सादे। शीर्णौ। गतौ। रुजि। इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-गतौ सक०-सेट्।) सादोऽवसादः। शीर्णिर्भेदः। शटति लोकः अवसीदति। विशीर्य्यति। गच्छति। रुजति वा इत्यर्थः। इति दुर्गादासः ॥

शट, क ङ श्लाघे। इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-सक०-सेट्।) क ङ, शाटयते। इति दुर्गादासः ॥

शटः, त्रि, अम्लः। शटधातोरच्प्रत्ययेन निष्पन्नमेतत्। इति सिद्धान्तकौमुदी ॥

शटा, स्त्री, ( शट+अच्। टाप्।) सटा। जटा। इत्यमरटीका ॥

शटिः, स्त्री, ( शट+इन्।) शटी। इति शब्दरत्नावली ॥

शटी, स्त्री, ( शटि+वा ङीष्।) स्वनामख्यातौषधिः। ऐन आदा इति भाषा। कचूर इति हिन्दी भाषा। तत्पर्य्यायः। गन्धमूली २ षड्ग्रन्थिका ३ कर्च्चूरः ४ पलाशः ५। इत्यमरः ॥ सटी ६ षटी ७ गन्धशटी ८ कर्च्चुरः ९ कर्चूरः १०। इति भरतादयः ॥ सुगन्धा ११ शटिः १२ शाटिः १३ गन्धमूला १४ गन्धोलिः१५ गन्धमूलकः १६। इति शब्दरत्नावली ॥ गन्धसटा १७ वधूः १८ गन्धमूलम् १९। इति जटाधरः ॥ जीमूतमूलम् २० कच्चोरम् २१ हिमजा २२। इति रत्नमाला ॥ हैमी २३ षड्ग्रन्थिः २४ सुव्रता २५ गन्धाली २६ पलाशी २७ हिमा २८। इति ग्रन्थान्तरम् ॥ षड्ग्रन्था २९ आम्लानशा ३० सुगन्धमूला ३१ गन्धाली ३२ शटीका ३३ पलाशिका ३४ सुभद्रा ३५ त्वगी ३६ दूर्व्वा ३७ गन्धा ३८ पृथुपलाशिका ३९ सौम्या ४० हिमोद्भवा ४१ गन्धवधूः ४२। अस्या गुणाः। तिक्तत्वम्। अम्बरसत्वम्। लघुत्वम्। उष्णत्वम्। रुचिकारित्वम्। ज्वरकफासकण्डुव्रणदोषरक्तामयध्वंसकारित्वम्। हृद्यत्वञ्च। इति राजनिर्घण्टः ॥ अपि च। अथ गन्धपलाशी सुगन्धद्रव्यं काश्मीरे प्रसिद्धम्।

"शटी पलाशी षड्ग्रन्था सुव्रता गन्धमूलिका।
गन्धारिका गन्धवधूर्वधूः पृथुपलाशिका ॥
भवेद्गन्धपलाशी तु कषाया ग्राहिणी लघुः।
तिक्ता तीक्ष्णा च कटुकानुष्णास्यमलनाशिनी।
शोथकासव्रणश्वासशूलाध्मानग्रहापहा ॥"

इति भावप्रकाशः ॥

शट्टकं, क्ली, घृतजलमिश्रितशालिचूर्णम्। मयदार शटा इति भाषा। यथा,—

"शालिचूर्णं घृतं तोयं मिश्रितं शट्टकं वदेत् ॥"

इति भावप्रकाशः ॥

शठ, वधक्लेशकैतवे। इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट्।) क्लेशो दुःखानुभवः। कैतवं मिथ्यावचनम्। शठति खलः साधुं वञ्चयतीत्यर्थः। इति दुर्गादासः ॥

शठ, क आलस्ये। गत्यसंस्कृतसंस्कृते। इति कविकल्पद्रुमः ॥ (चुरा०-पर०-अक०-सेट्।) क, शाठयति इह [illegible] मन्दः स्यादित्यर्थः। इति दुर्गादासः ॥

शठ, क ङ श्लाघे। इति कविकल्पद्रुमः ॥ (चुरा०-आत्म०-अक०-सेट्।) क ङ, शाठयते। इति दुर्गादासः ॥

शठ, त क दुर्व्वाचि। इति कविकल्पद्रुमः ॥ (अदन्तचुरा०-पर०-सक०-सेट्।) शठयति नीचः कुत्सितं वदतीत्यर्थः। रमानाथस्तु सम्यग्भाषणे इति मत्वा शठयति सम्यग्वदतीत्यर्थं इत्याह। सम्यग्भाषणे इति कौमराः। समग्भावे इत्येके। इति दुर्गादासः ॥

शठं, क्ली, ( शठ+अच्।) तगरम्। कुङ्कुमम्। लौहम्। इति राजनिर्घण्टः ॥

शठः, पुं, मध्यस्थपुरुषः। धूर्त्तः। ( यथा, मनुः। ४। ३०।

"पाषण्डिनो विकर्म्मस्थान् वैडालव्रतिकान् शठान्।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्च्चयेत् ॥")

धुस्तूरः। इति मेदिनी ॥ शठस्य लक्षणम्। यथा,—

"प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम्।
यक्तापराधचेष्टश्च शठोऽयं कथितो बुधैः ॥"

इति विष्णुपुराणे। ३।१८।२१। श्लोकटीका ॥ चतुर्व्विधपत्यन्तर्गतपतिविशेषः। तस्य लक्षणम्। कामिनीविषयकपटपटुः। यथा,—

"मौलौ दाम विधाय भालफलके आलख्य पत्रावलीं
केयूरं भुजयोर्निधाय कुचयोर्विन्यस्य मुक्तासजम्।
विश्वासं समुपार्ज्जयन् मृगदृशः काञ्चीनिवेशच्छला-
न्नीवीग्रन्थिमपाकरोति मृदुना पक्षेण वामभ्रुवः ॥"

इति रसमञ्जरी ॥

(वृष्णिवंशीयविशेषः। यथा, हरिवंशे। भविष्यपर्व्वणि। २। ३।

"बलभद्र शिनेः पुत्त्रं हार्द्दिक्यं शठमारणौ ॥")

शठता, स्त्री, ( शठ+तल्।) शठस्य भावः। तत्पर्य्यायः। माया २ शाम्बरम् ३ कुसृतिः ४ निकृतिः ५। इति हेमचन्द्रः ॥ अन्यच्च।

"अलिखां कपटो व्याज उपधिर्द्दम्भ एव च।
कूटं कल्कं छलं छद्म मिथकैरवकैतवम् ॥
अथ शाठ्यञ्च शठता कुसृतिर्निकृतिश्च सा।
हिंसाफले चतुष्कं स्यात् शाठ्यपर्य्याय ईरितः ॥
पूर्व्वः कपटपर्य्यायः फले वञ्चनमात्रके।
उभयोरेकपर्य्याय इति केचित् प्रचक्षते ॥"

इति शब्दरत्नावली ॥

शठाम्बा, स्त्री, अम्बष्ठा। इति राजनिर्घण्टः ॥

शण्ड, इ ङ संहतौ। इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट्।) नान्तयादिः। इ,

द्रुतपथा विपाशायां मिलिता। ( अस्या नाम-निरुक्तिर्यथा, महाभारते । १ । १७८ । ६ ।
"शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता ॥")
तत्पर्य्यायः । शितद्रुः २ । इत्यमरः ॥ शुतुद्रिः ३ शतद्रुः ४ । पुत्रशोकवशतो वशिष्ठः कण्ठे शिलां बद्ध्वा नद्यामस्यां प्रविष्टस्ततो भीत्वा इयं शतधा द्रुता इति शतद्रुः । इति तट्टीकायां भरतः ॥ (एतदृत्तान्तस्तु महाभारते ।१।१७८। अध्याये द्रष्टव्यः ॥ ) अस्या जलगुणाः ।

"शतद्रोर्विपाशायुतः सिन्धुनद्याः
सुशीतं लघु स्वादु सर्व्वामयघ्नम् ।
जलं निर्म्मलं दीपनं पाचनञ्च
प्रदत्ते बलं बुद्धिमेधायुषञ्च ॥"
इति राजनिर्घण्टः ॥

शतधा, स्त्री, दूर्व्वा । इति शब्दचन्द्रिका ॥
शतधा, व्य, (शत + धाच् ।) शतप्रकारम् । यथा,
"यांल्लोकवचनं श्रुत्वा यः सर्पो न निवर्त्तते ।
शतधा भिद्यते मूर्द्धा शिरीषस्य फलं यथा ॥"
इति महाभारतम् ॥

शतधामा, [न्] पुं, (शतं धामानि वर्च्चांसि यस्य ।) विष्णुः । इति जटाधरः ॥
शतधारं, क्ली, ( शतं धाराः कोणा यस्य । ) वज्रम् । इति त्रिकाण्डशेषः ॥ शतधारायुक्ते, त्रि । यथा,—
"वचो: पवित्रमसि शतधारं वचो: पवित्रमसि सहस्रधारम् ।
वचो: पवित्रेण शतधारेण सुत्वा कामधुक्षः ॥"
इति पशुपतिपद्धतिः ॥

शतधृतिः, पुं, इन्द्रः । ( यथा, महिम्नः स्तोत्रे ।
"रथः क्षौणी यन्ता शतधृतिरगेन्द्रो धनुरथो ॥")
ब्रह्मा । इति मेदिनी ॥ (यथा, भागवते ।७।४।१।
"एवं वृतः शतधृतिर्हिरण्यकशिपोरथ ॥")
स्वर्गः । इति विश्वः ॥

शतपत्रं, क्ली, (शतं पत्राणि यस्य ।) पद्मम् । इत्यमरः ॥ ( यथा, महाभारते ।३।६८।२०।
"दृशामसितकेशान्ता शतपत्रायतेक्षणाम् ॥")

शतपत्रः, पुं, (शतं पत्राणि पक्षा यस्य ।) मयूरः । सारसः । दार्व्वाघाटपक्षी । इति मेदिनी ॥ हाड़कीड़ । कुरी इति भाषा । इति हेमचन्द्रराजनिर्घण्टौ ॥ ( यथा, महाभारते । ३ । १०८ । ८ ।
"मयूरैः शतपत्रैश्च जीवञ्जीवककोकिलैः ॥")

शतपत्रकः, पुं, (शतपत्र + स्वार्थे कन् ।) दार्व्वाघाटपक्षी । इत्यमरः ॥ काठ्ठोकरा इति भाषा ॥
शतपत्रनिवासः, पुं, ( शतपत्रे निवासो यस्य । ) ब्रह्मा । इति कविकल्पलता ॥ पद्मस्थे, त्रि ॥
शतपत्री, स्त्री, ( शतं पत्राणि यस्याः । ङीप् । ) पुष्पविशेषः । सेउती इति भाषा । पाटलवर्णाया गोलाप इति वदन्ति । तत्पर्य्यायः । सुमना: २ सुशीता ३ शिववल्लभा ४ सौम्यगन्धी ५ शतदला ६ सुदला ७ शतपत्रिका ८ । अस्या गुणाः । हिमत्वम् । तिक्तत्वम् । कषायत्वम् । कुष्ठमुखस्फोटपित्तदाहनाशित्वम् । लघुत्वम् । सुरभित्वञ्च । इति राजनिर्घण्टः ॥

शतपत्रिका, स्त्री, ( शतपत्री + कन् । टाप् । अत इत्वम् । ) शतपत्री । इति राजनिर्घण्टः ॥
शतपथिकः, त्रि, (शतपथमधीते तद्वेद इति वा ।)
"शतषष्टेः पिकन् पथो बहुलम् ।" ४ । २ । ६० ।
इत्यस्य वार्त्तिकोक्त्या शत-शब्दोत्तरपथिन्-शब्दात् पिकन्प्रत्ययेन निष्पन्नः ।) नानामतावलम्बी । नानापथगामी । इति सिद्धान्तकौमुदी ॥
शतपदचक्रं, क्ली, ( शतं पदानि कोष्ठा यस्य तच्च तच्चक्रञ्चेति । ) नाम्ना नक्षत्रज्ञानार्थं चक्रम् । यथा,—

"चक्रं शतपदं वक्ष्ये सद्योज्ञानकरमवम् ।
नामादिवर्णतो ज्ञेया नक्षत्रांशकास्तथा ।
तिर्य्यगूर्द्ध्वगता रेखा वह्निसंख्या लिखेद्बुधः ।
जायते कोष्ठकानाञ्च शतैकं १०० नात्र संशयः ॥
अ-व-क-ह-डा रेखाग्रे म-ट-प-र-ता इरिति वामयेत्याम् ।
न-य-भ-ज-खा नैर्ऋत्यां ग-स-द-च-ला वायव्याम् ॥
पञ्च पञ्च क्रमेणैव विंशवर्णान् प्रयोजयेत् ।
पञ्चस्वरसमायोगे एकैकं पञ्चधा कुरु ॥
अवर्णावाक्षयो ज्ञेयाः सन्ध्यक्षरयुतास्तथा ।
सजातीयैक्यमास्थाय पञ्चस्वरविनिर्णयः ॥
ऋदृल्लृतीरप्यकारेण शेन सस्य परिग्रहः ।
कुर्य्यात् ङ-ञ-ण-दुःस्थाने जोऽपि जौष्ठघराणि च ॥
ड-ञ-ड-ढा भवेत् सर्म्मे रौद्रे लौशागगोचरे ।
पु-ष-ण-ठा भवेत् सर्म्मे दक्षे वामयसंज्ञके ॥
स-ध-फ-ढा भवेत् सर्म्मे पूर्व्वाषाढ़े च नैर्ऋते ।
ट-घ-ञ-ञा भवेत् सर्म्मे वायव्ये शाद्र उत्तरे ॥
एवं सम्भवचतुष्कञ्च ज्ञातव्यं स्वरवेदिभिः ॥
धिष्ण्यानि कृत्तिकादीनि प्रत्येकं चतुरक्षरैः ।
साभिजिन्त्यंशकास्तत्र शतैकं द्वादशाधिकम् ॥
यद्धिष्ण्यांशकोष्ठस्थः क्रूरः सौम्योऽपि वा ग्रहः ।
तत्रस्थो वेधयेत् सम्यक् पुंसो नामादिमाक्षरम् ॥
सौम्यैर्विद्धं शुभं ज्ञेयमशुभं पापखेचरैः ।
मिश्रैर्मिश्रफलं तत्र निर्व्वेधेन शुभाशुभम् ॥
यद्वाष्टं सर्व्वतोभद्रे प्रदीपस्यवेधतः ।
शुभाशुभफलं सर्व्वं तद्विहापि विचिन्तयेत् ॥
पञ्चस्वरा अ-इ-उ-ए-ओकारास्तैर्योगे धिष्ण्यानि नक्षत्राणि । अत्र चतुर्भिर्व्वर्णैरेकनक्षत्रं यथा,—
अ इ उ ए १ । ओ व वि वु ४ । वे वो क कि ५ । कु घ ङ छ ६ । के को ह हि ७ । हु हे हो ड ८ । डि डु डे डो ९ । म मि मु मे १० । मो ट टि टु ११ । टे टो प पि १२ । पु ष ण ठ १३ । पे पो र रि १४ । रु रे रो त १५ । ति तु ते तो १६ । न नि नु ने १७ । नो य यि यु १८ । ये यो भ भि १९ । भु ध फ ढ २० । भे भो ज जि २१ । जु जे जो ख । ० । खि खु खे खो २२ । ग गि गु गे २३ । गो स सि सु २४ । से सो द दि २५ । दु थ झ ञ २६ । दे दो च चि २७ । चु चे चो ल २८ । लि लु ले लो २ । अक्षयुक्तः अकारयुक्तेन ज्ञेयः । इत्येवं दीर्घो ह्रस्व. । नामप्रकारेण इत्यक्षरादि ज्ञेयः । इति शतपदचक्रम् । इति ज्योतिस्तत्त्वम् ॥

शतपदी, स्त्री ( शतं पादा यस्याः । ङीष् । ) बहुपदयुक्तकीटविशेषः । कानविछा इति काणकोटारी इति च भाषा । तत्पर्य्यायः । कर्णजलौकाः २ । इत्यमरः ॥ शतपदी ३ भीरुः ४ शतपादिका ५ कर्णजलूका ६ । इति शब्दरत्नावली ॥ शतपात् ७ शतपादी ८ । इति जटाधरः ॥ शतावरी । इति राजनिर्घण्टः ॥

शतपद्मं, क्ली, श्वेतकमलम् । यथा,—
"शतपद्मं महापद्मं पुण्डरीकं [illegible] ॥"
इति [illegible] ॥

शतपर्व्वा, [न्] पुं, ( शतं पर्व्वाणि यस्य । ) वंशः । इत्यमरः ॥ इक्षुभेदः । —
"शतपर्व्वा भवेत् [illegible] ।
विशेषात् किञ्चिदुष्णश्च [illegible] ॥"
इति भावप्रकाशः ॥

शतपर्व्वा, स्त्री, ( शतं पर्व्वाणि यस्याः । ) दूर्व्वा । वचा । भार्गवपत्नी । ( यथा, महाभारते । ५ । ११७ । १६ ।
"इहस्वतिश्च तारायां शुक्रश्च शतपर्व्वया ॥")
कोजागरपूर्णिमा । इति शब्दरत्नावली । कटुका । इति राजनिर्घण्टः ॥

शतपर्व्विका, स्त्री, ( शतपर्व्वा + कन् । टापि अत इत्वम् ।) दूर्व्वा । वचा । इति मेदिनी ॥ यवः । इति शब्दरत्नावली ॥
शतपर्व्वेशः, पुं, ( शतपर्व्वाया ईशः । ) शुक्रग्रहः । इति त्रिकाण्डशेषः ॥
शतपात्, } स्त्री, ( शतं पादा यस्याः । पादस्य
शतपाद्, } पात् । ) कर्णजलौकाः । इति जटाधरः ॥
शतपादिका, स्त्री, (शतपाद + स्वार्थे कन् + टाप् । अत इत्वम् ।) काकोली, इति जटाधरः ॥ कर्णजलौकाः । इति शब्दरत्नावली ॥
शतपुष्पः, पुं. भारविः । स तु किरातार्ज्जुनीयग्रन्थकर्त्ता । इति त्रिकाण्डशेषः ॥
शतपुष्पा, स्त्री, ( शतं पुष्पाणि यस्याः । ) शाकविशेषः । इति भरतः ॥ शलुफा इति ख्याता । ( यथा, उत्तरतन्त्रे सुश्रुते नायाम् । ५९ । १५ ।
"गन्धमांसिश्च शतपुष्पया वदेत् ॥")
तत्पर्य्यायः । सितच्छत्रा २ अतिच्छत्रा ३ मधुरा ४ मिसिः ५ अवाक्पुष्पी ६ कारवी ७ । इत्यमरः ॥ शताह्वा ८ शतपुष्पिका ९ मधुरिका १० शताह्वा ११ छत्रा १२ मिशिः १३. मिश्रा १४ । इति शब्दरत्नावली ॥ माधवी १५ शोषा १६ । इति जटाधरः ॥ अस्या गुणाः । मधुरत्वम् । वातपित्तहरत्वम् । गुरुत्वञ्च । इति राजवल्लभः ॥ क्षुपविशेषः । सौरी इति भाषा । तत्पर्य्यायः । शताह्वा २ मिसिः ३ घोषा ४ पोतिका ५ अतिच्छत्रा ६

"गृणन्तौ वेदविद्वांसौ तद्ब्रह्म शतरुद्रियम् ॥"
यजुर्व्वेदोक्तग्रन्थविशेषे, क्ली। यथा, महा-भारते। ७। २००। १४६।
"पठन् वै शतरुद्रीयं श्रृण्वंश्च सततोत्थितः॥")
शतरूपा, स्त्री, (शतं रूपाणि यस्याः।) ब्रह्मणः कन्या पत्नी च। यथा,—
"एवन्तत्त्वात्मकं कृत्वा जगद्वेधाऽप्यजीजनत्।
सावित्रीं लोकसिद्ध्यर्थं हृदि कृत्वा समास्थितः॥
ततः संजपतस्तस्य भित्त्वा देहमकल्मषम्।
स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत्॥
शतरूपा च सा ख्याता सावित्री च निगद्यते।
सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप॥
दृष्ट्वा तां व्यथितस्तावत् कामबाणार्द्दितो विभुः।
उपयेमे स विश्वात्मा शतरूपामनिन्दिताम्॥
ततः कालेन महता ततः पुत्त्रोऽभवन्मनुः।
स्वायम्भुव इति ख्यातः स विराडिति नः श्रुतम्॥"
इति मात्स्ये ३ अध्यायः॥
(विष्णुपुराणमते इयं स्वायम्भुवमनोः पत्नी। यथा, तत्रैव। १। ७। १४—१६।
"ततो ब्रह्मात्मसम्भूतं पूर्व्वं स्वायम्भुवं प्रभुः।
आत्मानमेव कृतवान् प्रजापाल्ये मनुं द्विज॥
शतरूपां तु तां नारीं तपोनिर्धूतकल्मषाम्।
स्वायम्भुवो मनुर्द्देवः पत्नीत्वे जगृहे विभुः॥
तस्माच्च पुरुषात् देवी शतरूपा व्यजायत।
प्रियव्रतोत्तानपादौ प्रसूत्याकूतिसंज्ञितम्॥")
शतलुम्पः, } पुं, भारविः। इति त्रिकाण्ड-
शतलुम्पकः, } शेषभूरिप्रयोगौ॥
शतवीर्य्या, स्त्री, (शतं वीर्य्याणि यस्याः।) श्वेत-दूर्व्वा। इत्यमरः॥ शतावरी। कपिलद्राक्षा। इति राजनिर्घण्टः॥
शतवेधी, [न्] पुं, (शतं विध्यतीति। विध+णिनिः।) अम्लवेतसः। इत्यमरः॥
शतसहस्रं, क्ली, (शतगुणितं सहस्रम्। मध्यपद-लोपिकर्म्मधारयः।) शतगुणितसहस्रम्। लक्ष-मिति यावत्। यथा हारीतः। मणिवासो गवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत् प्रथ मध्यमे इष्टोत्तमे द्वादशरात्रं पयोव्रतं शतसहस्र-मसत्प्रतिग्रहेष्विति। इति शुद्धितत्त्वम्॥ (यथा च हरिवंशे। १२१। १३।
"अष्टौ शतसहस्राणि देशजान्योत्तमा हयाः॥")
शतह्रदा, स्त्री, (शतं ह्रदा अर्च्चींषि यस्याः। यद्वा, शतं ह्रादाः शब्दाः यस्याः। निपातनात् ह्रस्वः।) विद्युत्। इत्यमरः॥ (यथा, हरिवंशे। १४६। ४८।
"ससुरमेघः स रराज राजन् शतह्रदास्त्रीप्रभयाभिरामः॥")
वज्रम्। इति मेदिनी॥ दक्षकन्याविशेषः। यथा,
"ददौ च बाहुपुत्त्राय द्वे तडिच्च शतह्रदा।
तयोः पुत्त्राश्च विद्वांसस्तनस्रो विद्युतः शुभाः॥"
इति वह्निपुराणे सर्गानुकीर्त्तने सतीदेहत्यागो नामाध्यायः॥

शताची, स्त्री, रात्रिः। शतपुष्पा। इति शब्द-रत्नावली॥ पार्व्वती। यथा,—
"भूयश्च शतवार्षिक्यामनावृष्ट्यामनम्भसि।
मुनिभिः संस्तुता भूमौ सम्भविष्याम्ययोनिजा॥
ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन्।
कीर्त्तयिष्यन्ति मनुजाः शताक्षीमिति मां ततः॥"
इति मार्कण्डेयपुराणे देवीमाहात्म्ये देव्या-श्चरितस्तुतिनामाध्यायः॥
शताङ्गः, पुं, (शतं अङ्गानि अवयवा यस्य।) रथः। इत्यमरः॥ तिनिसवृक्षः। इति राज-निर्घण्टः॥ (दानवविशेषः। यथा, हरिवंशे। २३२। ६।
"करालो ज्वालजिह्वश्च शताङ्गः शतलोचनः॥"
शतावयवविशिष्टे, त्रि। यथा, महाभारते। १। १८६। २२।
"शताङ्गानि च तूर्य्याणि वादकाः समवाद-यन्॥")
शतानकं, क्ली, श्मशानम्। इति त्रिकाण्डशेषः॥
शतानन्दः, पुं, (शतं बहुलः आनन्दो यस्य।) मुनिभेदः। स तु जनकराजपुरोहितः। देवकी-नन्दनः। इति मेदिनी॥ ब्रह्मा। गौतममुनिः। इति हेमचन्द्रः॥ विष्णुरथः। इति त्रिकाण्ड-शेषः॥ (विष्णुः। यथा, महाभारते। १३। १४६। ७६।
"स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः॥")
शतानीकः, पुं, (शतं अनीकानि यस्य।) वृद्धः। मुनिभेदः। स तु व्यासशिष्यः। राजभेदः। स च चतुर्थयुगे चन्द्रवंशीयद्वितीयराजः। तस्य पिता जनमेजयः पुत्त्रः सहस्रानीकः। इति मेदिनी॥ सुदासराजपुत्त्रः। इति श्रीभागवते ९ स्कन्धे २२ अध्यायः॥ (नकुलपुत्त्रः। यथा, महाभारते। १। २३४। १०।
"पुत्त्रस्तु प्रतिविन्ध्यस्य सुतसोमस्तथा विभुः।
श्रुतकर्म्मार्ज्जुनिश्चैव शतानीकश्च नाकुलिः॥
सहदेवाच्च यो जातः श्रुतसेनस्तथात्मजः।
सर्व्वे कुशलिनो वीराः हताश्चाश्च सुताश्च ते॥")
शतारं, क्ली, (शतं आराणि यस्य।) वज्रम्। इति त्रिकाण्डशेषः॥
शतारुः, [रु] स्त्री, } कुष्ठभेदः। इति शब्दरत्ना-
शतारुषी, स्त्री, } वली॥ तस्य रूपमाह।
"रक्तं श्यावं सदाहार्त्ति शतारुः स्याद्बहुव्रणम्।"
इति भावप्रकाशः॥
शतावरी, स्त्री, (शतं आवृणोतीति। आ+वृ+अच्। गौरादित्वात् ङीष्।) शतमूली। इत्य-मरः॥ इन्द्रभार्य्या। इति शब्दरत्नावली॥ शटी। इति मेदिनी॥
शतावर्त्तः, पुं, विष्णुः। इति हेमचन्द्रः॥ (यथा, महाभारते। १३। १४९। ५०।
"अनुकूलः शतावर्त्तः पद्मी पद्मनिभेक्षणः॥"
"धर्म्मत्राणाय शतमावर्त्तमानाः प्रादुर्भावा अस्येति शतावर्त्तः। नाडीशतेन प्राणरूपेण वर्त्तते इति वा शतावर्त्तः।" इति तत्र शाङ्कर-भाष्यम्॥ महादेवः। यथा, महाभारते। १२। २८४। ६।
"शतोदर शतावर्त्त शतजिह्व नमोऽस्तु ते॥")
शतावर्त्ती, [न्] पुं, विष्णुः। इति त्रिकाण्डशेषः॥
शताह्वा, स्त्री, (शतं आह्वा यस्याः।) शतपुष्पा। इति जटाधरः॥ शतावरी॥ इति राज-निर्घण्टः॥
शतिकः, त्रि, (शत+"शताच्च ठन् यतावशते।" ५। १। २१। इति ठन्।) शतेन क्रीतः। शतस्य विकारः। शतसम्बन्धी। इति सिद्धान्त-कौमुदी॥
शतेरः, पुं, (शद शातने+"शदेस्त च।" उणा० १। ६१। इति एरक् तकारान्तादेशश्च।) शत्रुः। हिंसा। इत्युणादिकोषः॥
शत्यः, त्रि, (शत+"शताच्च ठन्यतावशते।" ५। १। २१। इति यत्।) शतस्य विकारः। शतेन क्रीतः। धनपतिसंयोगः। शतमस्मै वृद्धिः आयः लाभः शुल्कमुपदा वा दीयते इत्यर्थे शत्यः शतिकः। शत्यं शतिकम्। एकशाटिस्युन्दनं शतस्य निमित्तमित्यर्थः। इति सिद्धान्तकौमुदी॥
शत्रिः, पुं, (शद्+"राशदिभ्यां त्रिप्।" उणा० ४। ६७। इति त्रिप्।) हस्ती। इति सिद्धान्त-कौमुद्यामुणादिवृत्तिः॥ (राजर्षिविशेषः। यथा, ऋग्वेदे। ५। ४। ९।
"शत्रिमग्न उपमां केतुमर्य्यः॥"
"शत्रिं एतन्नामकं राजर्षिम्।" इति तद्भाष्ये सायनः॥)
शत्रुः, पुं, (शद्ल शातने+"रुशदिभ्यां क्रुन्।" उणा० ४। १०३। इति क्रुन्।) स्वदेशादनन्तरोऽव्यवहितैकविषयाभिनिविष्टराजः। यथा,—
"विषयानन्तरो राजा शत्रुर्मित्रमतः परम्॥"
इति।
घातकः। निपातकारीत्यर्थः। तत्पर्य्यायः। रिपुः २ वैरिः ३ सपत्नः ४ अरिः ५ द्विषः ६ द्वेषणः ७ दुर्हृद् ८ द्विट् ९ विपक्षः १० अहितः ११ अमित्रः १२ दस्युः १३ शात्रवः १४ अभि-घाती १५ परः १६ अरातिः १७ प्रत्यर्थी १८ परिपन्थी १९। इति चामरः॥ द्रुघः २० प्रति-पक्षः २१। इति जटाधरः॥ द्विषन् २२ घातकः २३ द्वेषी २४ विद्विषः २५ हिंसकः २६ विद्विट् २७ अप्रियः २८ अभिघातिः २९ अहितः ३० दौर्हृदः ३१। इति शब्दरत्ना-वली॥ तस्य जयोपायो यथा,—
मत्स्य उवाच।
"सर्व्वेषामप्युपायानां दानं श्रेष्ठतमं मतम्।
सुदत्तेनेह भवति दानेनोभयलोकजित्॥
न सोऽस्ति राजन् दानेन वशयोगो न जायते।
दानेन वशगा देवा भवन्तीह सदा नृणाम्॥
दानमेवोपजीवन्ति प्रजाः सर्व्वा नृपोत्तम।
प्रियो हि दानवान् लोके सर्व्वस्यैवोपजायते॥
दानवानचिरेणैव तथा राजा परान् जयेत्।

दानवानेव शक्रोऽपि संघ्नन्‌ भेदितुं परान्‌ ।
अशक्तुवन्‌ गम्भीराः पुरुषाः सागरोपमाः ।
न शक्नुवन्ति तथाप्येते जायन्ते भूमिपालिनः ।
अन्यत्रापि कृतं दानं करोत्यन्यं तथा वशे ।
उपायेभ्यः प्रशंसन्ति दानं श्रेष्ठतमं जनाः ।
दानं श्रेयस्करं श्रेष्ठं दानं श्रेष्ठकरं परम्‌ ।
दानवानेव लोकेषु पुत्रत्वे ध्रियते सदा ।

न केवलं दानपरा जयन्ति
भूर्लोकमेकं पुरुषाः सुवीराः ।
जयन्ति ते राजसुरेन्द्रलोकं
सुदुर्जयं यद्विबुधाधिवासम्‌ ।”

इति मात्स्ये २२४ अध्यायः । ७ ।

मत्स्य उवाच ।

“न शक्या ये वशे कर्त्तुमुपायत्रितयेन तु ।
दण्डेन तान्‌ वशान्‌ कुर्य्यात्‌ दण्डो हि वश-
कृन्नृणाम्‌ ।
सम्यक्‌ प्रणयनं तस्य तथा कार्य्यं महीक्षिता ।
धर्म्मशास्त्रानुसारेण सुसहायेन धीमता ।
तस्य सम्यक्प्रणयनं तथा कार्य्यं महीक्षिता ।
वानप्रस्थांश्च धर्म्मज्ञान्‌ निर्म्ममान्‌ निष्परि-
ग्रहान्‌ ।
स्वदेशे परदेशे च धर्म्मशास्त्रविशारदान्‌ ।
समीक्ष्य प्रणयेद्दण्डं सर्व्वं दण्डे प्रतिष्ठितम्‌ ।
आश्रमी यदि वा वर्णी पूज्यो वाथ गुरुर्महान्‌ ।
नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्म्मे न
तिष्ठति ।
अदण्ड्यान्‌ दण्डयेद्राजा दण्ड्यांश्चैवाप्यदण्ड-
यन्‌ ।
इह राज्यपरिभ्रष्टो नरकं प्रतिपद्यते ।
तस्माद्राजा विनीतेन धर्म्मशास्त्रानुसारतः ।
दण्डप्रणयनं कार्य्यं लोकानुग्रहकाम्यया ।
यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्‌ साधु पश्यति ।
बालवृद्धातुरयतिद्विजस्त्रीविधवा यतः ।
मत्स्यन्याय इव प्रोक्ता भक्षयेरन्‌ यदि दण्डं न पातयेत्‌ ।
देवदैत्योरगगणाः सिद्धभूतपतत्त्रिणः ।
उत्क्रमेयुर्म्मर्य्यादां यदि दण्डं न पातयेत्‌ ।
एष ब्रह्माभिशापेषु सर्व्वप्रहरणेषु च ।
सर्व्वविक्रमकोपेषु व्यवसाये च तिष्ठति ।
पूज्यन्ते दण्डिनो देवा न पूज्यन्ते त्वदण्डिनः ।
न ब्रह्माणं विधातारं न पूषार्य्यमणावपि ।
यजन्ते मानवाः केचित्‌ प्रशान्ताः सर्व्वकर्म्मसु ।
रुद्रमग्निं च शक्रञ्च सूर्य्याचन्द्रमसौ तथा ।
विष्णुं देवगणांश्चान्यान्‌ दण्डिनः पूजयन्ति च ।
दण्डः शास्ति प्रजाः सर्व्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्त्ति दण्डं धर्म्मं विदुर्बुधाः ।
राजदण्डभयादेते पापाः पापं न कुर्व्वते ।
यमदण्डभयादेके परस्परभयादपि ।
एवं हि सांसिद्धिके लोके सर्व्वं दण्डे प्रतिष्ठितम्‌ ।
अन्धे तमसि मज्जेयुर्यदि दण्डं न पातयेत्‌ ।
तस्मात्‌ दण्डो दमयति अदण्ड्यान्‌ दण्डयत्यपि ।
दमनाद्दण्डनाच्चैव तस्मात्‌ दण्डं विदुर्बुधाः ।

दण्डस्य भीतैस्त्रिदशैः समेतै-
र्भागो धृतः शूलधरस्य यज्ञे ।
भवस्य पुत्रं ध्वजिनीपतिश्च
वरं शिशूनाश्च भयात्‌ तु दत्तम्‌ ।”

इति मात्स्ये १९९ अध्यायः ।

सामभेदौ तत्तच्छब्दे द्रष्टव्यौ ।

शत्रुघ्नः, पु, (शत्रून्‌ हन्तीति । हन्‌+“अमनुष्य-कर्त्तृकेऽपि च” इति टक्‌ । यद्वा, अमनुष्यकर्त्तृकेऽपि चेति
शब्दात्‌ कृतघ्न शत्रुघ्नादयः सिद्धा इति दुर्ग-
सिंहः ।) श्रीरामस्य भ्राता । तत्पर्य्यायः ।
शत्रुमर्द्दनः २ । इति शब्दरत्नावली । स तु
सुमित्रया कृतोच्छिष्टभोजनादुत्पन्नः । यथा,—

“शिष्टां गते दशरथस्य तनोर्म्मिषे-
विहितेविधे कर्म्मणि राजपत्न्यः ।
प्राशुर्हुतोच्छिष्टमुदारवंश्या-
स्तिस्रः प्रसोतुं चतुरः सुपुत्रान्‌ ।
कौशल्ययासावि सुखेन रामः
प्राक्‌ कैकयीतो भरतस्ततोऽभूत्‌ ।
प्रासोष्ट शत्रुघ्नमुदारचेष्ट-
मेका सुमित्रा सह लक्ष्मणेन ।”

इति भट्टिकाव्ये १ सर्गः ।

(अयं हि मधुपुरनिवासिनो लवणाख्यराक्ष-
सस्य निहन्ता । एतद्विवरणं रामायणे उत्तर-
काण्डे ६३ अध्यायमारभ्य द्रष्टव्यम्‌ ।) शत्रु-
हन्तरि, त्रि । यथा, रामायणे । २ । १ । १ ।
“गच्छता मातुलकुलं भरतेन तदानघः ।
शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ।”)

शत्रुघ्नजननी, स्त्री, (शत्रुघ्नस्य जननी ।) सुमित्रा ।
इति शब्दरत्नावली ।

शत्रुजित्‌, पुं, (शत्रून्‌ जयतीति । जि+“सत्सूद्वि-
षेति ।” ३ । २ । ६१ । इति क्विप्‌ । तस्तुक्‌ ।)
राजविशेषः । तस्य पुत्रः ऋतध्वजः । स एव
कुवलयाश्वः । इति मार्कण्डेयपुराणम्‌ ।

शत्रुञ्जयः, पुं, विमन्नाद्रिः । इति हेमचन्द्रः ।
(नागविशेषः । यथा, रामायणे ।२।३२।१०।
“नागः शत्रुञ्जयो नाम मातुलोऽयं ददौ मम ।
तं ते निष्कसहस्रेण ददामि द्विजपुङ्गव ।”
शत्रुं जयतीति । जि+“संज्ञायां भृतृवृ-
जीति ।” ३।२।४६ । इति खच्‌ । ततो मुम्‌ ।)
शत्रुजेतरि, त्रि ।

शत्रुन्तपः, त्रि, (शत्रुं तपति तापयति वा । तप+
“संज्ञायां भृतृवृजीति ।” ३ । २ । ४६ । इति
खच्‌ । ततो मुम्‌ ।) वैरितापकः । इति
मुग्धबोधव्याकरणम्‌ । (यथा, महाभारते । ४ ।
५२ । ११ ।
“शत्रुन्तपः कोपममृष्यमाणः
समर्द्दयत्‌ कुर्म्मगणेन पार्थम्‌ ।”)

शत्रुमर्द्दनः, पुं, (शत्रुं मर्द्दयतीति । मर्द्द+ल्यु ।)
शत्रुघ्नः । इति शब्दरत्नावली । (शत्रुहन्तरि,
त्रि । यथा, कथासरित्सागरे । ४२ । १७५ ।
“कथास्ते समरं प्राज्यः स्वामी नः शत्रुमर्द्दनः ।”)

शत्वरी, स्त्री, रात्रिः । इति त्रिकाण्डशेषः ।

शद्‌, ऌ ज औ शाते । इति कविकल्पद्रुमः ।
(भ्वा०-पर०-अक०-सक० च-अनिट्‌ ।) ऌ,
अशदत्‌ । ज, शादः शदः । औ, शत्स्यति । शात:
पतनं शातनञ्च । शीयते पत्रं इत्यात्‌ वायुः ।
शदोऽपि सामिव्यक्तिविषये आत्मनेपदम्‌ । केचि-
दिमं तुदादौ पठित्वा तत्सामर्थ्यात्‌ आत्मने-
पदानित्यत्वे शीयते शीयन्तीत्युदाहरन्ति । इति
दुर्गादासः ।

शद, औ गतौ । आङ्पूर्व्वोऽयमिति कविकल्प-
द्रुमः । (भ्वा०-पर०-सक०-अनिट्‌ ।) ताल-
व्यादिः । आशीयते । औ, आशात्सीत्‌ ।
इति दुर्गादासः ।

शदः, पुं, फलमूलादिः । शदधातोरप्प्रत्ययेन
निष्पन्नमेतत्‌ । इति सिद्धान्तकौमुदी ।

शद्रिः, पु, (शीयते इति । शद+“अदिशदिभूशु-
भिभ्यः क्रिन्‌ ।” उणा० ४ । ६५ । इति क्रिन्‌ ।)
मेघः । जिष्णुः । इति मेदिनी । हस्ती । इत्यु-
णादिकोषः ।

शद्रिः, स्त्री, (शद गतौ+“अदिशदीति क्रिन्‌ ।)
विद्युत्‌ । इति हेमचन्द्रः । शर्करा । इति
सिद्धान्तकौमुद्यामुणादिवृत्तिः ।

शद्रुः, त्रि, (शद शाते+“दाधेट्सिशदसदो रुः ।”
३ । २ । १५९ । इति रुः ।) पतनकर्त्ता ।
गन्ता । इति शद्धातो रुप्रत्ययेन निष्पन्नमेतत्‌ ।
इति व्याकरणम्‌ ।

शनकावलिः, स्त्री, गजपिप्पली । इति शब्द-
चन्द्रिका ।

शनपर्णी, स्त्री, (शनस्येव पर्णान्यस्याः । ङीप्‌ ।
पृषोदरादित्वात्‌ सस्य नः ।) कटुकी । इति
शब्दचन्द्रिका ।

शनिः, पुं, रव्यादिनवग्रहान्तर्गतसप्तमग्रहः । तत्प-
र्य्यायः । सौरिः २ शनैश्चरः ३ । इत्यमरः ।
नीलवासाः ४ मन्दः ५ छायात्मजः ६ । इति
त्रिकाण्डशेषः । पातङ्गिः ७ ग्रहनायकः ८
छायासुतः ९ भास्करिः १० नीलाम्बरः ११ ।
इति शब्दरत्नावली । आरः १२ क्रोडः १३
वक्रः १४ कोलः १५ यमानुः १६ पङ्गुः १७ ।
इति जटाधरः । कालः १८ सूर्य्यपुत्रः १९
असितः २० । इति ज्योतिस्तत्त्वम्‌ । अस्य
वर्णः कृष्णः । पश्चिमदिङ्नपुंसकान्त्यजातितमो-
गुणकषायरसमकरकुम्भराशिनीलकाश्मकसौ-
राष्ट्रदेशानामधिपतिरयम्‌ । कश्यपमुनिसन्तानः ।
शूद्रवर्णः । सूर्य्यसुतः । चतुरङ्गुलपरिमाणः ।
कृष्णवर्णवस्त्रः । गृध्रवाहनः । सूर्य्यपुत्रः । चतु-
र्भुजः । भल्लबाणवरशूलधनुर्धारी । अस्याधि-
देवता यमः । प्रत्यधिदेवता प्रजापतिः । इति
ग्रहयागतत्त्वद्रव्यकल्पकादयः । अपि च ।

“शनिर्विहङ्गोऽलिसवर्णकान्ति-
र्गूढाङ्गना धातुमयः स्थिरश्च ।
क्रूरः प्रतीच्यो तुवरोऽतिवृद्धो-
ऽकार्य्यानिलोत्थ दीर्घतनुर्दिनान्ते ।”

इति जीवकर्म्मोपकारकम्‌ । ३ ।

शब्द, क शब्दकृतौ। इति कविकल्पद्रुमः॥ (चुरा०-पर०-अक०-सेट्।) क, शब्दयति। सोपसर्गस्त्वाविष्कृतौ मतः। प्रशब्दयति गभीरमर्थं शिष्यः स्फुटीकरोतीत्यर्थः। इति दुर्गादासः॥

शब्दः, पुं, (शब्द+भावे घञ्। यद्वा, शप आक्रोशे + "शाशपिभ्यां ददनौ।" उणा० ४। ९७। इति दन्। पकारस्य बकारः।) श्रोत्रग्राह्यगुणपदार्थविशेषः। तत्पर्य्यायः। निनादः २ निनदः ३ ध्वनिः ४ ध्वानः ५ रवः ६ स्वनः ७ स्वानः ८ निर्घोषः ९ निर्ह्रादः १० नादः ११ निःस्वानः १२ निःस्वनः १३ आरवः १४ आरावः १५ संरावः १६ विरावः १७। इत्यमरः॥ संरवः १८ रावः १९। इति शब्दचन्द्रिका॥ घोषः २०। इति जटाधरः॥ स च ध्वन्यात्मको वर्णात्मकश्च। यथा,

"कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः।
सर्व्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते॥
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता।
कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते॥
उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता।
सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते।
तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात्॥"

इति भाषापरिच्छेदः॥

शब्दं निरूपयति।

"शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः।
सर्व्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते॥"

इति॥

नभोवृत्तिराकाशसमवेतः। दूरस्थशब्दस्याग्रहणादाह श्रोत्रोत्पन्न इति कण्ठसंयोगादिजन्या वर्णास्ते कादयो मता इति। ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता इति। आद्यशब्दस्य बहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते तेन चापरस्तद्व्यापक एवं क्रमेण श्रोत्रोत्पन्नो गृह्यते इति। कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते इति। आद्यशब्दात् दशदिक्षु दश शब्दा उत्पद्यन्ते। ततश्चान्ये दश शब्दा उत्पद्यन्ते इति भावः। अस्मिन् कल्पे गौरवादुक्तं कस्यचिन्मते इति। ननु शब्दस्य नित्यत्वादुत्पत्तिः कथमत आह। उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता इति। शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः। ननु स एवायं ककार इत्यादि प्रत्यभिज्ञानाच्छब्दानां नित्यत्वम्। इत्यश्चोत्पादविनाशबुद्धिर्भ्रमरूपा चेदत आह सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते। तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् इति॥ तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयः। ननु तद्व्यक्त्यभेदो विषयः उक्तप्रतीतिविरोधात्। इत्थञ्च द्वयोरपि बुद्ध्योर्न भ्रमत्वमिति। ननु सजातीयत्वं सोऽयमिति प्रत्यभिज्ञायां भासते इति कुत्र दृष्टमित्यत आह तदेवेति। यदौषधं मया कृतं तदेवान्येनापि कृतमित्यादि दर्शनादिति भावः। इति सिद्धान्तमुक्तावली॥ *॥

दशविधशब्दा यथा,—

"षड्जर्षभसगान्धारमध्यमः पञ्चमस्तथा।
अतः परन्तु विज्ञेयो निषादो धैवतस्तथा।
इष्टश्चानिष्टशब्दश्च संहतः प्रविभागवान्॥"

इत्याश्वमेधिकपर्व्व॥

शब्दविशेषाणां नामविशेषा यथा,—

"शब्दो गुणानुरागोत्थः प्रवादः पौनृतं

तृणाम्।

पर्द्दनं गुदजे शब्दे पर्द्दनं कुक्षिसम्भवे॥
क्ष्वेडा तु सिंहनादोऽथ क्रन्दनं सुभटध्वनिः।
कोलाहलः कलकलस्तुमुलो व्याकुलो रवः॥
मर्म्मरो वस्त्रपर्णादेर्भूषणानान्तु शिञ्जितम्।
हेषा ह्रेषा तुरङ्गाणां गजानां गर्ज्जबृंहिते॥
विस्फारो धनुषां हम्भारवो गोर्वलदस्य च।
स्तनितं गर्जितं गर्ज्जिः स्वनितं रसितादि च॥
कूजितं स्यादिहङ्गानां तिरश्चां रुतवाशिते।
वृकस्य रेषणं रेषा बुक्कनं भषणं शुनः॥
पीडितानान्तु कणितं मणितं रतकूजितम्।
प्रणादः प्रणयस्तन्त्रा मर्द्दलस्य तु गुन्दलः॥
चीत्कारस्तु कीचकानां भेर्य्यां नादस्तु टट्टरः।
तारोऽत्युच्चैर्ध्वनिर्मन्द्रो गम्भीरो मधुरः कलः॥
काकली तु कलः सूक्ष्म एकतालो लयानुगः।
काकुर्ध्वनिविकारः स्यात् प्रतिश्रुत् प्रतिध्वनिः॥"

इति हेमचन्द्रः॥

अथैकार्थानुलोमविलोमसमशब्दाः। नयन १ नर्त्तन २ कनक ३ कण्टक ४ सध्दिम ५ कलङ्क ६ कालिका ७ सरस ८ सहास ९ मध्यम १० सदस्य ११ नदेन १२ तावता १३ तारता १४ विभावि १५ करक १६ कम्बुक १७ काचिका १८ नन्दन १९ दम्भद २० दमद २१ योग्ययोः २२ लगुलग २३ गुततगु २४ हावदहा २५ पतदातप २६ वरभैरव २७ कलपुलक २८ वरकैरव २९ वरपौरव ३० तरणीरत ३१ रदमोदर ३२ नदभेदन ३३ दम्पतीपदम् ३४ लङ्काकङ्काल ३५ माधववमाव वधमा ३६ नन्दनन्दन ३७ तद्धित ३८ समास ३९ कारिका ४० पादपाः ४१ जलज ४२ नाना ४३ मम ४४ ॥*॥ अथान्यार्थकानुलोमविलोमशब्दाः। वन्दे १ देवे २ लेख ३ रवौ ४ भानौ ५ हंसा ६ जीवा ७ यामा ८ विभु ९ वद १० रम ११ यम १२ कम्प १३ राधा १४ राधया १५ सुनामा १६ नन्दक १७ मालिका १८ कालिनी १९ राजते २० भारती २१ हासिका २२ गगन २३ करका २४ भार्गव २५ कटकम् २६ दीनरचा २७ महोरगा २८ वातरपिना २९ पिनाकिना ३० सदालिका ३१ यमराज ३२ हरिदेवे ३३ मयायामा ३४ भोविकर्त्तन ३५ नन्दनवन ३६ नलकूवर ३७ सहसानुत ३८ रसविभवेन ३९ साहमहमिक ४० नवतम, संमद ४१ मार ४२ वत ४३ युवा ४४ सदा ४५ ग्रमि ४६ मया ४७ लता ४८ नुत ४९ लव ५०, विभा ५१ ॥ * ॥ अथ संस्कृतप्राकृतसमपुंलिङ्गशब्दाः। आहार १ हार २ विहार ३ वार ४ समर ५ सम्भोग ६ रोग ७ असुर ८ संहार ९ अमर १० वार ११ वारण १२ गण १३ टङ्कार १४ भार १५ आकर १६ लोल १७ उल्लोल १८ विलास १९ वायस २० हर २१ अहङ्कार २२ हीर २३ अङ्कुर २४ नीहार २५ उरग २६ राग २७ भाल २८ तरल २९ गोविन्द ३० कन्द ३१ उदर ३२ तरण ३३ तरणि ३४ हास ३५ मोह ३६ सन्दोह ३७ माम ३८ खुर ३९ खर ४० तर ४१ मल ४२ शङ्कर ४३ आरम्भ ४४ दाम ४५ कर ४६ करि ४७ किरि ४८ कीर ४९ लोल ५० कल्लोल ५१ धीर ५२ मल ५३ मलय ५४ करीर ५५ वामदेव ५६ अलि ५७ वीर ५८ नर ५९ नरक ६० करङ्क ६१ दल ६२ चण्डाल ६३ रङ्ग ६४ दर ६५ मरण ६६ कलङ्क ६७ कारण ६८ आकार ६९ पङ्क ७० खल ७१ बकुल ७२ कुरङ्ग ७३ देह ७४ सन्देह ७५ सङ्ग ७६ पर ७७ कुरर ७८ तरङ्ग ७९ चाप ८० सचार ८१ भङ्ग ८२ अरि ८३ हरि ८४ परिवाह ८५ कण्ठ ८६ कुण्ठ ८७ अधि ८८ दाह ८९ परिसर ९० रवि ९१ हाहा ९२ मञ्जु ९३ मञ्जीर ९४ वाह ९५ अचल ९६ कुल ९७ कुमार ९८ कुम्भ ९९ कुम्भीर १०० सार १०१ विरल १०२ चपल १०३ जार १०४ कन्दर १०५ उदार १०६ पार १०७ जम्बीर १०८ केशरि १०९ वराह ११० मुरारि १११ काल ११२ काकोल ११३ कुन्तल ११४ चन्दन ११५ विराम ११६ वाल ११७ आलोक ११८ बाहु ११९ रण १२० सङ्गर १२१ चोल १२२ भार १२३ संहार १२४ केरल १२५ समीरण १२६ टङ्क १२७ ताल १२८ आसार १२९ चामर १३० कुटीर १३१ तुरङ्ग १३२ स्मर १३३ कङ्काल १३४ कन्दल १३५ कराल १३६ विकास १३७ पूर १३८ हेरम्ब १३९ कम्बु १४० विधु १४१ सिन्धु १४२ बुध १४३ अनुबन्ध १४४ कुन्द १४५ इन्दु १४६ मन्दर १४७ समीर १४८ समूह १४९ गन्ध १५० भीम १५१ अङ्क १५२ सङ्कर १५३ किरीट १५४ तमाल १५५ गुञ्ज १५६ हिन्ताल १५७ तोमर १५८ महीरुह १५९ बिम्ब १६० पुञ्ज १६१ हिण्डीर १६२ पिण्ड १६३ वर १६४ संवर १६५ कोण १६६ बाण १६७ संरम्भ १६८ सोम १६९ परिरम्भ १७० विकार १७१ वाण १७२ वसन्त १७३ आसव १७४ वेसन्त १७५ वास १७६ वासव १७७ वासर १७८ कासार १७९ सार १८० सरस १८१ किरण १८२ अरुण १८३ वारण १८४ ॥ * ॥ अथ संस्कृतप्राकृतसमस्त्रीलिङ्गशब्दाः। हेला १ खेला २ कला ३ माला ४ रसाला ५ काहला ६ अचला ७ वीला ८ लीला ९ वला १० वाला ११ लोला १२ दोला १३ अलसा १४

मणी १५ धरणी १६ धारणी १७ गोणी १८ रोहिणी १९ रमणी २० मणी २१ वीणा २२ वाणी २३ वणा २४ वेणी २५ दाढ़ा २६ गङ्गा २७ तरङ्गिणी २८ कन्दली २९ लहरी ३० गारी ३१ रामा ३२ भेरी ३३ वसुन्धरा ३४ काली ३५ कराली ३६ प्रासण्डा ३७ चण्डा ३८ रण्डा ३९ तुला ४० मही ४१ ॥ * ॥ अथ संस्कृतप्राकृतक्लीवलिङ्गसमशब्दाः । जल १ फल २ मल ३ मूल ४ वारि ५ कीलाल ६ कूल ७ वल ८ पत्तन ९ दुकूल १० लिङ्ग ११ गम्भीर १२ कूल १३ सलिल १४ कमल १५ चीर १६ तुच्छ १७ राजीव १८ नीर १९ दल २० रजत २१ कुटीर २२ दारु २३ लाल २४ पटीर २५ कारण २६ रोहण २७ चेल २८ कुहर २९ अम्बर ३० मन्दिर ३१ कुटमल ३२ मण्डल ३३ तामरस ३४ कुण्डल ३५ अङ्गद ३६ पुर ३७ अरविन्द ३८ लोह ३९ अङ्ग ४० तडाग ४१ करण ४२ कुल ४३ तोरण ४४ भरण ४५ तुङ्ग ४६ अलम् ४७ आगार ४८ भासुर ४९ ॥ * ॥ अथ संस्कृतप्राकृतसमक्रियापदानि । भण १ देहि २ गच्छ ३ सहर ४ कुरु ५ चोदय ६ मारय ७ अवगच्छ ८ अवलोकय ९ अवचिन्तय १० खाद ११ ॥ * ॥ अथ निरोष्ठ्यपुलिङ्गशब्दाः । नीहार १ हार २ हरिण ३ अङ्क ४ घर ५ अट्टहास ६ कैलास ७ काल ८ रद ९ नारद १० सिंह ११ शक्र १२ शत्र १३ अहि १४ हंस १५ घनसार १६ हलि १७ इन्द्र १८ नाग १९ किशोर २० निर्झर २१ शरदङ्ग २२ चन्द्रकान्त २३ शृङ्गार २४ सागर २५ तडाग २६ जलाशय २७ खग २८ दुर्गेश २९ तक्षक ३० नख ३१ घात ३२ दीधित ३३ अच ३४ नाराच ३५ काच ३६ कच ३७ कीचक ३८ चचरीक ३९ चाणक्य ४० चारण ४१ गण ४२ घन ४३ शाण ४४ शोण ४५ संघार ४६ सारङ्ग ४७ रस ४८ अरि ४९ रसाल ५० साल ५१ कङ्काल ५२ काल ५३ कलि ५४ शैल ५५ खल ५६ अनल ५७ अर्क ५८ किञ्जल्क ५९ कल्क ६० कर ६१ शङ्कर ६२ कीर ६३ हीर ६४ लङ्केश ६५ केश ६६ गर ६७ केशव ६८ देश ६९ शेष ७० आनन्द ७१ नन्दन ७२ धनञ्जय ७३ शक्रकीट ७४ कीट ७५ अरि ७६ कटाह ७७ कटाह ७८ कटाक्ष ७९ यक्ष ८० दक्ष ८१ अङ्ग ८२ यश ८३ अनङ्ग ८४ अञ्जलि ८५ यन्त्र ८६ यत्न ८७ रत्नाकर ८८ अन्धक ८९ धराधर ९० धीर ९१ शौर ९२ नाशीर ९३ नारायण ९४ लक्ष्य ९५ हृषीकेश ९६ ॥ * ॥ अथ निरोष्ठ्यस्त्रीलिङ्गशब्दाः । गङ्गा १ गीता २ शची ३ सीता ४ सिद्धि ५ सन्ध्या ६ शरद ७ गया ८ आर्या ९ काशी १० निशा ११ नासा १२ कान्ति १३ शान्ति १४ दया १५ रया १६ आर्द्रा १७ निद्रा १८ दरिद्रा १९ इच्छा २० छाया २१ लाक्षा २२ हूति २३ क्षति २४ काया २५ जाया २६ कथा २७ कान्ता २८ धात्री २९ रात्रि ३० रति ३१ शक्ति ३२ कन्धरा ३३ धारणा ३४ धारा ३५ तारा ३६ कारा ३७ जरा ३८ धरा ३९ आलि ४० राजि ४१ रजनी ४२ अर्चि ४३ कीर्त्ति ४४ कन्या ४५ तटी ४६ नटी ४७ नारी ४८ शारी ४९ दरी ५० दासी ५१ घटिका ५२ खटिका ५३ जटा ५४ कथा ५५ रथा ५६ शिखा ५७ सखी ५८ कालिन्दी ५९ कलिका ६० कला ६१ काली ६२ कराली ६३ दुर्गा ६४ ॥ * ॥ अथ निरोष्ठ्यक्लीबलिङ्गशब्दाः । चरण १ करण २ चक्र ३ नक्र ४ नक्षत्र ५ तक्र ६ रजत ७ शत ८ शरीर ९ चीर १० नीर ११ अचि १२ क्षीर १३ धन १४ कनक १५ निधान १६ ध्यान १७ सन्धान १८ दान १९ नलिन २० नगर २१ गात्र २२ छत्र २३ नेत्र २४ अस्थि २५ दात्र २६ आलिङ्गन २७ स्थान २८ शिर २९ चरित्र ३० जल ३१ स्थल ३२ स्थाल ३३ कलत्र ३४ चित्र ३५ कीलाल ३६ जाल ३७ जालक ३८ नाल ३९ दैन्य ४० लिङ्ग ४१ अङ्ग ४२ लावण्य ४३ हिरण्य ४४ सैन्य ४५ अस्त्र ४६ अजिन ४७ यान ४८ नाटक ४९ काञ्चन ५० आनन ५१ कानन ५२ हाटक ५३ नाटक ५४ नाट्य ५५ तैल ५६ चैल ५७ रसातल ५८ सदन ५९ सदन ६० घ्राण ६१ निदान ६२ दधि ६३ चन्दन ६४ अधर ६५ लक्षण ६६ अच ६७ शाल ६८ शाक्ल ६९ दल ७० हल ७१ ॥ * ॥ अथ निरोष्ठ्यक्रियापदानि । आशास्ते १ अस्ति २ चकास्ति ३ निन्दति ४ हसति ५ आश्वसति ६ क्रीडति ७ ध्यायति ८ अधीते ९ याचते १० दाति ११ वहति १२ आराधयति १३ नश्यति १४ शेते १५ गच्छति १६ यच्छति १७ इच्छति १८ नयति १९ आयाति २० हन्ति २१ ईहते २२ अश्नाति २३ स्नाति २४ दधाति २५ याति २६ जयति २७ हसति २८ करोति २९ । इति कविकल्पलतायां १ स्तवक २ कुसुमम् ॥

**शब्दकारः** त्रि (शब्दं करोतीति । कृ + अण् । "न शब्दश्लोककलहगाथेति ।" ३ । २ । २३ । इति टप्रतिषेधः ।) शब्दं करोति यः । यथा

"ससामदस्कर पक्षी वैरकारं नराशनम् ।
तस्य कलहकारोऽसौ शब्दकारः पपात
खम् ॥"

इति भट्टौ ५ सर्गः ।

**शब्दग्रहः** पुं (शब्दं गृह्णातीति । ग्रह + "ग्रहवृदृनिश्चिगमश्च । ३ । ३ । ५८ । इति अप् ।) कर्णः । इत्यमरः ॥ शब्दस्य ग्राहकः ॥

**शब्दनः** त्रि (शब्दं कर्तुं शीलमस्य । शब्द + "चलनशब्दार्थादकर्मकाद्युच् । ३ । २ । १४८ । इति तच्छीले युच् ।) शब्दकर्त्ता । तत्पर्यायः । रवणः २ । इत्यमरः ॥ (शब्द + भावे ल्युट् ।) शब्दमात्रे, क्ली ॥

**शब्दभेदी** [न्] पुं, (शब्दमनुसृत्य भेत्तुं शीलमस्य । भिद् + णिनि ।) अर्ज्जुनः । इति त्रिकाण्डशेषः ॥ पायुः । इति केचित् ॥ बाणविशेषः । इति रामायणम् ॥

**शब्दवेधी** [न्] पुं (शब्दमनुसृत्य वेद्धुं शीलमस्य । विध + णिनि ।) अर्ज्जुनः । इति मनःस्रय । दशरथराजः । यथा —

"लब्धशब्देन कौशल्ये कुमारेण धनुष्मता ।
कुमारः शब्दवेधीति मया पापमिदं कृतम् ॥"

इति वाल्मीकीये रामायणे ६३ अध्यायः ॥

शब्दवेधी इत्येवं लब्धकीर्त्तिनेति यावत् । इति तट्टीका ॥

**शब्दाधिष्ठानं** क्ली (शब्दस्य अधिष्ठानं आश्रयस्थानम् ।) कर्णः । इति हेमचन्द्रः ॥

**शम** उ भ य इर शमे । इति कविकल्पद्रुमः ॥ (दिवा० पर० अक० सेट् । क्त्वावेट् ।) उ, शमित्वा शान्त्वा । भ य शाम्यति । इर्, अशमत् अशमीत् । पुषादित्वात् ङ इत्यन्ये । शमः शान्तीभावः । प्रशाम्य रुष्टापि विना इवाग्नि रिति रघुः । शम इति पन्थस्य न्यन्तस्यापि सम्भवे शान्तीकरणमप्ययमिति धातुप्रदीपः ।

'वरेण शमितं लोकानलं दग्धुं हि तत्तपः ।'

इति कुमारसम्भवम् ॥

'वचो निशम्याधिपतिर्दिवौकसाम् ।'

इत्यादावनेकार्थत्वात् श्रुत्यर्थः ॥ वा शम अम इत्यत्र वाशब्दस्य व्यवस्थावाचित्वादस्य मौ मित्त्वं शमयति । इति दुर्गादासः ॥

**शम** इ क न आलोचे । इति कविकल्पद्रुमः ॥ (चुरा० आत्म० उभ० इति केचित् सक० सेट् ।) आलोचं प्रणिधानम् । वा शम अम इत्यत्र वाशब्दस्य व्यवस्थावाचित्वात् अस्य स्वार्थे मौ ह्रस्वाभावः । इ क शामयते कार्यं सुधीः । न, शामयति शामयते ।

"निशामय तदुत्पत्तिं विस्तराद्गदतो मम ।"

अयमात्मनेपदीत्यन्ये । इति दुर्गादासः ॥

**शमः** पुं (शाम्यत इति । शम + "हलश्च" इति घञ् "नोदात्तोपदेशस्य" इति वृद्ध्यभावः ।) शान्तिः । इत्यमरः ॥ (यथा राजतरङ्गिण्याम् । ४ । ३८१ ।

"विराग्यशैलमधिमात् तस्य चित्तमहोदधेः ।
प्रकोपकालकूटस्य पश्चात् शमसुधोदयात् ॥")

मोक्षः । इति त्रिकाण्डशेषः ॥ पाणिः । इति शमशब्दटीकायां रामाश्रमः ॥ उपचारः । इति राजनिर्घण्टः ॥ अन्तरिन्द्रियनिग्रहः । इति वेदान्तसारः ॥ अन्तःकरणसंयमः । इति भगवद्गीतादशमाध्यायस्य ४ श्लोकटीकायां श्रीधरस्वामी ॥ (यथा गीतायाम् । १० । ४ ।

"बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः ॥")

विषयककर्मोपरमः । इति च तत्रैव ६ अध्यायस्य ३ श्लोकटीकायां श्रीधरस्वामी ॥ (वाह्येन्द्रियनिग्रहः । यथा भागवते । ३ । १२ । ३३ ।

"सत्यं शौचं दया मौनं बुद्धिः श्रीः धृतिः क्षमा ।
शमो दमो भगश्चेति चतुष्पाद्याति धर्मकम् ॥"

सर्व्वकर्म्मनिवृत्तिः । यथा, गीतायाम् । ६ । ३ ।
"योगारूढस्य तस्यैव शमः कारणमुच्यते ॥"
"शमः उपरमः सर्व्वकर्म्मभ्यो निवृत्तिः ।" इति शङ्करभाष्यम् ॥ शान्तरसस्य स्थायिभावः । यथा, साहित्यदर्पणे । ३ । २३९ ।
"शान्तः शमः स्थायिभाव उत्तमः प्रकृति-
र्मतः ॥"
निवृत्तिः । यथा, राजतरङ्गिण्याम् । २ । ५६ ।
"अभवन्निर्म्मलं व्योम देवीशक्त्यैः सह क्रमात् ।
सार्द्धं भूपालशोकेन दुर्भिक्षञ्च शमं ययौ ॥")

शमकः, त्रि, (शामयतीति । शम + णिच् + ण्वुल् । "नोदात्तोपदेशस्येति ।" ७ । ३ । ३४ । इति न दीर्घः । ) शान्तिकारकः । ण्यन्तशमधातोर्णकप्रत्ययेन निष्पन्नमेतत् ॥

शमथः, पुं, ( शम + "दृशमिदमिभ्यश्च ।" इति अथः । इत्युज्ज्वलदत्तः । ३ । ११४ । ) शान्तिः । इत्यमरः ॥ मन्त्री । इति मेदिनी ॥

शमनं, क्ली, ( शम + ल्युट् । ) यज्ञार्थपशुहननम् । इत्यमरः ॥ शान्तिः । इति मेदिनी ॥ ( यथा, पाणिनौ । ५ । १ । ३८ । "वातस्य शमनं कोपनं वा ।" इति काशिका ॥ ) चर्व्वणम् । इति धरणिः ॥ हिंसा । इति हेमचन्द्रः ॥ ( प्रतिसंहारः । यथा, मार्कण्डेये । ७८ । १६ ।
"निमेषकाष्ठादिमयः कालरूपः क्षयात्मकः ।
प्रसीद स्वेच्छया रूपं स्वतेजःशमनं कुरु ॥"
निवारकः । यथा, तत्रैव देवीमाहात्म्ये ।
"दुर्व्वृत्तवृत्तशमनं तव देवि ! शीलम् ॥")

शमनः, पुं, ( शमयति पापिनां कर्म्म आलोच्यतीति । कर्त्तरि ल्युः ।) यमः । इत्यमरः ॥ मृगभेदः । इति शब्दचन्द्रिका ॥ कलायः । इति राजनिर्घण्टः ॥

शमनस्वसा, [ ऋ ] स्त्री, ( शमनस्य यमस्य स्वसा । ) यमुना । इत्यमरः ॥

शमनी, स्त्री, ( शमयति नृणां व्यापारान् । शम + ल्युः । स्त्रियां ङीप् । ) रात्रिः । इति शमनीषद्‌शब्ददर्शनात् ॥ ( शाम्यते अनेन इत्यर्थे करणे ल्युटि शान्तिकारके, त्रि । यथा, भागवते । ३ । २४ । ३९ ।
"मात्रे चाध्यात्मिकीं विद्यां शमनीं सर्व्वकर्म्मणाम् ॥")

शमनीषदः, पुं, ( शमन्यां सीदन्तीति । सद + अच् ।) निशाचरः । राक्षसः । इति त्रिकाण्डशेषः ॥

शमलं, क्ली, ( शम + "शाकशम्योर्नित् ।" उणा० १ । । १११ । इति कलः । ) विष्ठा । इत्यमरः ॥ पापम् । इति संक्षिप्तसारोणादिवृत्तिः ॥ (यथा, भागवते । २ । ७ । ३ ।
"चक्रे ययात्मशमलं गुणसङ्गपङ्कम् ॥")

शमान्तकः, पुं, ( शमस्य शान्तेरन्तकः । ) कामदेवः । इति त्रिकाण्डशेषः ॥

शमिः, स्त्री, शिम्बा । इति हेमचन्द्रः ॥

शमितः, त्रि, (शम + क्तः ।) शान्तः । इत्यमरः ॥

शमिरः, पुं, शमीवृक्षः । इति शब्दरत्नावली ॥

शमिरोहः, पुं, शिवः । इति त्रिकाण्डशेषः ॥

शमी, स्त्री, वृक्षविशेषः । शाँइ इति भाषा । ( यथा, शाकुन्तले । ३ ।
"अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥")
तत्पर्य्यायः । सक्तुफला २ शिवा ३ । इत्यमरः ॥ शक्तुफली ४ । इति शब्दरत्नावली ॥ शान्ता ५ तुङ्गा ६ कचरिपुफला ७ केशमथनी ८ ईशानी ९ लक्ष्मीः १० तपनतनया ११ इष्टा १२ शुभकरी १३ हविर्गन्धा १४ मेध्या १५ दुरितदमनी १६ शक्तुफलिका १७ सुसुभा १८ मङ्गल्या १९ सुरभिः २० पापशमनी २१ भद्रा २२ शङ्करी २३ केशहन्त्री २४ शिवाफला २५ सुपत्रा २६ सुखदा २७ । अस्या गुणाः । रूक्षत्वम् । कषायत्वम् । रक्तपित्तातिसारनाशित्वञ्च । तत्फलगुणाः । गुरुत्वम् । स्वादुत्वम् । रूक्षत्वम् । उष्णत्वम् । केशनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"शमी शक्तुफला तुङ्गा केशहन्त्री शिवाफला ।
मङ्गल्या च तथा लक्ष्मीः शमीरः खल्विका
स्मृता ॥
शमी तिक्ता कटुः शीता कषाया रेचनी लघुः ।
कफकासश्वासश्वासकुष्ठार्शःकृमिजित् स्मृता ॥"
इति भावप्रकाशः ॥ ॥
शिम्बा । छिमड़ा इति भाषा । इत्यमरः ॥ बाकुचिः । इति मेदिनी ॥ (कर्म्म । यथा, ऋग्वेदे । ६ । २ । २ ।
"ईळे यज्ञेभिः शशमे शमीभिः ।
"शमीभिः कर्म्मभिः कृच्छ्रचान्द्रायणादिभिः ॥"
इति तद्भाष्ये सायणः ॥ )

शमी, [न्] त्रि, शान्तः । शमो विद्यतेऽस्य इत्यर्थे इनप्रत्ययेन निष्पन्नमिदम् ॥

शमीकः, पुं, मुनिविशेषः । यथा,—
"जलाशयमचक्षाणः प्रविवेश तमाश्रमम् ।
ददर्श मुनिमासीनं शान्तं मीलितलोचनम् ॥"
इति श्रीभागवते । १ । १८ ॥
अस्यार्थः । अचक्षाणः अपश्यन् । तं प्रसिद्धमाश्रमं तस्मिन् मुनिं शमीकम । इति श्रीधरस्वामी ॥

शमीगर्भः, पुं, (शम्या गर्भः ।) ब्राह्मणः । वह्निः । इति हेमचन्द्रः ॥

शमीधान्यं, क्ली.(शमी यज्ञादिकर्म्म तदर्थं धान्यम् ।) माषादिः । इत्यमरः ॥ तत्पर्य्यायगुणाः ।
"शमीजाः शिम्बिजाः शिम्बातराः सूप्याश्च
वैदलाः ।
वैदला मधुरा रूक्षाः कषायाः कटुपाकिनः ॥
वातलाः कफपित्तघ्ना बद्धमूत्रमला हिमाः ।
ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारकाः ॥"
मुद्गमसूरयोराध्मानकारित्वमन्यवैदलापेक्षया । न तु सर्व्वथा । एतयोरपि किञ्चिदाध्मानकारित्वदर्शनात् । इति भावप्रकाशः ॥ ॥
अपि च ।
"शूकधान्यं शमीधान्यं समातीतं प्रशस्यते ।
पुरातनं प्रायेणातिनवं गुरु ॥
यवगोधूममाषाश्च तिलाश्चातिनवा हिताः ।
पुराणा विरसा रूक्षा न तथार्थकरा मताः ॥"
इति राजवल्लभः ॥

शमीपत्रा, स्त्री, ( शम्याः पत्राणीव पत्राणि यस्याः । ) लज्जालुवृक्षः । इति जटाधरः ॥

शमीरः, पुं, (ह्रस्वा शमी । "कुटीशमीशुण्डाभ्यो रः ।" ५ । ३ । ८८ । इति रः ।) स्वल्पा शमी । इत्यमरः ॥

शम्पा, स्त्री, विद्युत् । इत्यमरः ॥

शम्पाकः, पुं. आरग्वधः । इत्यमरः ॥ विपाकः । यावकः । इति हेमचन्द्रः ॥ ( हस्तिनापुरवासी कश्चिद्ब्राह्मणः । यथा, महाभारते । १२ । १७६ । २३ ।
"इत्येतद्धास्तिनपुरे ब्राह्मणेनोपवर्णितम् ।
शम्पाकेन पुरा मह्यं तस्मात्त्यागः परो मतः ॥")

शम्पातः, पुं, आरग्वधः । इति शब्दरत्नावली ॥

शम्ब, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) शम्बति । इति दुर्गादासः ॥

शम्बः, पुं, ( शम् + "शमेर्ब्बन् ।" उणा० ४ । ९४ । इति वन् । यद्वा, शमस्त्यस्येति । शं + "कंशंभ्यां बभयुस्तितुतयसः ।" ५ । २ । १३८ । इति वः ।) वज्रम् । (यथा, ऋग्वेदे । १० । ४२ । ७ ।
"उग्रो यः शम्बः पुरुहूत तेन ।"
"शम्ब इति वज्रनाम ।" इति तद्भाष्ये सायणः ॥)
मुषलाग्रस्थलौहमण्डलकम् । इति मेदिनी ॥ लौहकाञ्ची । इति हेमचन्द्रः ॥ अनुलोमकर्षणम् । इति शम्बाकृतशब्दटीकायां भरतः ॥ दरिद्रः । इति संक्षिप्तसारोणादिवृत्तिः ॥ भाग्यवति, त्रि । इति रामाश्रमः ॥

शम्बरं, क्ली, सलिलम् । व्रतम् । वित्तम् । इति नानार्थरत्नमाला ॥ चित्रम् । बौद्धव्रतविशेषः । इति विश्वहेमचन्द्रौ ॥ ( मेघः । यथा, ऋग्वेदे । २ । २४ । २ । "अवर्द्दर्मन्युना शम्बराणि ॥"
"शम्बराणि मेघनामैतत् मेघान् अवर्द्दः वर्षणार्थं विदारितवान् ॥" इति तद्भाष्ये सायणः ॥)

शम्बरः, पुं, मृगविशेषः । दैत्यविशेषः । इति मेदिनी ॥ ( यथा, ऋग्वेदे । १ । ५१ । ६ ।
"अरन्धयो तिथिग्वाय शम्बरम् ।"
"शम्बरं एतन्नामानमसुरम् ।" इति तद्भाष्ये सायणः ॥ यथा च महाभारते ।१।६५।२२ ।
"शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः ।
असिलोमा च केशी च दुर्ज्जयश्चैव दानवः ॥")
मत्स्यविशेषः । शैलविशेषः । जिनभेदः । इति विश्वः ॥ युद्धम् । श्रेष्ठः । इति धरणिः ॥ चित्रकवृक्षः । लोध्रः । अर्ज्जुनवृक्षः । इति राजनिर्घण्टः ॥ शम्बरासुरस्य वधोपाख्यानं श्रीभागवते १० स्कन्धे ५५ अध्याये द्रष्टव्यम् ॥

शम्बरकन्दः, पुं, (शम्बरनामकः कन्दः ।) वाराहीकन्दः । इति राजनिर्घण्टः ॥

पुलस्त्य उवाच ।
"यदाषाढ़ी समायाति व्रजते चोत्तरायणम् ।
तदा स्वपिति देवेशो भोगिभोगे श्रियः पतिः ॥
प्रतिसुप्ते विभौ तस्मिन् देवगन्धर्व्वगुह्यकाः ।
देवानां मातरश्चापि प्रसुप्ताश्चाप्यनुक्रमात् ॥
नारद उवाच ।
कथयस्व सुरादीनां शयने विधिमुत्तमम् ।
सर्व्वस्यानुक्रमेणैव पुरस्कृत्य जनार्द्दनम् ॥
पुलस्त्य उवाच ।
मिथुनाभिगते सूर्य्ये शुक्लपक्षे तपोधन ।
एकादश्यां जगत्स्वामिशयनं परिकल्पयेत् ॥
शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य केशवम् ।
कृत्वोपवीतकञ्चैव सम्यक् संपूज्य च द्विजान् ॥
अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः ।
लब्ध्वा पीताम्बरधरं स्वस्तिनिद्रां समानयेत् ॥
त्रयोदश्यां ततः कामः स्वपते शयने शुभे ।
कदम्बानां सुगन्धानां कुसुमैः परिकल्पिते ॥
चतुर्द्दश्यां ततो यक्षाः स्वपन्ति सुखशीतले ।
सुवर्णपङ्कजकृते सुखास्तीर्णोपधानके ॥
पौर्णमास्यां उमानाथः स्वपते चर्म्मसंस्तरे ।
वैयाघ्रे च जटाभारं समुद्ग्रथ्यान्यचर्म्मणा ॥
ततो दिवाकरो राशिं संप्रयाति च कर्कटम् ।
ततोऽमराणां रजनी भवते दक्षिणायनम् ॥
ब्रह्मा प्रतिपदि तथा नीलोत्पलदलेऽनघ ।
तल्पे स्वपिति देवानां दर्शयन् मार्गमुत्तमम् ॥
विश्वकर्म्मा द्वितीयायां तृतीयायां गिरेः सुता ।
विनायकश्चतुर्थ्यान्तु पञ्चम्यामपि धर्म्मराट् ॥
षष्ठ्यां स्कन्दश्च स्वपिति सप्तम्यां भगवान् रविः ।
कात्यायनी तथाष्टम्यां नवम्यां कमलालया ॥
दशम्यां भुजगेन्द्राश्च स्वपन्ति वायुभोजनाः ।
एकादश्यान्तु कृष्णायां साध्या ब्रह्मन् स्वपन्ति हि ॥
अथ क्रमस्ते गदितो निशायां शयने मुने ।
स्वपत्सु तेषु देवेषु प्रावृट्कालः समाययौ ॥
कङ्काः समं वलाकाभिरारोहन्ति नगोत्तमान् ।
वायसाश्चापि कुर्व्वन्ति नीड़ानि मुनिपुङ्गव ।
वायस्यश्च स्वपन्त्येता ऋतौ गर्भभरालसाः ॥
यस्यां तिथ्यां प्रस्वपिति विश्वकर्म्मा प्रजापतिः ।
द्वितीया सा शुभा पुण्या त्वशून्या शयनोदिता ॥
तस्यां तिथावर्च्च्य हरिं श्रीवत्साङ्कं चतुर्भुजम् ।
पर्य्यङ्कस्थं समं लक्ष्म्या गन्धपुष्पादिभिर्मुने ॥
ततो देवाय शय्यायां फलानि प्रक्षिपेत् क्रमात् ।
सुरभीणि निवेद्येत्थं विज्ञाप्यो मधुसूदनः ॥
यथा हि लक्ष्म्या न वियुज्यसे त्वं
त्रिविक्रमानन्त जगन्निवास ।
तथात्वशून्यं शयनं सदैव
त्वस्माकमेवेह तव प्रसादात् ॥
यदा त्वशून्यं तव देव तल्पं
स्वयं हि लक्ष्म्या शयने सुरेश ।
सत्येन तेनामितवीर्य्य विष्णो
गार्हस्थ्यनाशो मम नास्तु देव ॥
इत्युच्चार्य्य प्रणम्येशं प्रसाद्य च पुनः पुनः ।
नक्तं भुञ्जीत देवर्षे तैलक्षारविवर्ज्जितम् ॥
द्वितीयेऽह्नि द्विजाग्र्याय फलं दद्याद्विचक्षणः ।
लक्ष्मीधरः प्रीयतां मे इत्युच्चार्य्य निवेदयेत् ॥
अनेन तु विधानेन चातुर्मास्यव्रतं चरेत् ।
यावद्वृश्चिकराशिस्थः प्रतिभाति दिवाकरः ।
ततो विबुध्यन्ति सुराः क्रमशः क्रमशो मुने ॥
नभस्ये मासि च तथा या स्यात् कृष्णाष्टमी शुभा ।
युक्ता मृगशिरेणैव सा तु कालाष्टमी स्मृता ॥
तस्यां सर्व्वेषु लिङ्गेषु तिथौ स्वपिति शङ्करः ।
वसते सन्निधाने तु तत्र पूजाक्षया स्मृता ॥"
इति वामने १६ अध्यायः ॥ *॥

अथ हरिशयनादिव्यवस्था । भविष्यनारदीययोः ।
"मैत्राद्यपादे स्वपितीह विष्णु-
र्वैष्णवमध्ये परिवर्त्तते च ।
पौष्णावसाने च सुरारिहन्ता
प्रबुध्यते मासचतुष्टयेन ॥"
मैत्रमनुराधा । वैष्णवं श्रवणा । पौष्णं रेवती ।
भविष्ये ।
"निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत् ॥"
इत्यत्र नक्षत्रयोगप्राप्तौ फलातिशयः । एतद्विधानं वामनपुराणे ।
"एकादश्यां जगत्स्वामिशयनं परिकल्पयेत् ।
शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य केशवम् ॥
अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः ।
लब्ध्वा पीताम्बरधरं देवं निद्रां समानयेत् ॥"
अनुज्ञां लब्ध्वा इत्यन्वयः । एकादशीसमये दिवाशयनीयकल्पनं रात्रौ द्वादशीयोगे निद्रेति ।
विष्णुधर्म्मोत्तरे ।
"स्वाप्तीयशयनं कृत्वा प्रीणयेद्भोगशायिनम् ।
आषाढ़शुक्लद्वादश्यां विष्णुलोके महीयते ॥"
स्वास्तीर्णशयनं शोभनास्तरणयुक्तं खट्वादि ।
वराहपुराणे श्रीभगवानुवाच ।
"अन्यत्तु संप्रवक्ष्यामि कर्म्म संसारमोक्षणम् ।
कदम्बकुटजश्चैव धवकोऽर्ज्जुनकस्तथा ॥
एभिरभ्यर्च्चयेन्मां तु कुर्य्याद्विधिदृष्टेन कर्म्मणा ।
ततः संस्थापनं कृत्वा मम मन्त्रविधिः स्मृतः ।
नमो नारायणायोक्त्वा इमं मन्त्रमुदीरयेत् ॥
पश्यन्तु मेघानपि मेघश्यामं
ह्युपागतं विष्णुमानं महीमिमाम् ।
निद्रां भगवान् प्रयातु लोकनाथ
वर्षास्विमं पश्यतु मेघवृन्दम् ॥
श्रावण्य पञ्चेव च लोकनाथ मासा-
श्चत्वारि मेघस्य च पश्य नाथ ।
आषाढ़शुक्लद्वादश्यां सर्व्वशान्तिकरम् शिवम् ।
य एतेन विधानेन भूमि ! मे कर्म्म कारयेत् ।
स पुमान् न प्रपश्येत्तु संसारेषु युगे युगे ॥
शयने कुटजविधानात् विष्णुधर्म्मोत्तरीयनिषेधोऽन्यत्र । धवकः कपित्थः । संस्थापनं समापनम् । भूमि इति पृथिव्याः सम्बोधनम् ।
"एवमुक्तेन मन्त्रेण शय्यां सुप्तापयेत्ततः ।
सुप्ते त्वयि जगन्नाथ जगत् सुप्तं भवेदिदम् ।
विबुद्धे त्वयि बुध्येत जगत् सर्व्वं चराचरम् ॥"
इति मन्त्रेण पूजयेत् ॥ * ॥
"प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि ।
कटदानं भवेद्विष्णोर्महापूजा प्रवर्त्तते ॥"
कटदानं पार्श्वपरिवर्त्तः । कामरूपीयनिबन्धे ।
"एवं संपूज्य विधिवत् भाद्रस्य द्वादशीदिने ।
मन्त्रेणानेन देवेशं पार्श्वेन परिवर्त्तयेत् ॥
वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव ।
पार्श्वेन परिवर्त्तस्व सुखं स्वपिहि माधव ॥
त्वयि सुप्ते जगन्नाथ जगत् सर्व्वं चराचरम् ॥"
ब्रह्मपुराणे ।
"एकादश्यान्तु शुक्लायां कार्त्तिके मासि केशवम् ।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥"
रात्रौ प्रसुप्तमित्यन्वयः । बोधनन्तु दिवैव ॥
"कृत्वा वै मम कर्म्माणि द्वादश्यां मत्परो नरः ।
ममैव बोधनार्थाय इमं मन्त्रमुदीरयेत् ॥
महेन्द्ररुद्रैरभिनूयमानो
भवानृषिर्व्वन्दितवन्दनीयः ।
प्राप्ता तवेयं किल कौमुदाख्या
जागृष्व जागृष्व च लोकनाथ ॥
मेघा गता निर्म्मलपूर्णचन्द्रः
शारद्यपुष्पाणि च लोकनाथ ।
अहं ददानीति च पुण्यहेतो-
र्जागृष्व जागृष्व च लोकनाथ ॥
एवं कर्म्माणि कुर्व्वीरन् द्वादश्यां वै वसुन्धरि ।
मम भक्ता नरश्रेष्ठास्ते यान्ति परमां गतिम् ॥"
अत्र मन्त्रद्वयपाठान्तरम् ।
"उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ।
त्वया चोत्थीयमानेन उत्थितं भुवनत्रयम् ॥"
इति सम्प्रदायागतस्तृतीयः श्लोक इति वाचस्पतिमिश्राः ॥ शयनोत्थानमन्त्रास्तु कल्पतरुप्रभृतिग्रन्थव्यवहारलिखिताः । तदेवं द्वादश्यां एकादश्यां वा रेवत्यन्तपादयोगवशाद्दिवोत्थानं नक्षत्रयोगाभावे तु द्वादश्यामेव कारयेदिति गुरुचरणाः । सौरमतादनन्तु भविष्ये ।
"आ-भा-का-सितपक्षेषु मैत्रश्रवणरेवती ।
आदिमध्यावसानेषु प्रस्वापावर्त्तबोधनम् ॥" ।
आ-भा-का-सितपक्षेषु आषाढ़भाद्रकार्त्तिकशुक्लपक्षेषु । एषाञ्च द्वादश्यां प्राप्तौ मुख्यकल्पः । भविष्यपुराणम् ।
"निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत् ॥"
विष्णुधर्म्मोत्तरे ।
"विष्णुर्दिवा न स्वपिति न रात्रौ प्रतिबुध्यते ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥
अप्राप्ते द्वादशीऋक्षे उत्थानशयनं हरेः ।
पादयोगेन कर्त्तव्यं नाहोरात्रं विचिन्तयेत् ॥"
मथनाख्यम् ।
"रेवत्यन्ते यदा रात्रौ द्वादश्या च समन्विते
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥

शयनीयं, क्ली, (शेतेऽस्मिन्निति । शी + अधिकरणे अनीयर् ।) शय्या । इत्यमरः ॥ (यथा, माघे । ११ । ५ ।
"रतिपरिचयगश्यमेदतन्द्रः कथञ्चित्
गमयति शयनीये शर्व्वरीं किं करोतु ॥")
शयनयोग्ये, त्रि ॥ (यथा, रामायणे । २ । ७२ । ११ ।
"शून्योऽयं शयनीयस्ते पर्य्यङ्को हेमभूषितः ।
न चायमिक्ष्वाकुजनः प्रहृष्टः प्रतिभाति मे ॥")
शयनीयकं, क्ली, (शयनीयमेव । स्वार्थे कन् ।) शय्या । इति शब्दरत्नावली ॥ (यथा, कथासरित्सागरे । ६३ । १७७ ।
"गत्वा कलिङ्गसेनायाः सुप्तायाः शयनीयके ।
सुप्तं मदनवेगं तं स्वरूपे स्थितमैक्षत ॥")
शयनैकादशी, स्त्री, (शयनाय शयनस्य वा एकादशी ।) श्रीहरेः शयनसम्बन्धितिथिः । सा चाषाढ़शुक्लैकादशी । तद्विवरणं शयनशब्दे हरिशयनशब्दे च द्रष्टव्यम् ॥
शयानकः, पुं, (शी + शानच् । ततः कन् । यद्वा, "आनकः शीङ्भियः ।" इति आनक् ।) सर्पः । इत्युणादिकोषः ॥ कृकलासः । इति हेमचन्द्रः ॥
शयालुः, त्रि, (शयनशीलः । शी + "शीङो ग्रहणं कर्त्तव्यम् ।" ३ । २ । १५८ । इत्यस्य वार्त्तिकोक्त्या आलुच् ।) निद्रालुः । इत्यमरः ॥ (यथा, माघे । २ । ८० ।
"उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः ।
हन्ति नोपशयस्थोऽपि शयालुर्म्मृगयुर्म्मृगान् ॥")
शयालुः, पुं, (शी + आलुच् ।) अजगरः । कुक्कुरः । इति धारावली ॥
शयितः, त्रि, (शी + क्तः ।) निद्रालुः । इत्यमरः ॥ (कृतशयनः । यथा, कथासरित्सागरे । ५६ । १८७ ।
"तयोः क्षपितयोः स्वामि सुप्ते भोजितयो-
स्तयोः ।
शये शयितयोस्तेन जागमीदृग्विधं मम ॥")
वसन्तकुसुमे, पुं । यथा,—
"वसन्तकुसुमः शेलुः शयितो द्विजकुत्सितः ॥"
इति शब्दमाला ॥
शयने, क्ली ॥
शयितवान्, त्रि, निद्रालुः । शीङ्धातोः क्तवतुप्रत्ययेन निष्पन्नमेतत् ॥
शयुः, पुं, (शेते इति । शी + उः ।) अजगरः । इत्यमरः ॥ (ऋषिविशेषः । यथा, ऋग्वेदे । १ । ११२ । १६ ।
"याभिर्न्नरा शयवे याभिरत्रये ॥"
"हे नरा नेतारावश्विनौ पुरा पूर्व्वस्मिन् काले शयवे एतत् संज्ञकाय ऋषये ।" इति तद्भाष्यम् ॥ शयाने, त्रि । यथा, ऋग्वेदे । ४ । १८ । १२ ।
"कस्ते मातरं विधवामचक्रत्
शयुं कस्त्वामजिघांसच्चरन्तम् ॥"
"कस्त्वत्तोऽन्यः शयुं शयानं चरन्तं जाग्रतं वा त्वां अजिघांसत् ।" इति तद्भाष्यम् ॥)

शयुनः, पुं, अजगरः । इत्युणादिकोषः ॥
शय्या, स्त्री, (शी शयने + "संज्ञायां समजेति ।" ३ । ३ । ९९ । इति क्यप् ।) गुम्फनम् । इति मेदिनी ॥ शीयते यत्र सा । तत्पर्य्यायः । शयनीयम् २ शयनम् ३ । इत्यमरः ॥ तल्पम् ४ । इति जटाधरः ॥ शयनीयकम् ५ । इति शब्दरत्नावली ॥ तस्या गुणाः ।
"सुखशय्यासनं मेध्यं निद्रापुष्टिधृतिप्रदम् ।
श्रमानिलहरं शस्तं विपरीतमतोऽन्यथा ॥
भूशय्यानिलपित्तघ्नी बृंहणी शुक्रवर्द्धिनी ।
खट्वा तु वातदा प्रोक्ता पट्टी स्यात्तोऽतिवा-
तदः ॥"
इति राजवल्लभः ॥*॥
अपि च ।
"त्रिदोषशमनी खट्वा तूली वातकफापहा ।
भूशय्या बृंहणी वृष्या काष्ठपट्टी तु वातदा ॥"
अन्यत् पुनराह ।
"भूशय्या वातलातीव रूक्षा पित्तास्रनाशिनी ।
सुशय्याशयनं हृद्यं पुष्टिनिद्राधृतिप्रदम् ।
श्रमानिलहरं वृष्यं विपरीतमतोऽन्यथा ॥"
इति भावप्रकाशः ॥*॥
तद्गमनविधानं यथा,—
"कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही ।
गच्छेत् शय्यामस्फुटितामेव दारुमयीं नृप ॥
नाविशालां न वै भग्नां नासमां मलिनां न च ।
न च जन्तुमयीं शय्यामधिगच्छेदनास्तृताम् ॥"
इति विष्णुपुराणे ३ अंशे ११ अध्यायः ॥*॥
तद्दानफलं यथा । याज्ञवल्क्यः ।
"गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।
यानं वृक्षं प्रियं शय्यां दत्त्वात्यन्तं सुखी भवेत् ॥"
प्रियं यद्यस्य धर्म्मादि । प्रतिग्रहसमर्थेन शय्या न प्रत्याख्येया । यथा याज्ञवल्क्यः ।
"कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि
क्षितिः ।
मांसशय्यासनं धानाः प्रत्याख्येयं न वारि च ॥"
एतोद्देश्यकदत्तशय्याग्रहणे दोषो यथा । ब्रह्मपुराणम् ।
"शय्यालङ्कारवस्त्रादि प्रतिगृह्य मृतस्य च ।
नरकान्न निवर्त्तन्ते धेनुं तिलमयीं तथा ॥"*॥
सा च औशनाङ्गिरोदेवताका । यथा,—
"छत्रं कृष्णाजिनं शय्यां रथमासनमेव च ।
उपानहौ तथा यानं तथा यत् प्राणवर्ज्जितम् ।
औशनाङ्गिरसन्त्वेतत् प्रतिगृह्णीत मानवः ॥"
इति शुद्धितत्त्वम् ॥*॥
पुष्याभिषेके शय्यापट्टकं यथा,—
"सर्व्वरत्नमलङ्कारं पट्टं कार्य्यं द्विहस्तकम् ।
हस्तविस्तार उच्छ्राये दशाङ्गुल्यः सुशोभनम् ॥
स्नानाश्च सार्द्धहस्तन्तु पट्टं हस्तासनान्वितम् ।
शय्यार्द्धं द्विगुणा दैर्घ्याद्धनुर्मानं उपीठकम् ॥"
इति देवीपुराणे त्रैलोक्याभ्युदयपादे पुष्याभिषेकनामाध्यायः ॥
शरं, क्ली, (शॄ + अप् ।) जलम् । इति मेदिनी ॥

शरः, पुं, (शृणात्यनेनेति । शॄ श हिंसे + "ऋदोरप् ।" ३ । ३ । ५७ । इति अप् ।) वाणः । इत्यमरः ॥ (यथा, रघुः । १ । ६१ ।
"तव मन्त्रकृतो मन्त्रैर्दूरात् प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥")
दध्यग्रभागः । इति मेदिनी ॥ दुग्धशरस्य नामान्तरम् । सन्तानिका । दधिशरस्य नामान्तरम् । दधिसारः । दधिस्नेहः । कट्वरञ्च । इति रत्नमालादयः ॥ तृणविशेषः । काँड़ा इति हिन्दी भाषा । (यथा, महाभारते । १ । १३८ । १५ ।
"आचार्य्यः कलशाज्जातो द्रौणः शस्त्रभृतां-
वरः ।
गौतमस्यान्ववाये च शरस्तम्बाच्च गौतमः ॥")
तत्पर्य्यायः । इषुः २ काण्डः ३ वाणः ४ शुङ्गः ५ तेजनः ६ मुञ्जकः ७ । इति रत्नमाला ॥ उत्कटः ८ शायकः ९ क्षुरः १० इक्षुरः ११ क्षुरिकापत्रः १२ विशिखः १३ । अस्य गुणाः । मधुरत्वम् । तिक्तत्वम् । कोष्णत्वम् । कफश्रान्तिमदापहत्वम् । बलवीर्य्यकारित्वम् । नित्यं निषेवितश्चेत् किञ्चिद्वातकारित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"भद्रमुञ्जः शरो वाणस्तेजनश्चक्षुवेष्टनः ।
मुञ्जो मुञ्जातको वाणः स्थूलदर्भः सुमेधसः ॥
मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा ।
दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित् ।
दोषत्रयहरं वृष्यं मेखलासूपयुज्यते ॥"
इति भावप्रकाशः ॥
उशीरः । महापिण्डीतरुः । इति च राजनिर्घण्टः ॥ हिंसा । इति शृधात्वर्थदर्शनात् ॥ (ज्योतिषोक्तपञ्चसङ्ख्या । यथा, साहित्यदर्पणे । ४ । २६४ ।
"वेदखाग्निशराः शुद्धैरिषुवाणाग्निसायकाः ॥")
शरजं, क्ली, (शरात् जायते यत् तत् । जन् + डः ।) हैयङ्गवीनम् । इति हेमचन्द्रः ॥ नवनीतम् । इति केचित् ॥
शरजन्मा, [न्] पुं, (शरे शरवणे जन्म यस्य ।) कार्त्तिकेयः । इत्यमरः ॥ (यथा, रघुः । ३ । २३ ।
"उमावृषाङ्कौ शरजन्मना यथा
यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी
ननन्दतुस्तत्सदृशेन तत्समौ ॥")
शरटः, पुं, (शॄ + शकादित्वात् अटन् ।) कुसुम्भशाकः । इति रत्नमाला ॥ कृकलासः । इत्यमरटीका ॥ (यथा,—
"भट्टस्य कथ्यां शरटः प्रविष्टः ॥"
इति हास्यार्णवे ॥)
शरणं, क्ली, (शृणाति दुःखमनेनेति । शॄ + ल्युट् ।) गृहम् । (यथा, महाभारते । १ । १०६ । ४ ।
"ततोऽम्बिकायां प्रथमं नियुक्तः सत्यवागृषिः ।
दीप्यमानेषु दीपेषु शरणं प्रविवेश ह ॥")
रक्षिता । इत्यमरः ॥ (यथा, वैराग्यशतके । ९१ ।

"अत्र संसारमपारं भज शरणं पार्थिनीरमणम् ।
शिवधिषि शुनिधिशरं विश्वमिदं नव निदेश
कम् ।")
रक्षणम् । वध । इति मेदिनी । घातक ।
इति शब्दरत्नावली ॥
शरणा स्त्री प्रसारणी । इति शब्दरत्नावली ।
शरणागत, त्रि (शरणमागत प्राप्त ।) शरणा
पन्न । तत्पर्य्याय । शरणार्पक १ अभिपन्न २
शरणार्थी ३ । इति त्रिकाण्डशेष । तद्रक्षणा
करणस्य गुणन्यौ यथा —
"अन्वहीनश्च भीतश्च दीनश्च शरणागतम् ।
यो न रक्षत्यधर्म्मिष्ठ कुम्भीपाके वसेद्युगम् ।
राजसूयशतानाञ्च रक्षिता लभते फलम् ।
परमैश्वर्य्ययुक्तश्च धर्म्मेण च भवेदिह ।"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६५ अध्याय ॥
अपि च ।
"शरणागतरक्षां च प्राणैरपि धनैरपि ।
कुरुते मानवो ज्ञानी तस्य पुण्यं निशामय ।
सप्तपापविनिर्म्मुक्तो ब्रह्महत्याशतैरपि ।
आयुषोऽन्ते मत्तेजोऽपि योगिनामपि दुर्लभम् ।"
इति पाद्मे क्रियायोगसारे गङ्गामाहात्म्ये नाम
८ अध्याय । अन्यच्च ।
लोभाद्भयाद्वापि यस्त्यजेत् शरणागतम् ।
ब्रह्महत्यासमं तस्य पापमाहुर्म्मनीषिण ।
प्रायश्चित्तं निष्कृतिर्द्दृष्टा महापातकिनामपि ।
शरणागतघातुस्तु न दृष्टा निष्कृतिः क्वचित् ।"
इति वह्निपुराणे दानावश्यनिर्णयनामाध्याय ।
शरणार्थी, [न्] त्रि, (शरणं अर्थयते इति ।
अर्थ+णिनि ) शरणागत । इति हेम
चन्द्र । (यथा, महाभारते । १।१६९।१० ।
आगतस्य गृहं त्याज्यस्तथैव शरणार्थिन ।
याचमानस्य च वधो ब्रह्महा गर्हितो बुधै ।")
शरणापन्न, त्रि (शरणार्थमापद्यते आत्मान
मिति । आप+ण्वुल ।) शरणापन्न । इति
त्रिकाण्डशेष ।
शरणि स्त्री पन्था । इत्यमर । सरत्यनयेति
सरणि शाम्नोति अनि इत्यस्मात् पचि इति
सरणी च
सरणिः श्रेणिवर्त्मनोरिति इत्यादौ रभस ।"
शॄ सॄ गि हिंसने इत्यस्मात् पूर्व्ववन्नौ शरणि
स्तालव्यादि । शुभे शुभे शरीणि च शरणि
पथि चायनाविति तालव्यादावजय । इति
तट्टीकायां भरत । पृथ्वी । इत्यजय । (हिंसा ।
यथ , ऋग्वेदे । १ । ३१ । १६ ।
"इमामग्ने शरणिं मीमृषो न ।"
'हे अग्ने नो ऽस्मदस्मिन्निनीं इमामिदानीं
सम्पादितां शरणिं हिंसां व्रतलोपरूपां मीमृष
क्षमस्व * * * शरणिः शॄ हिंसायामित्यस्मात्
वाहुल्क अनि प्रत्यय । इति तद्भाष्ये सायण ।)
शरणी, स्त्री, (शरणि+वा ङीष ।) पन्था ।
प्रसारणी । इति शब्दरत्नावली । जयन्ती ।
इति शब्दचन्द्रिका ।

शरण्ड पुं पक्षी । कामुक । इति शब्दरत्नावली ।
धूर्त्त । शरट । भूषणभेद । इति मेदिनी ।
चतुष्पात् । इति संक्षिप्तसारोणादिवृत्ति ।
शरण्य, त्रि, (शृणाति भयमिति । शॄ हिंसा
याम्+"शॄरम्योच ।" उणा० ३ । १०१ । इति
अन्य । यद्वा शरणमिव । शरण+"शाखा
दिभ्यो य ।" ५।३।१०३ । इति य ।) रक्षा
कर्त्ता । यथा,—
"ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्त्तिहं प्रणतपाल भवाब्धिपोतं
वन्दे महापुरुष ते चरणारविन्दम् ।"
इति श्रीभागवतम् ।
शरण्या, स्त्री, (शरण्य+टाप् ।) दुर्गा । यथा,—
"विपाविभयमोरेषु शरणं चारणाद्भवेत ।
शरण्या तेन सा देवी पुराणे परिपठ्यते ।"
इति देवीपुराणे देवीनिरुक्ताध्याय ।
शरण्यु पुं वारिद । वात । इति विश्व ।
शरण्युः । इति शब्दमाला ।
शरत् [द्] स्त्री (शॄ हिंसायाम्+"शदृभ
सोऽदिः ।" उणा० १ । १३० । इति अदि ।)
वत्सर । (यथा, रघु । १० । १ ।
"पृथिवीं शासतस्तस्य पाकशासनतेजस ।
किञ्चिदूनमनूनर्द्धे शरदामयुतं ययौ ।")
ऋतुविशेष । स च आश्विनकार्त्तिकमासद्वया
त्मक । इत्यमर । तत्पर्य्याय । शारदा २
कालप्रभात ३ । इति शब्दरत्नावली । काल
प्रभातम् ३ । इति त्रिकाण्डशेष । वर्षाव
सान ५ मेघान्त ६ प्रावृड्व्यय ७ । (यथा,
रघु । ४ । २४ ।
"सरित कुर्व्वती गाधा पथश्चाश्यानकर्द्दमान् ।
यात्रायै चोदयामास तं शक्ते प्रथमं शरत् ।")
तत्र जलगुणा ।
"वर्षासु नाभसं वारि शिशिरेऽपीदृशमेव वा ।
सर्व्वं शरदि हेमन्ते तड़ागं सारसन्तु वा ।" ॥
तत्र वाद्वायुर्यथा,—
"वसन्ते दक्षिणो वातो भवेत् वर्षासु पश्चिम ।
उत्तर शारदे काले पूर्व्वो हेमन्तशैशिरे ।"
इति राजनिर्घण्ट ॥
अपि च ।
'शारदञ्चानभिष्यन्दि लघु तत्परिकीर्त्तितम् ।
हैमन्तिकं जलं स्निग्धं बल्यं वृष्यं हितं गुरु ।"
इति राजवल्लभ ॥
वैद्यकमते भाद्राश्विनमासात्मक । केचित्तु ।
"ऋतुषट्कं समाख्यातं रवे राशिषु सङ्क्र
मात् ।
मीनौ मेषवृषौ प्रोक्त प्रावृट् मिथुनकर्कटौ ।
सिंहकन्ये स्मृता वर्षा तुलावृश्चिकयो शरत् ।
धनुर्म्मकरौ च हेमन्तो वसन्त कुम्भमीनकौ ।"
अन्ये तु ।
'शिशिर पुष्पसमयो ग्रीष्मो वर्षा शरद्धिम ।
माघादिमासयुग्मे स्युर्त्तव षट् क्रमादमी ।"

तस्या गुणा ।
"शरदुष्णा पित्तकर्त्री पुष्टा मध्यबलावहा ।"
इति भावप्रकाश ॥
तत्र जातकम् ।
"नर शरज्ज्ञ शरलध्यवशा
भवेत् शुभ्रा मधुरवाक्यो ।
शुचि सुशीलो गुणवान् सुमानी
धर्मान्वितो राजकुलप्रधान ।"
इति कोष्ठीप्रदीप ॥
तत्र वर्णनीयानि यथा । चन्द्रपटुता । रवि
पटुता । जलशुभ्रता । अगस्त्य । वृष । हंस ।
सर्प्प । सप्तच्छद । पद्मम् । नीलमेघ । धान्यम् ।
शिखिपक्षमदपात । इति कविकल्पलता ॥
शरत्कामी [न्] पुं, (शरदि शरत्काले कामयते
कुक्कुरीमिति । कम+णिङ+णिनि ।) कुक्कुर ।
इति शब्दरत्नावली ॥
शरत्पद्म, क्ली, (शरद पद्मम् ।) सिताम्भोजम् ।
इति राजनिर्घण्ट ॥
शरत्पर्व्व, [न्] क्ली, (शरद पर्व्व ।) कोजागर
पूर्णिमा । यथा —
"कोजागर शरत्पर्व्व शारदी द्यूतपूर्णिमा ।"
इति जटाधर ॥
शरत्पुष्प, क्ली, (शरद पुष्पम् ।) आहुल्यम् ।
इति राजनिर्घण्ट । शरद्भवकुसुमञ्च ।
शरद् स्त्री (शॄ+अदि ।) शरत् । इत्यमर ।
शरदन्त, पुं, (शरद तदाख्य ऋतोरन्तो यस्मात् ।)
हेमन्त । इति राजनिर्घण्ट ।
शरदा, स्त्री, वत्सर । शरदृतु । इति शब्द
रत्नावली ।
शरदिज, त्रि, (शरदि जायते यत् । जन+ड ।
"प्रावृट्शरत्कालदिवां जे ।" ६ । ३ । १५ । इति
सप्तम्या अलुक ।) शरत्कालजातम् । यथा,
"नद्य प्रावृडिवाद्य पीनमकरन्दास्वादलालसा
शुद्धा
पथ्या वातकफापहा शरदिजा हेमन्तगा
बृंहिता ।
सन्ताप शमयन्ति च विदधते ग्रैष्म्यस्तथाञ्जना
स्तृष्णादाहवमिश्रमार्त्तिशमना वार्षा यथास्व
गुणा ॥"
इति राजनिर्घण्ट ॥
शरदुदाशय,स्त्री शरत्कालीनसरोवरम् । यथा —
"शरदुदाशये साधुजातसत्-
सरसिजोदरश्रीमुषा दृशा ।
सुरतनाथ तेऽशुल्कदासिका
वरद निघ्नतो नेह किं वध ।"
इति श्रीभागवते । १० । ३१ । २ ।
शरदुदाशये शरत्कालीनसरसि । इति श्रीधर
स्वामी ॥
शरधि, पुं, (शरा धीयन्तेऽस्मिन्निति । शर+
धा+"कर्म्मण्यधिकरणे च । ३ । ३ । ९३ ।
इति कि ।) तूण । इति हेमचन्द्र । (यथा,
राजेन्द्रकर्णपूरे । ३३ ।

"धृत्वाङ्गे कवचं निबध्य शरधिं हत्वा पुरो माधवं
कामः केरववान्धवोदयधिया मुञ्चन् धनुर्धावति ॥")

शरपुङ्खा, स्त्री पुं, (शरस्य पुङ्ख इव आकृतिर्यस्याः ।) नीलीवृक्षाकारक्षुपविशेषः । शरफोंका इति हिन्दीभाषा । तत्पर्य्यायः । काण्डपुङ्खा २ वाणपुङ्खा ३ इषुपुङ्खिका ४ सायकपुङ्खा ५ इषुपुङ्खा ६ । तस्या गुणाः । कटुत्वम् । उष्णत्वम् । क्रिमिवातरुजापहत्वम् । श्वेतायाः गुणाधिक्यञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"शरपुङ्खो यकृत्प्लीहगुल्मव्रणविषापहः ।
तिक्तः कषायः कासास्रश्वासहरो लघुः ॥"
इति भावप्रकाशः ॥
वाणस्य पक्षे, पुं ॥ (क्ली, यन्त्रविशेषः । यथा, सुश्रुते । १ । ७ । "तेषां शङ्खपदशरपुङ्खसर्पफणवडिशमुखे द्वे द्वे एषणव्यूहनचालनाहरणार्थमुपदिश्येते ॥")

शर(ल)भः, पुं, (शृणाति हिनस्तीति । शॄ हिंसायाम् + "कृशृशलिकलिगर्दिभ्योऽभच् ।" उणा० ३ । १२२ । इति अभच् ।) मृगेन्द्रविशेषः । इत्यमरः ॥ तत्पर्य्यायः । महाङ्गः २ महास्कन्धी ३ महामनाः ४ अष्टपादः ५ महासिंहः ६ मनस्वी ७ पर्व्वताश्रयः ८ । इति राजनिर्घण्टः ॥ अस्य लक्षणं यथा,—
"अष्टपादूर्द्ध्वनयन ऊर्द्ध्वपादचतुष्टयः ।
तं सिंहं हन्तुमागच्छन्मुनेस्तस्य निवेशनम् ॥"
इति महाभारतम् । १२ । ११७ । १२ ॥
करभः५ (यथा, ऋतुसंहारे । १ । २३ ।
"भ्रमति गवययूथः सर्व्वतस्तोयमिच्छन्
शरभकुलमजिह्मं प्रोद्धरत्यम्बु कूपात् ॥")
वानरविशेषः । इति मेदिनी ॥ उष्ट्रः । इति जटाधरः ॥ (विष्णुः । यथा, महाभारते । १३ । १४९ । ५२ ।
"अतुलः शरभो भीमः समयज्ञो हविर्हरिः ॥"
दनुपुत्त्रविशेषः । यथा, तत्रैव । १ । ६५ । २६ ।
"शरभः शलभश्चैव सूर्य्याचन्द्रमसौ तथा ।
एते ख्याता दनोर्वंशे दानवाः परिकीर्त्तिताः ॥"
नागविशेषः । यथा, तत्रैव । १ । ५७ । ११ ।
"विहङ्गः शरभो मेदः प्रमोदः संहतापनः ॥")

शरभूः, पुं, (शरे शरवणे भूरुत्पत्तिर्यस्य ।) कार्त्तिकेयः । इति हेमचन्द्रः ॥

शरमयं, त्रि, (शरस्य विकारोऽवयवो वा । शर+"नित्यं वृद्धशरादिभ्यः ।" ४ । ३ । १४४ । इति मयट् ।) शरनिर्म्मितम् । यथा,—
"शरमयबर्हिषा कुशमयबर्हिर्व्वाधवत् ।" इति स्मृतिः ॥

शरमल्लः, पुं, (शरे शरवणे मल्ल इव ।) पक्षिविशेषः । इति शब्दचन्द्रिका ॥ गोशालिक इति भाषा । (शरे वाणनिक्षेपार्थे मल्लः ।) वाणयोद्धा च ॥

शरयुः, शरयूः, } स्त्री, नदीविशेषः । इति द्विरूपकोषः ॥ दन्त्यसादिरयं शब्दः । इति बहुसम्मतः ॥

शरलः, त्रि, विनीतः । स्वच्छहृदयः । वृक्षविशेषे, पुं । इति सारस्वताभिधानम् ॥ दन्त्यसादिरप्ययमिति बहुसम्मतः ॥

शरलकं, क्ली, जलम् । इति शब्दचन्द्रिका ॥

शरवणोद्भवः, पुं, (शरवणे उद्भवो यस्य ।) कार्त्तिकेयः । इति केचित् ॥ (यथा, महाभारते । ३ । २३१ । ८ ।
"खचारी ब्रह्मचारी च शूरः शरवणोद्भवः ॥")

शरवाणिः, पुं, शरमुखम् । पदातिः । शरजीवी । इति हेमचन्द्रः ॥

शरव्यं, क्ली, (शरवे हिंसायै वाणक्षिप्तायै वा साधु । शरु+"उगवादिभ्यो यत् ।" ५।१।२ । इति यत् । यद्वा, शरान् व्ययति । व्ये+डः ।) लक्ष्यम् । इत्यमरः ॥ (यथा, माघे, ।७।२४।
"विदधाति जनतामनःशरव्यव्यधपटुमन्मथचापनादशङ्काम् ॥")

शराघातः, पुं, (शरस्याघातः ।) वाणाघातः । तत्पर्य्यायः । प्रचलाकः २ । इति जटाधरः ॥

शराटिः, स्त्री, (शरं जलं अटति प्राप्नोतीति । अट्+इन् ।) शरालिपक्षी । इति शब्दरत्नावली ॥

शराडिः, स्त्री, शरालिपक्षी । इति शब्दरत्नावली ॥

शरातिः, स्त्री, (शरं जलमततीति । अत+इन् ।) शरालिपक्षी । इत्यमरटीकायां रामाश्रमः ॥

शराभ्यासः, पुं, (शराणामभ्यासः ।) वाणशिक्षा । तत्पर्य्यायः । उपासनम् २ । इत्यमरः ॥ विक्षेपणम् ३ खुरली ४ शस्त्राभ्यासः ५ । इति शब्दरत्नावली ॥

शरारिः, पुं, (शरं जलं ऋच्छतीति । ऋगतौ+"अच इः ।" इति इः ।) शरालिपक्षी । तत्पर्य्यायः । आटिः २ आडिः ३ । इत्यमरः ॥ आडी ४ शराडी ५ आडिका ६ शराली ७ शरालिः ८ शराटिः ९ शरालिका १० । इति शब्दरत्नावली ॥ (यथा, ऋतुसंहारे । ४ । ९ ।
"प्रफुल्लनीलोत्पलशोभितानि
शरारिकादम्बविघट्टितानि ।
प्रसन्नतोयानि सशैवलानि
सरांसि चेतांसि हरन्ति यूनाम् ॥")
अस्य गुणाः । पवनापहत्वम् । स्निग्धत्वम् । स्वच्छमलत्वम् । हृद्यत्वम् । वातरक्तहरत्वम् । हिमत्वञ्च । इति राजवल्लभः ॥ अपि च ।
"हंससारसकादम्बवककौञ्चशरारिकाः ।
नन्दीमुखीसकादम्बाः वलाकाद्याः प्लवाः स्मृताः ॥
प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः ।
वातश्लेष्मप्रदाश्चापि वलशुक्रकराः सराः ॥"
इति भावप्रकाशः ॥

शरारुः, त्रि, (शृणातीति । शॄ+"शॄवन्द्योरारुः ।" ३।२।१७३ । इति आरुः ।) हिंस्रः । इत्यमरः ॥

शरारोपः, पुं, (शरस्यारोपो यस्मिन् ।) धनुः । इति जटाधरः ॥

शरालिः, स्त्री, शरारिपक्षी । इति शब्दरत्नावली ॥

शरालिका, स्त्री, शरारिपक्षी । इति शब्दरत्नावली ॥

शराली, स्त्री, शरारिपक्षी । इति शब्दरत्नावली ॥

शरावः, पुं क्ली, (शरं जलं अवति रक्षतीति । अव रक्षणे+अण् ।) मृत्पात्रविशेषः । शरा इति भाषा । तत्पर्य्यायः । वर्द्धमानकः २ । इत्यमरः ॥ मार्त्तिकः ३ सरावः ४ शालाजिरम् ५ पार्थिवम् ६ मृत्कांस्यम् ७ । इति शब्दरत्नावली ॥ (यथा, आर्य्यासप्तशत्याम् । १२६ ।
"त्वदितेऽपि तुहिनमहसे गगनप्रान्ते न
दीप्यते तपनः ।
कठिनघृतपूरपूर्णे शरावशिरसि प्रदीप इव ॥")
कुड़वद्वयपरिमाणम् । तत्तु चतुःपलितोलकात्मकम् । सेर इति भाषा । तत्पर्य्यायः । मानिका २ । इति शब्दमाला वैद्यकपरिभाषा च ॥

शरावती, स्त्री, (शराः तृणविशेषाः सन्त्यस्यामिति । शर+मतुप् । "शरादीनाञ्च ।" ६ । ३ । १२० । इति दीर्घः ।) नदीविशेषः । इत्यमरः ॥ (यथा, महाभारते । ६ । ९ । २० ।
"शरावतीं पयोष्णीञ्च वेणां भीमरथीमपि ॥"
लवस्य राजधानी । यथा, रघुः । १५ । ९७ ।
"स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम् ।
शरावत्यां सतां सूक्तैर्जनिताश्रुलवं लवम् ॥")

शरावार्द्धं, क्ली, (शरावस्य अर्द्धम् ।) कुड़वपरिमाणम् । तत्तु द्वात्रिंशत्तोलकात्मकम् । आधसेर इति भाषा । इति वैद्यकपरिभाषा ॥

शराश्रयः, पुं, (शराणामाश्रयः ।) तूणः । इति हेमचन्द्रः ॥

शरासनं, क्ली, (शरा अस्यन्ते क्षिप्यन्तेऽनेनेति । अस+करणे ल्युट् ।) धनुः । इत्यमरः ॥ (यथा, रघुः । ३ । ५२ ।
"स एवमुक्त्वा मघवन्तमुन्मुखः
करिष्यमाणः सशरं शरासनम् ॥"
पुं, धृतराष्ट्रपुत्त्राणामन्यतमः । यथा, महाभारते । १ । ११७ । ९ ।
"चित्रोपचित्रौ चित्राक्षश्चारुचित्रः शरासनः ॥")

शरास्यं, क्ली (शरा अस्यन्तेऽनेनेति । अस्+ण्यत् ।) धनुः । यथा,—
"चिच्छेद तस्य तान् वाणान् शरास्यञ्च महामुने ।
इत्युभावतिसंरब्धौ परस्परजिगीषवौ ॥"

"नाकामयत तं दातुं वरं दाशाय शान्तनुः ।
शरीरेणैव तीर्थेन दृश्यमानोऽपि भारत ॥" )
पुत्त्रः । इति धरणिः । ( यथा, महाभारते । १३ । २४ । ४ ।
"इति दृष्टो मया राजन् पराशरशरीरजः ।
धनवीशिपुणो धर्म्मे निःसंशयमनुत्तमम् ॥" )
देहजाते, त्रि । यथा,—
"शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥"
इति प्रायश्चित्ततत्त्वम् ॥

शरीरसंस्कारः, पुं, (शरीरस्य संस्कारः ।) देह-संस्कारकर्म्म । शरीरस्य शोभनं मार्ज्जनञ्च

शरीरावरणं क्ली, (शरीरस्य आवरणम् ।) चर्म्म । इति राजनिर्घण्टः ॥ कायवेष्टनञ्च । ( वर्म्म । यथा, महाभारते । ७ । १८५ । ४२ ।
"विचित्रैर्विविधाकारैः शरीरावरणैरपि ।
विचित्रैश्च रथैर्भग्नैर्हतैश्च गजवाजिभिः ॥" )

शरीरी [-न्] पुं, ( शरीरमस्यास्तीति । शरीर+इनिः । ) शरीरविशिष्टः । तत्पर्य्यायः ।
"भवोद्भवो च प्राणी तु शरीरिजन्युजन्तवः ।
प्राणश्चेतनो जन्मी चित्तन्तु हृदयं मनः ॥"
इति जटाधरः ॥

शरीरिलक्षणं यथा,—
"गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकः ।
प्रकृतिः सविकारा च तत् सर्व्वं गर्भसंज्ञकम् ॥
कालेन वर्द्धितो गर्भो यदाङ्गोपाङ्गसंयुतः ।
भवेत्तदा स मुनिभिः शरीरीति निगद्यते ॥"
अङ्गोपाङ्गसंयुतः व्यक्ताङ्गोपाङ्गः ।
"तस्य त्वङ्गान्युपाङ्गानि ज्ञात्वा सुश्रुतशास्त्रतः ।
मस्तकादभिधीयन्ते शिष्याः शृणुत यत्नतः ॥
आद्यमङ्गं शिरः प्रोक्तं तदुपाङ्गानि कुन्तलाः ।
तस्यान्तर्मस्तुलुङ्गञ्च ललाटभ्रूयुगं तथा ॥
नेत्रद्वयं तयोरन्तर्वर्त्तते द्वे कनीनिके ।
दृष्टिद्वयं कृष्णगोलौ श्वेतभागौ च वर्त्मनि ॥
पक्ष्माण्यपाङ्गौ शङ्खौ च कर्णौ तच्छष्कुलीद्वयम् ।
पालिद्वयं कपोलौ च नासिका च प्रकीर्त्तिता ॥
ओष्ठाधरौ च सृक्कण्यौ मुखं तालु हनुद्वयम् ।
दन्ताश्च दन्तवेष्टाश्च रसना चिबुकं गलः ॥
द्वितीयमङ्गं ग्रीवा तु यया मूर्द्धा विधार्य्यते ।
तृतीयं बाहुयुगलं तदुपाङ्गान्यथो ब्रुवे ॥
तस्योपरि मतौ स्कन्धौ प्रगण्डौ भवतस्त्वधः ।
कफोणियुग्मं तदधः प्रकोष्ठयुगलं तथा ॥
मणिबन्धौ ततो हस्तौ तयोश्चाङ्गुलयो दश ।
नखाश्च दश ते ज्ञाप्या दश चेष्टाः प्रकीर्त्तिताः ॥
चतुर्थमङ्गं वक्षस्तु तदुपाङ्गान्यथ ब्रुवे ।
स्तनौ पुंसस्तथा नार्य्या विशेष उभयोरयम् ॥
यौवनागमने नार्य्याः पीवरौ भवतः स्तनौ ।
गर्भवत्याः प्रसूतायास्तावेतौ क्षीरपूरितौ ॥
हृदयं पुण्डरीकेण सदृशं स्यादधोमुखम् ।
जाग्रतस्तद्विकसति स्वपतस्तु निमीलति ॥
आशयस्तत्तु जीवस्य चेतनास्थानमुत्तमम् ।
अतस्तस्मिंस्तमोव्याप्ते प्राणिनः प्रस्वपन्ति हि ॥"
चेतनास्थानमुत्तममिति अयमभिप्रायः ।
"चेतनानामधिष्ठानं मनो देहश्च सेन्द्रियः ।
केशलोमनखाग्रान्तमलं द्रव्यगुणैर्विना ॥"
इत्युक्तवता चरकेण सकलं शरीरं चेतनास्थानमुक्तं तदपेक्षया हृदयं विशेषतश्चेतनास्थानमिति ।
"कक्षयोर्वक्षसोः सन्धी जत्रुणी सत्तदाहृते ।
कक्षे उभे समाख्याते तयोः स्यातां च वंक्षणौ ॥
उदरं पञ्चमं भागं षष्ठं पार्श्वद्वयं मतम् ।
सपृष्ठवंशं पृष्ठन्तु समस्तं सप्तमं स्मृतम् ॥*॥
उपाङ्गानि च कथ्यन्ते तानि जानीहि यत्नतः ।
शोणिताज्जायते प्लीहा वामतो हृदयादधः ।
रक्तवाहिशिराणां स मूलं ख्यातो महर्षिभिः ॥
हृदयाद्वामतोऽधश्च फुप्फुसो रक्तफेनजः ।
अधो दक्षिणतश्चापि हृदयाद्यकृतः स्थितिः ॥
तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम् ।
अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति ।
जलवाहिशिरामूलं तृष्णाच्छादनकृन्मतम् ॥"
क्लोम तिलकं एतत्तु वातरक्तजम । अत्राह च वृद्धवाग्भटः ।
"रक्तादनिलसंयुक्तात् कालेयक समुद्भवः ।"
इति ।
"मेदःशोणितयोः साराद्वृक्कयोर्युगलं भवेत् ।
तौ तु पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः ॥
उक्ताः सार्द्धत्रयो व्यामाः पुंसामन्त्राणि,
सूरिभिः ।
अर्द्धव्यामेन हीनानि योषितामन्त्राणि निर्द्दिशेत् ॥
उत्तुकश्च कटी चापि त्रिकं वस्तिश्च वंक्षणौ ।
कण्डरायां पुरीषः स्यान्मेढ्राणां वीर्य्यमूत्रयोः ।
स एव गर्भस्याधानं कुर्य्याद्गर्भाशये स्त्रियाः ॥
शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता ।
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ॥
वृषणौ भवतः सारात् कफासृङ्मांसमेदसाम् ।
वीर्य्यवाहिशिराधारौ तौ मतौ पौरुषावहौ ॥
गुदस्य मानं सर्व्वस्य सर्व्वं स्याच्चतुरङ्गुलम् ।
तत्र स्युर्वलयस्तिस्रः शङ्खावर्त्तनिभास्तु ताः ।
प्रवाहिणी भवेत् पूर्व्वा सार्द्धाङ्गुलमिता मता ।
उत्सर्ज्जिनी तु तदधः सा सार्द्धाङ्गुलसम्मिता ॥
तस्या अधःसम्वरणी स्यादेकाङ्गुलसम्मिता ।
अर्द्धाङ्गुलप्रमाणन्तु बुधैर्गुदमुखं मतम् ॥
मलोत्सर्गस्य मार्गोऽयं पायुर्द्देहे विनिर्म्मितः ।
पुंसः प्रोथौ स्मृतौ यौ तु तौ नितम्बौ च
योषितः ॥
तयोः कुकुन्दरे स्यातां सक्थिनी त्वष्टमं समम् ।
तदुपाङ्गानि च ब्रूमो जानुनी पिण्डिकाद्वयम् ॥
जङ्घे द्वे घुटिके पार्ष्णी ततो च प्रपदे तथा ।
पादावङ्गुलयस्तत्र दश तासां नखा दश ॥"
इति भावप्रकाशः ॥
( चेत्रज्ञो जीवात्मा । यथा, मनुः । १ । ५३ ।
"तस्मिन् स्वपिति तु स्वस्थे कर्म्मात्मानः शरीरिणः ।
स्वकर्म्मभ्यो निवर्त्तन्ते मनश्च ग्लानिमृच्छति ॥")

शरुः, पुं, ( शॄ हिंसायाम् + "शॄस्वृस्निहित्रप्य-सीति ।" उणा० १ । ११ । इति उः ।) क्रोधः । वज्रम् । इति मेदिनी ॥ वाणः । इति हेम-चन्द्रः ॥ आयुधम् । इति सिद्धान्तकौमुद्या-मुणादिवृत्तिः ॥ ( हिंसा । यथा, ऋग्वेदे । ६ । २० । ६ ।
"दृचीपन्तः शरवे पत्यमानाः ।"
"शरवे हिंसायै ।" इति तद्भाष्ये सायणः ॥
गन्धर्व्वविशेषः । यथा, महाभारते । १ । १२३ । ५५ ।
"विश्वावसुर्भुमन्युश्च सुचन्द्रश्च शरुस्तथा ॥"
हिंसके, त्रि । यथा, तत्रैव । ७ । ७१ । १ ।
"दिवा नक्तं शरुमस्मद्युयोतम् ॥"
"शरुं हिंसकम् ।" इति तद्भाष्ये सायणः ॥)

शरेष्टः, पुं, आम्रः । इति जटाधरः ॥

शर्करकः, पुं, ( शर्कर + "कुञ्जरकठेति ।" ४ । २ । ८० । इत्यनेन कः । ) मधुरजम्बीरः । इति राजनिर्घण्टः ॥

शर्करजा, स्त्री, (शर्कराज्जायते इति । जन + डः । स्त्रियां टाप् ।) सिताखण्डः । इति राज-निर्घण्टः ॥

शर्करा, स्त्री, खण्डविकृतिः । चिनी इति भाषा । तत्पर्य्यायः । सिता २ । इत्यमरः ॥ शुक्लोपला ३ शुक्ला ४ सिक्तोपला ५ । इति रत्नमाला ॥ मीनाण्डी ६ श्वेता ७ मत्स्यण्डिका ८ अहि-च्छत्रा ९ सुसिकता १० गुडोद्भवा ११ । अस्या गुणाः । मधुरत्वम् । शीतत्वम् । पित्तदाह-श्रमरक्तदोषभ्रान्तिकृमिकोपनाशित्वञ्च । इति साधारणशर्करागुणाः ॥*॥
अथ शर्कराविशेषगुणाः ।
"स्निग्धा पुण्ड्रकशर्करा हितकरी क्षीणे क्षय-रोपके
चक्षुष्या बलवर्द्धनी सुमधुरा रुच्या च वंशे-शुभा ।
वृष्या दृप्तिबलप्रदा श्रमहरा श्यामेक्षुजा शीतला
स्निग्धा कान्तिकरी रसालजनिता रक्तेक्षुजा पित्तजित् ॥"
इति पञ्चेक्षुशर्करागुणाः ॥*॥
"यावनाली हिमोत्तमा हिमाली हिमशर्करा ।
क्षुद्रशर्करिका क्षुद्रा गुडजा जलबिन्दुजा ॥
हिमजा शर्करा गौल्या सोक्ता तिक्तातिपिच्छिला ।
वातघ्नी सारिका रुच्या दाहपित्तास्रदायिनी ॥"
इति यावनालशर्करागुणाः ॥*॥
"शीतजान्या कर्करजा माधवी मधुशर्करा ।
माक्षिका शर्करा प्रोक्ता सिताखण्डश्च खण्डकः ॥
सिताखण्डोऽतिमधुरश्चक्षुष्यश्छर्द्दिनाशनः ।
कुष्ठव्रणकफश्वासहिक्कापित्तास्रदोषनुत् ॥
यवासशर्करा त्वन्या सुधामोदकमोदकः ।
तवराजः खण्डसारः खण्डजा खण्डमोदकः ॥"
इति राजनिर्घण्टः ॥*॥

शर्करोदकं, क्ली, (शर्करायुक्तमुदकम् ।) शर्करा-युक्तजलम् । चिनिरपाना इति शरवत् इति च भाषा । यथा,—
"वस्त्रेण शीतलेनैव पीलिना शुभ्रशर्करा ।
एलालवङ्गकर्पूरमरिचैश्च समन्विता ॥
शर्करोदकनाम्नैतत् प्रसिद्धं विदुषां मुखे ।
शर्करोदकमाख्यातं शुक्लं शिशिरं सरम् ॥
वल्यं रुच्यं लघु स्वादु वातपित्तास्रनाशनम् ।
मूर्च्छाच्छर्द्दितृषादाहज्वरशान्तिकरं परम् ॥"
इति भावप्रकाशः ॥

शर्द्धः, पुं, (शृधु शब्दकुत्सायाम् + घञ् ।) अपानोत्सर्गः । शृधधातोर्घञ्प्रत्ययेन निष्पन्नमेतत् ॥ (तेजः । यथा, ऋग्वेदे । ४ । १ । १२ ।
"स शर्द्धे आर्त्त प्रथमं विपन्या ॥"
"शर्द्धस्तेजः ।" इति तद्भाष्ये सायणः ॥
समूहः । यथा, तत्रैव । १ । ६४ । १ ।
"वृष्णे शर्द्धाय सुमखाय वेधसे ।"
"शर्द्धाय समूहाय ।" इति तद्भाष्ये सायणः ॥
प्रबलगर्व्वी, त्रि । यथा, तत्रैव ।१।३७।४।
"प्र वः शर्द्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे ।"
"शर्द्धाय प्रबलगर्व्वीताय।" इति तद्भाष्ये सायणः ॥)

शर्द्धञ्जहः, पुं. (शर्द्धं जहातीति । हा + "एजेः खश् ।" ३ । २ । २८ । इत्यत्र । "वातशुनीतिलशर्द्धेष्विति ।" खश् । "अरुर्द्विषदजन्तस्य मुम् ।" ६ । ३ । ६७ । इति मुम् ।) माषः । यथा । शर्द्धं आर्द्रत्वं जहाति इति शर्द्धञ्जहो माषः । इति मुग्धबोधव्याकरणटीकायां दुर्गादासः ॥

शर्द्धनं, क्ली, (शर्द्ध + ल्युट् ।) अधोवायुः । इति मनुटीकायां कुल्लूक-भट्टः ॥ वातकर्म्म इति भाषा ॥

शर्व्व, हिंसे । गतौ । इति कविकल्पद्रुमः ॥ शर्व्वति । इति दुर्गादासः ॥

शर्म्म, [न्] क्ली, (शॄ + "सर्व्वधातुभ्यो मनिन् ।" उणा० ४ । १४४ । इति मनिन् ।) सुखम् । इत्यमरः ॥ (यथा, ऋग्वेदे । ४ । २५ । ४ ।
"तस्मा अग्निर्भारतः शर्म्म यं सत् ।"
"शर्म्म सुखम् ।" इति तद्भाष्ये सायणः ॥ यथाच कथासरित्सागरे । ३८ । ९६ ।
"स्वामिभक्तस्तदेतस्य शर्म्मोपायमिमं भज ॥")
तद्वति, त्रि ॥ गृहम् । इति निघण्टुः । ३ । ४ ॥ यथाच ऋग्वेदे । १ । १३ । ४ ।
"स नः शर्म्माणि वीतयेऽग्निर्यच्छतु शन्तमा ।"
"शर्म्माणि शर्म्मशब्दो गृहवाची छाया शर्म्मेति तन्नामसु पाठात् ।" इति तद्भाष्ये सायणः ॥)

शर्म्मा, [न्] पुं, (शृणात्यशुभमिति । शॄ + "सर्व्वधातुभ्यो मनिन् ।" उणा० ४ । १४४ । इति मनिन् ।) ब्राह्मणस्योपाधिविशेषः । यथा,—
"शर्म्मान्तर्घ्यादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि ।
शर्म्मणोऽक्षय्यकाले च पितॄणां दत्तमक्षयम् ॥"
शर्म्मन्नित्यनेन गोत्रसम्बन्धनामानि पितॄणां परिकल्पयन्नित्येकवाक्यतया शर्म्मान्तं नाम प्रतीयते । तथा च विष्णुपुराणम् ।
"ततश्च नाम कुर्व्वीत पितैव दशमेऽहनि ।
देवपूर्व्वं नराख्यं हि शर्म्मवर्म्मादिसंयुतम् ॥"
देवात् पूर्व्वं नराख्यं नरनाम तच्च विशिष्टं शर्म्मयुतम् । एतच्च विप्रपरम् ।
"शर्म्मा देवश्च विप्रस्य वर्म्म त्राता च भूभुजः ।
भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥"
इति यमवचनात् ॥
अत्र चकारेण देवशर्म्मणोः समुच्चयः । अत्रापि शर्म्माद्यन्ततामाह शातातपः ॥
"शर्म्मान्तं ब्राह्मणस्य स्याद्वर्म्मान्तं क्षत्रियस्य च ।
धनान्तञ्चैव वैश्यस्य दासान्तं चान्त्यजन्मनः ॥"
इति आह्निकतत्त्वम् ॥
(तथा च विष्णुपुराणे । ३ । १० । ८—९ ।
"ततश्च नाम कुर्व्वीत पितैव दशमेऽहनि ।
देवपूर्व्वं नराख्यं हि शर्म्मवर्म्मादिसंयुतम् ॥
शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति क्षत्रसंश्रयम् ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥"
"दशमेऽहनि अतीते इति शेषः । तथाशौचान्तोपलक्षणम् । अत्रैव कालान्तरमप्याह । यथा,—
'नामधेयं दशम्याञ्च केचिदिच्छन्ति पार्थिव ।
द्वादश्यामथवा रात्रौ मासे पूर्णे तथापरे ॥'
इति ॥
देवपूर्व्वं कुलदेवतानामपूर्व्वकं कुल॰ [illegible] नाम कुर्य्यात् इति शेषोक्तिः । नराख्यं पुरुषवाचकम् । तत्र प्राप्त शर्म्मवर्म्मादिसंयुतम् । यथा, सोमशर्म्मा इन्द्रवर्म्मा चन्द्रवर्म्मा चन्द्रगुप्तः शिवदासः इत्यादि ।" इति तट्टीकायां स्वामी ॥
"तन्मासे नाम निर्णयः ।
'शर्म्मेति ब्राह्मणस्योक्तं वर्म्मेति क्षत्रसंश्रयम् ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥"
इत्यत्रेति पदस्वरसेन यद्यपि शर्म्मपदात्मकमेव नामावगम्यते तथापि तावन्मात्रं न नाम किन्तु तदन्तमिति निर्णीयते द्व्यक्षरं चतुरक्षरं इत्यादि वचनदर्शनात् । एवञ्च हरिशर्म्मा नारायणशर्म्मेत्यादि विध्यति शर्म्मपदमात्रात्मकत्वात् तन्नाम्नश्चतुरक्षरता न स्यादेव । तथाच नारायणादिपदशर्म्मपदाभ्यां निर्णीतमेव नाम दानादिकन्तु शर्म्मपूर्व्वप्रतीकमात्रमेव अतएव दानादौ नामोच्चारणे चैत्रशर्म्मणे इत्येव श्रूयते । गोभिलः ।
'शर्म्मान्तर्घ्यादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि ।
शर्म्मणोऽक्षय्यकाले स्यादेवं कुर्व्वन्न मुह्यति ॥'
इदमप्युत्तरप्रतीकमात्रपरमुक्तवचनेन सहैकवाक्यत्वात् । एतेन शर्म्म सुखनीयमिति कर्कदर्शनात् । शर्म्मपदमर्घपरं तेन शुभङ्करेत्यादेव नामेत्यपास्तं गोभिलविरोधात् । कर्कस्तु पूर्व्वप्रतीकमात्रपरम् । तेन शुभङ्करशर्म्मा भीमशर्म्मेत्यादि विध्यति अन्यत्र अक्षय्यकाले चैतादृशमेव नाम तेषां प्रयोज्यम् । अपवादकाभावादिति । अत्रैव मनुः ।
'मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥
शर्म्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ।
मङ्गल्यं दीर्घवर्णान्तमाशीर्व्वादाभिधानवत् ॥'
शर्म्मवर्म्मप्रभृतीनि उत्तरपदानि कार्य्याणीति मनुटीकापि । स्त्रीनाम तु यशोदादेवीत्यादि स्त्रीणां दान्तमित्यपि पूर्व्वप्रतीकमात्रपरम् । वैश्यस्य गुप्तान्तमिति तु पराशरः । एवञ्च दानादौ चैत्रशर्म्मणे ब्राह्मणायेत्यादि स्वरूपं वाक्यम् ॥" इति द्वैतनिर्णयः ॥ * ॥)

शर्म्मरः, पुं, वस्त्रभेदः । इति धरणिः ॥

शर्म्मरा, स्त्री, दारुहरिद्रा । इति धरणिः ॥

शर्य्या, स्त्री, रात्रिः । यथा,—
"त्रियामा शर्व्वरी शर्य्या क्षयवती क्षणदा क्षपा ।
इति भरतधृतवाचस्पतिः ॥
(इषुः । यथा, ऋग्वेदे । ९ । १४ । ४ ।
"शर्य्यासमगा मरुद्गन् ।" "शर्य्या इषवः शरमय्यः । इति यास्कः ॥" इति तद्भाष्ये सायणः ॥
अङ्गुलिः । यथा, तत्रैव । ९ । ११० । ५ ।
"शर्य्याभिर्न्नभरमाणो गभस्त्योः ।"
"शर्य्याभिरङ्गुलीभिः ।" इति तद्भाष्ये सायणः ॥)

शर्य्यातिः, पुं, वैवस्वतमनुपुत्रः । तस्य पुत्र आनर्त्तः । यथा,—
"आनर्त्तो नाम शर्य्यातेः सुकन्या नाम दारिका ।
आनर्त्तस्याभवत् पुत्रो रोचमानः प्रतापवान् ।
आनर्त्तो नाम देशोऽभून्नगरी च कुशस्थली ॥"
इति मात्स्ये १२ अध्यायः ॥
(अस्य विशेषविवरणं भागवते । ८ । १३ । एवं ९ । १ । अध्याये च द्रष्टव्यम् ॥)

शर्व्व, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) शर्व्वति । इति दुर्गादासः ॥

शर्व्वः, पुं, (शृणाति सर्व्वाः प्रजाः संहरति प्रलये संहारयति वा भक्तानां पापानि । शॄ + "कॄगॄशॄदॄभ्यो वः ।" उणा० १।१५५। इति वः ।) शिवः । इति हेमचन्द्रः ॥ (यथा, रघुवंशे । ११ । ८३ ।
"कतिचिदवनिपालः शर्व्वरीः शर्व्वकल्पः ॥")
दन्त्यसादिरप्ययम् । विष्णुः । यथा,—
"शर्व्वः सर्व्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।"
इति तस्य सहस्रनामस्तोत्रम् ॥

शर्व्वरं, क्ली, तमः । कन्दर्पः । इति संक्षिप्तसारोणादिवृत्तिः ॥

शर्व्वरी, स्त्री, (शृणाति चेष्टामिति । शॄ + "कॄगॄशॄवृचतिभ्यः ष्वरच् ।" उणा० २ । १२६ । इति ष्वरच् । षित्वान्ङीष् ।) रात्रिः । इत्यमरः ॥ (यथा, ऋग्वेदे । ५ । ५२ । ३ ।
"अतिस्कन्दन्ति शर्व्वरीः ॥")
योषित् । इति मेदिनी ॥ हरिद्रा । इति विश्वः ॥ सन्ध्या । इति संक्षिप्तसारोणादिवृत्तिः ॥

शर्व्वला, स्त्री, तोमराख्यम् । इत्यमरटीकायां रायमुकुटः ॥ दन्त्यसादिरप्ययम् ॥

शर्व्वाणी, स्त्री, (शर्व्वस्य भार्य्या । "इन्द्रवरुणभवेति ।" ४।१।४९ । इति ङीष् ।) पार्व्वती ।

यः ।) ध्वेड़ः । इषुः । (यथा, रघुः । ६ । ७५ ।
"शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्त्रं
तापादन्तःशल्य इवासीत् क्षितिपोऽपि ॥")
तोमरम् । इति मेदिनी ॥ वंशकन्चिका । इति विश्वः ॥ दुःसहम् । दुर्व्वाक्यम् । इति शब्दरत्नावली ॥ पापम् । इति त्रिकाण्डशेषः ॥ अस्थि । यथा । अथ शल्योद्धारविधिः ।
"सुनिश्चितां मन्दिरभूमिमादौ
निखाय तोयावधि यत्नतस्ताम् ।
कुर्य्याद्विशल्यामथवा श्मशानं
ज्ञात्वाथवा प्रश्नवशाद्विधिज्ञः ॥
दूर्व्वाप्रवालाक्षतपुष्पपाणिः
शुचिः शुचिं दैवविदं समेत्य
पृच्छेद्विनीतो मधुरस्वरेण
शल्यस्य तत्त्वं भवने तदीशः ॥
ततः प्रश्नादिमो वर्णः सन्धार्य्यो यत्नतोऽथवा ।
क्रमात् पुष्पापगादेव फलानां नाम्नयादितः ॥
प्रणवो धरणी धारिणी करी च तदनन्तरम् ।
न भूल्वे नम इत्येष मन्त्रो वह्निप्रियान्तकः ॥"
वह्निप्रिया स्वाहा ।
"मन्त्रेणानेन कठिनीमभिमन्त्र्य विभाजयेत् ।
नवधा सदनक्षेत्रं तथा पश्चाद्विलेखयेत् ॥
व-क-च-त-ए-हाः श-प-पा नव चेत् प्रश्ना-
क्षराणि जायन्ते ।
प्रागादिकोष्ठे नवके वर्णास्ते शल्यमाख्यान्ति ॥
प्रश्ने वकारः पुरतो नरास्थि
ब्रवीति शल्यं मरकप्रदायि ।
क्षौणीशदण्डोरगहेतुस्तत्तु-
प्रदं ककारः खरशल्यमग्नौ ॥
याम्यां चकारः श्ववगास्थि वेश्म
प्रभोर्विनाशं प्रकरोति शल्यम् ।
रक्षोदिशि श्वास्थिगृहस्थितानां
महद्भयं वक्ति सुनिश्चितं तः ॥
एः पाश्चिदिश्यस्थि शिशोर्न्नवीति
स्तत्तु प्रवासाद्गृहमेव शल्यम् ।
हो वायुकोणे नरकूपमस्थि
दारिद्र्यमित्रक्षयकृद्विधत्ते ॥"
धनपदिशि शकारः प्राह विप्रास्थि वित्त-
क्षयकृदथ पकारो वक्ति श्वास्थि शम्भौ ।
तदिह कुलविनाशं गोधनानाञ्च हानिं
वितरति गृहनाथस्यापि शुभस्य दैवैः ॥
यो मध्यभागे भसितं कपालं
कालायसं चाह कुलक्षयाय ।
यत्नादपास्यान्यथवा प्रमाणं
सर्व्वत्र तथ्यं कथयामि शल्ये ॥
इन्द्ररक्षोनवेशाने शल्यं साईकरे कटौ ।
वह्न्यन्तकुवेरेषु पुरुषे मध्यवातयोः ॥"
देवीपुराणम् ।
"पुरुषाधःस्थितं शल्यं न गृहे दोषदं भवेत् ।
प्रासादे दोषदं शल्यं भवेद्यावज्जलान्तकम् ॥
गृहारम्भेऽतिकण्डूतिः स्वाम्यङ्गे यदि जायते ।
शल्यं त्वपनयेत्तत्र प्रासादे भवनेऽपि वा ॥"
इति ज्योतिस्तत्त्वम् ॥ * ॥
सप्त शल्यानि यथा,—
"नृपो न हरिसेवको यवधनो न ऋणार्पकः
कविर्न सुरजित् कविः श्रुतगुरुर्न सद्वैष्णवः ।
गुणी न भगवत्परो रविकृधीर्न दानाश्रयः
स न व्रजजनानुगो जगति सप्त शल्यानि च ॥"
इति पाद्मोत्तरखण्डे १०० अध्यायः ॥

शल्यः, पुं, (शल गतौ + यः ।) मदनवृक्षः । श्वाविन् । इत्यमरः ॥ (यथा, भागवते । ८।२।२२।
"वृका वराहा महिषर्क्षशल्या
गोपुच्छशालावृकमर्कटाश्च ॥")
नृपभेदः । स तु युधिष्ठिरमातुलः । (अयं हि दुर्य्योधनेन कापट्यात् वशीकृतः कुरुपाण्डवयुद्धे दुर्य्योधनपक्षं समाश्रयत् । यथा, महाभारते । १ । २ । २१६ ।
"मद्रराजञ्च राजानमायान्तं पाण्डवान् प्रति ।
उपहारैर्वञ्चयित्वा वर्त्मन्येव सुयोधनः ॥
वरदं तं वरं वव्रे साहाय्यं क्रियतां मम ।
शल्यस्तस्मै प्रतिश्रुत्य जगामोद्दिश्य पाण्डवान् ॥"
कर्णार्ज्जुनयोर्द्वैरथयुद्धे शल्यस्य कर्णतेजो भङ्गकरणे प्रतिज्ञा । यथा, तत्रैव । ५ । ८।२७-४५।
युधिष्ठिर उवाच ।
"सुकृतं ते कृतं राजन् ! प्रहृष्टेनान्तरात्मना ।
दुर्य्योधनस्य यद्वीर त्वया वाचा प्रतिश्रुतम् ॥
एकं त्विच्छामि भद्रन्ते क्रियमाणं महीपते ।
राजन्नकर्त्तव्यमपि कर्त्तुमर्हसि मातुल ॥
मम त्ववेक्षया वीर शृणु विज्ञापयामि ते ।
भवानिह महाराज वासुदेवसमो युधि ॥
कर्णार्ज्जुनाभ्यां संप्राप्ते द्वैरथे राजसत्तम ।
कर्णस्य भवता कार्य्यं सारथ्यं नात्र संशयः ॥
तत्र पाल्योऽर्ज्जुनो राजन् यदि मत्प्रियमिच्छसि ।
तेजोवधश्च ते कार्य्यः सौतेरस्मज्जयावहः ।
अकर्त्तव्यमपि ह्येतत् कर्त्तुमर्हसि मातुल ॥
शल्य उवाच ।
शृणु पाण्डव भद्रं ते यद्ब्रवीषि दुरात्मनः ।
तेजोवधनिमित्तं मां सूतपुत्त्रस्य संयुगे ॥
अहं तस्य भविष्यामि संग्रामे सारथिर्ध्रुवम् ।
वासुदेवेन हि समं नित्यं मां स हि मन्यते ॥
तस्याहं कुरुशार्दूल प्रतीपमहितं वचः ।
ध्रुवं सङ्कथयिष्यामि योद्धुकामस्य संयुगे ॥
यथा च हृतदर्पश्च हृततेजाश्च पाण्डव ।
भविष्यति सुखं हन्तुं सत्यमेतद्ब्रवीमि ते ॥"
युधिष्ठिरस्तु एनं वृतवान् । एतद्वृत्तान्तस्तु महाभारते शल्यपर्व्वणि १७ अध्याये द्रष्टव्यः ॥)
सीमा । शलाका । इति हेमचन्द्रः ॥ भिल्लवृक्षः । मत्स्यभेदः । इति राजनिर्घण्टः ॥ * ॥
शल्यनिःसरणौषधं यथा,—
"रुद्र लाङ्गलिकामूलं हिङ्गुलस्य तथैव च ।
तेन यथासुखं लिप्तं शल्यो निःसरति व्रणात् ।
चिरकालप्रविष्टोऽपि येन मार्गेण शङ्कर ॥"
इति गारुडे १६३ अध्यायः ॥

शल्यः, पुं, क्ली, शस्त्रविशेषः । शेल इति भाषा । तत्पर्य्यायः । शङ्कुः २ । इत्यमरः ॥ दीर्घायुधः ३ शलः ४ कुन्तः ५ विपाङ्कुरः ६ । इति त्रिकाण्डशेषः ॥

शल्यकः, पुं, (शल्य इव । शल्य + इवार्थे कन् ।) मदनवृक्षः । इति शब्दरत्नावली ॥ शल्कीजन्तुः । इति राजनिर्घण्टः ॥ (यथा, मनुः । ५ । १८ ।
"श्वाविधं शल्यकं गोधां खड्गकूर्म्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥")

शल्यकण्ठः, पुं, (शल्यं तद्वल्लोम कण्ठेऽपि यस्य ।) शल्की । इति शब्दचन्द्रिका ॥

शल्यलोम, [न्] क्ली, (शल्यवत् लोम ।) शलली । इति राजनिर्घण्टः ॥

शल्यारिः, पुं, (शल्यस्य अरिस्तन्नाशकत्वात् ।) युधिष्ठिरराजः । इति हेमचन्द्रः ॥

शल्ल, गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) शल्लति । इति दुर्गादासः ॥ सौत्रधातुरयम् ॥

शल्लं, क्ली, त्वक् । इति शब्दरत्नावली ॥

शल्लः, पुं, भेकः । इति शब्दरत्नावली ॥

शल्लकं, क्ली, (शल्लमेव । स्वार्थे कन् ।) त्वक् । इति शब्दरत्नावली ॥

शल्लकः, पुं, श्योनाकः । इति जटाधरः ॥ (शल्लकीजन्तुः । यथा, याज्ञवल्क्ये । १ । १७७ ।
"भक्ष्याः पञ्चनखाः सेधा गोधाकच्छपशल्लकाः ।
शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ॥")

शल्लकी, स्त्री, पशुविशेषः । सजारु इति वङ्गभाषा । साहिल इति हिन्दीभाषा ॥ तत्पर्य्यायः । श्वाविन् २ शलका ३ शल्यः ४ । इति जटाधरः ॥ क्रकचपादः ५ छेदारः ६ । इति शब्दरत्नावली ॥ शल्यकः ७ शल्यन्दृगः ८ वज्रशल्यः ९ विलेशयः १० । अस्या मांसगुणाः ।
"शल्यमांसं गुरु स्निग्धं शीतलं कफपित्तजित् ॥"
इति राजनिर्घण्टः ॥
भावप्रकाशोक्तगुणाः विलेशयशब्दे द्रष्टव्याः ॥ वृक्षविशेषः । (यथा, रामायणे । २ । ५५ । ६ ।
"क्रोशमात्रं ततो गत्वा नीलं प्रेक्ष्य च काननम् ।
शल्लकीबदरीमिश्रं राम वन्यैश्च यामुनैः ।
स पन्थाश्चित्रकूटस्य गतस्य बहुशो मया ॥")
तत्पर्य्यायः । गजभक्ष्या २ सुवहा ३ सुरभिः ४ रसा ५ महेरणा ६ कुन्दुरुकी ७ ह्लादिनी ८ । इत्यमरः ॥ गजभक्षा ९ सुरभी १० महेरुणा ११ मदारणा १२ ह्रादिनी १३ सिल्लकी १४ वल्लकी १५ । इति भरतः ॥ सुरभीरसा १६ शिल्लकी १७ । इति टीकान्तरम् ॥ सिल्हकी १८ सिल्हभूमिका १९ । इति शब्दरत्नावली ॥ अश्वकर्णी २० कुन्ती २१ । इति जटाधरः ॥

शल्लकीद्रवः, पुं, सिल्हकः । इति जटाधरः ॥

शल्वः, पुं, शाल्वदेशः । इत्युणादिकोषः ॥

एवं कश्मलभूयिष्ठा भूरमेध्याति कथ्यते ॥
क्रमिकीटपदक्षेपैर्दूषिता यत्र मेदिनी ।
एतया कर्षणैः क्षिप्ता वान्तैर्वा दूषितां भवेत् ॥
नखदन्ततनूजत्वक्तुषपांशुरजोमलैः ।
भस्मपङ्कतृणैर्वापि प्रच्छन्ना मलिना भवेत् ॥”
प्लावनं मृदन्तरेण पूरणम् । उषितं वासः । एषा घनीभूतश्लेष्मादि । चतुर्दशी पक्षानां मध्ये यथासम्भवं ग्रहणम् । अङ्गिराः ।
“शौचं सहस्ररोमाणां वाय्वग्न्यर्केन्दुरश्मिभिः ।
रेतःस्पृष्टं शवस्पृष्टमाविकं नैव दुष्यति ॥”
सहस्ररोमाणां कम्बलानाम् । इति शुद्धितत्त्वम् ।

शवकाम्यः, पुं, ( शवः काम्यो यस्य । ) कुक्कुरः । इति शब्दरत्नावली ॥

शवयानं, क्ली, ( शवस्य यानम् । ) शववहनार्थखट्वा । मड़ार खाट इति भाषा । तत्पर्य्यायः । काष्ठमञ्चः २ । इति हारावली ॥ खोटः ३ खाटी ४ खाटिका ५ शवरथः ६ । इति शब्दरत्नावली ॥

शवरः, पुं, ( शव + बाहुलकादरः । यद्वा, शवं राति गृह्णातीति । रा + कः । ) म्लेच्छजातिविशेषः । इत्यमरः ॥ मयूरपुच्छपरिधानो म्लेच्छः किरातः । पत्रपरिधानः शवरः । इति तट्टीकायां भरतः ॥ पानीयम् । शिवः । इति मेदिनी ॥ शास्त्रविशेषः । हस्तः । इत्युणादिकोषः ॥

शवरथः, पुं, ( शवस्य रथः । ) शवयानम् । इति शब्दरत्नावली ॥

शवरलोध्रः, पुं, श्वेतलोध्रः । इति रत्नमाला ॥

शवरालयः, पुं, ( शवरस्यालयः । ) शवरगृहम् । तत्पर्य्यायः । पक्कणः २ । इत्यमरः ॥ पक्वणः ३ । इति शब्दरत्नावली ॥ शवरावासः ४ । इति हेमचन्द्रः ॥

शवरावासः, पुं, ( शवरस्यावासः । ) शवरालयः । इति हेमचन्द्रः ॥

श(ब)वलः, पुं, ( शप आक्रोशे + “शपेर्वश्च ।” उणा० १ । १०७ । इति कल, वश्चान्तादेशः । ) कर्व्वुरवर्णः । तद्वति, त्रि । इत्यमरः ॥ ( यथा, भागवते । ३ । २३ । २४ ।
“अङ्गञ्च मलपङ्केन संछन्नं शवलस्तनम् ॥”)

शवला, स्त्री, (शवल + स्त्रियां टाप् । ) शवलवर्णा गौः । इत्यमरभरतौ ॥

शवली, स्त्री, ( शवलयोगादन्यतो ङीष् । ) शवलवर्णा गौः । इत्यमरभरतौ ॥

शवसानः, पुं, पथिकः । इति सिद्धान्तकौमुदी ॥ वैदिकपदोऽयम् । शवधातोरौणादिकशानच्प्रत्ययेन निष्पन्नमेतत् ॥

शश, प्लुतगतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् । ) शशी शशिशुषीः शशंशिति क्रियात्रयमकात् । शशति भेकः प्लवेन गच्छतीत्यर्थः । ष्ट फल भज इत्यत्र वर्ज्जनमस्येव । दन्त्यान्तोऽयमपाणिनिके । इति दुर्गादासः ॥

शशः, पुं, ( शशति प्लवेन गच्छतीति । शश + अच् । ) मृगविशेषः । इत्यमरः ॥ शशारु इति खरगोश इति च भाषा ॥ (यथा, मनौ । ३ । २७० ।
“शशकूर्म्मयोस्तु मांसेन मासानेकादशैव तु ॥”)
अस्य मांसगुणाः । खाद्गुत्वम् । कषायत्वम् । मलबद्धकारित्वम् । शीतलत्वम् । रक्तत्वम् । शोषातीसारपित्तरक्तनाशनत्वम् । रूक्षत्वञ्च । इति राजवल्लभः । अपि च ।
“शशमांसं त्रिदोषघ्नं दीपनं श्वासकासनुत् ॥”
इति राजनिर्घण्टः ॥
अन्यच्च ।
“शशः स्मृतो लोमकर्णो विलेशयः प्रकीर्त्तितः ।
शशः शीतो लघुर्ग्राही रूक्षः स्वादुः सदा हितः ॥
वह्निकृत् कफपित्तघ्नो वातसाधारणः स्मृतः ।
ज्वरातीसारशोषास्रश्वासामयहरश्च सः ॥”
इति भावप्रकाशः ॥
श्राद्धेऽस्य मांसस्य दानफलं यथा,—
“हविष्यान्नेन वै मासं पायसेन च वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुनिच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्याभितृप्यन्ति दत्तैनेह पितामहाः ॥”
इति श्राद्धतत्त्वम् ॥
विष्णवे एतन्मांसस्य देयत्वं यथा,—
“मार्गं मांसं तथा छागं शाशं समनुयुज्यते ।
एतानि हि प्रियाणि स्युः शयोज्यानि वसुन्धरे ॥”
इत्येकादशीतत्त्वम् ॥
चन्द्रलाञ्छनः । इति धरणिः ॥ बोलः । लोध्रः । मनुष्यविशेषः । इति मेदिनी ॥ स तु चतुर्व्विधपुरुषान्तर्गतपुरुषविशेषः । तस्य लक्षणं यथा,—
“मृदुवचनसुशीलः कोमलाङ्गः सुकेशः
सकलगुणनिधानः सत्यवादी शशोऽयम् ॥”
इति रतिमञ्जरी ॥

शशकः, पुं, ( शश + स्वार्थे कन् । ) शशः । यथा,
“शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमः ।
भक्ष्याः पञ्चनखेष्वेते न भक्ष्याश्चान्यजातयः ॥”
इति स्मृतिः ॥

शशधरः, पुं, ( शशस्य धरः । ) चन्द्रः । ( यथा, साहित्यदर्पणे । १० ।
“इदं वक्त्रं साक्षादिरहितकलङ्कः शशधरः ॥”)
कर्पूरः । इत्यमरः ॥

शशप्लुतकं, क्ली, नखाघातः । इति शब्दमाला ॥

शशबिन्दुः, पुं, विष्णुः । राजविशेषः । इति मेदिनी ॥ ( यथा, महाभारते । १ । १ । २२५ ।
“रामं दाशरथिञ्चैव शशबिन्दुं भगीरथम् ॥”)
स तु चित्ररथपुत्रः । इति पुराणम् ॥

शशभृत्, पुं, ( शशं बिभर्त्तीति । भृ + क्विप् । ) चन्द्रः । इति हेमचन्द्रः ॥ ( यथा, कथासरित्सागरे । ७३ । २५८ ।
“गृहीतो राजशशभृत् वैद्यावाध्येन यक्ष्मणा ॥”)

शशभृद्भृत्, पुं, (शशभृतं चन्द्रं बिभर्त्तीति । भृ + क्विप् । ) शिवः । यथा,—
“आत्मानं योगनिद्राञ्च चिन्तयित्वा मनस्विनी ।
दृष्टिर्वै स्वशरीरस्य भागार्द्धं शशभृद्भृतः ॥”
इति कालिकापुराणे ४४ अध्यायः ॥

शशलोम, [ न् ] क्ली, ( शशस्य लोम । ) शशकस्य रोम । तत्पर्य्यायः । शशोर्णम् २ । इत्यमरः ॥ ( पुं, तन्नामकराजः । यथा, महाभारते । १५ । २० । १४ ।
“शशलोमा स राजासीत् राजन् परमधार्म्मिकः ॥”)

शशशिम्बिका, स्त्री, जीवन्ती । इति राजनिर्घण्टः ॥

शशस्थली, स्त्री, अन्तर्वेदी । इति त्रिकाण्डशेषः ॥ सा च गङ्गायमुनयोर्मध्यदेशः । अधुना दोयाब इति नाम्ना ख्यातः ॥

शशाङ्कः, पुं, (शशोऽङ्कः चिह्नं अङ्कः क्रोड़े वा यस्य । ) चन्द्रः । इति हलायुधः ॥ ( यथा, कथासरित्सागरे । १८ । ३६५ ॥
“स शनैर्ददृशे तत्र शिखरे ज्वलितौषधौ ।
शशाङ्क इव पूर्व्वाद्रिरुदयस्थो विदूषकः ॥” )
कर्पूरः । इति राजनिर्घण्टः ॥

शशाण्डुलिः, स्त्री, कर्कटीभेदः । तत्पर्य्यायः । बहुफला २ तण्डुली ३ चित्रसम्भवा ४ क्षुद्राण्डा ५ लोमशफला ६ धूम्रा ७ हस्तफला ८ । अस्याः गुणाः ।
“शशाण्डुलि स्तिक्तकटुश्च कोमला
कफार्त्तियुक्ता मधुरा कषायका ।
पाके तु साम्ला मधुरा विदाहकृत्
कफे तु शुष्का रुचिकृच्च दीपनी ॥”
इति राजनिर्घण्टः ॥

शशादः, पुं, (शशमत्तीति । अद + अच् । ) श्येनपक्षी । इति राजनिर्घण्टः ॥ ( इक्ष्वाकुपुत्रः । यथा, महाभारते । ३ । २२१ । १ ।
“इक्ष्वाकौ संस्थिते राजन् शशादः पृथिवीमिमाम् ।
प्राप्तः परमधर्म्मात्मा सोऽयोध्यायां नृपोऽभवत् ॥”
अस्य विकुक्षिरिति नाम आसीत् । अयं हि पित्राज्ञातः श्राद्धार्थं मांसमानेतुं वनं गतः मृगान् व्यापादयामास । ततोऽतिश्रान्तः क्षुत्परीत एकं शशमभक्षत् अतोऽस्य शशाद इति नाम जायत । एतद्विवरणं भागवते । ९ । ६ अध्याये तथा विष्णुपुराणे ४ । २ अध्याये च द्रष्टव्यम् ॥ )

शशादनः, पुं, ( शशमत्ताव । अद + ल्युः । ) श्येनपक्षी । इत्यमरः ॥

शशिकला, स्त्री, चतुर्द्दशाक्षरपादच्छन्दोविशेषः । यथा,—
“गुरुनिधनमनु लघुरिह शशिकला ।
मलयजतिलकसमुदितशशिकला
व्रजयुवतिलसदलिकगगनगता ।
वरसिचनयनहृदयसुखितनिधिं
यदनुत विततरभसपरिसरणम् ॥”
इति छन्दोमञ्जरी ॥

( शशिनः कला । चन्द्रकला । यथा,—
'कमलिनी मलिनी दिवसात्यये
शशिकला विकला चलदात्यये ।
इति विधिर्निदधे प्रमदासुखम्
भवति विश्रुतमं क्रमशो जनः ।"
इत्युद्भटः ॥ )

शशिकान्त, क्ली, (शशी कान्तो यस्य ।) कुमुदम् । इति राजनिर्घण्टः ॥

शशिकान्त, पुं (शशी कान्तो यस्य ।) चन्द्रकान्तमणि । इति राजनिर्घण्टः ॥ यथा बृहत्संहितायाम् । ८० । ४ ।
"वैदूर्य्यविपुलकविमलक
राजमणिस्फटिकशशिकान्ता ।")

शशिध्वज, पुं, ( शशी ध्वजे यस्य । ) भल्लाटपुरराज । यथा,—
'तत शशिध्वजो राजा युद्धादाहूय पुत्रकान् ।
सुशान्ताया मतिं बुद्धा रमां प्रादात् च कल्कये ॥
विशाखयूपभूपाश्च रुचिराश्च सयुगम् ।
शय्याकर्णवृषेणापि भल्लाट पुरमाययुः ॥"
इति कल्किपुराणे २५ अध्यायः ॥

शशिप्रभ, क्ली, ( शशिन प्रभेव प्रभा यस्य । ) कुमुदम् । इति शब्दमाला ॥ मुक्ता । इति राजनिर्घण्टः ॥ चन्द्रप्रभायुक्ते त्रि ॥ (चन्द्रप्रभासदृशे च, त्रि । यथा महाभारते ।९।६६ ४।
"तस्या वास चतुष्कूत माश्रुतेन शशिप्रभम् ।")

शशिप्रभा स्त्री, ( शशिन प्रभा । ) ज्योत्स्ना । इति जटाधरः ॥

शशिभूषण, पुं, ( शशी भूषणं यस्य । ) शिव । इति शशिधरशब्ददर्शनात् ॥

शशिलेखा स्त्री चन्द्रकला । गुडूची । इत्यमरः । इति मेदिनी । तद्वृत्तस्य लक्षणादि यथा —
"स्रो मो यो चेत् भवेतां सप्ताष्टकैश्चन्द्रलेखा ।
विच्छेदे से सदारे पाण्डुप्रकाशा कथाञ्चो
ज्ञानच्छाय दुकूलं न धत्ते विभ्रती वा ।
राधाभोदस्य मध्ये लीला यथा चन्द्रलेखा
किञ्चास्मा मां सारणो धत्ते भुवं भोवयोगम् ।'
इति छन्दोमञ्जरी ॥

शशिवाटिका, स्त्री पुनर्नवा । इति राजनिर्घण्टः ॥

शशिशेखर, पुं (शशी शेखरे यस्य । ) शिव । इति हलायुधः । ( यथा, कथासरित्सागरे । २ । २९ ।
"तस्या स्तुतिभिर्जो वृष्णामनुमयिरोप्य च ।
किन्ते प्रियं करोमीति बभाषे शशिशेखर ।")
बुद्धभेद । तत्पर्य्याय । चरम २ वैदक ३ वज्रसमर ४ देव ५ वज्रपाणी ६ त्रिशुम्भी ७ वज्रटीक ८ । इति त्रिकाण्डशेषः ॥

शशी [न्] पुं (शशोऽस्यास्तीति । शश+इनि ।) चन्द्र । यथा,—
हिमांशुश्चन्द्रमाश्चन्द्र शशी चन्द्रो हिमद्युति ।
भरतधृतशब्दार्णव ॥
( यथा च हितोपदेशे ।

"शशिनस्तुल्यवंशोऽपि निर्गुणः परिभूयते ॥")
अर्हद्ध्वजविशेष । इति हेमचन्द्रः ॥

शशोर्णं, क्ली ( शशस्य उर्णा । अभिधानात् क्लीवत्वम् । ) शशस्य लोम । इत्यमरः ॥

शश्वत्, अ, ( शश+बाहुलकात् वत् । ) पुनःपुनः । इत्यमरः ॥ ( यथा गीतायाम् । ९ । ३१ ।
"क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं निगच्छति ।")

शष, वधे । इति कविकल्पद्रुमः ॥ ( भ्वा॰ पर॰ सक॰ सेट ।) शषति । इति दुर्गादासः ॥

शष्कुल, पुं, छित्ति । इति शब्दचन्द्रिका ॥ कर करमृचा इति भाषा ॥

शष्कुली स्त्री ( शष्कुल+गौरादित्वात् ङीष । ) तिलतण्डुलमाषमिश्रितयवागु । इति शब्दचन्द्रिका ॥ कर्णरन्ध्रम् । इति शब्दरत्नावली ॥ मत्स्यभेदः । सौरी । इति हिन्दी भाषा । अस्या गुणाः ।
"शष्कुली ग्राहिणी रुद्रा मधुरा तुवरा स्मृता ।"
इति भावप्रकाशः ॥
( पिष्टकविशेष । यथा, महाभारते । १२ । २९८ । ६२ ।
'पायस लशर मांसमपूपानथ शष्कुली ।")

शष्प क्ली, ( शष हिंसायाम्+"खष्पशिल्पशष्पवाष्परूपपर्पतल्पा ।" उणा॰ ३ । २८ । इति पत्वं निपात्यते । ) बालतृणम् । इत्यमरः ॥ ( यथा, रघुवंशे । २ । २६ ।
"शङ्काभ्रपातात्तविरूढशष्प
गौरीगुरोर्गह्वरमाविवेश ।")

शस उ वधे । इति कविकल्पद्रुम ॥ (भ्वा॰ पर॰ सक॰ सेट । क्त्वावेट ।) उ शसित्वा शस्त्वा । इति दुर्गादासः ॥

शस, इ ङ आशिषि । आङ्पूर्व्वकोऽयम् । इति कविकल्पद्रुम ॥ ( भ्वा॰ आत्म॰ सक॰ सेट । ) इ, आशंस्यते । ङ आशंसते । आशीरिष्टार्थे शंसनम् । इच्छायामित्यर्थः । इति दुर्गादासः ॥

शसन, क्ली, ( शस+ल्युट् ।) यज्ञार्थपशुहननम् । इति शब्दशब्दटीकायां रामाश्रमः । (शस्यते हन्यतेऽत्र इत्यधिकरणे ल्युट् वध्यस्थानम् । यथा ऋग्वेदे । १० । ८९ । १४ ।
"मित्रक्रुवो यच्छसनेन गावः ।"
"शसने विशसनस्थाने ।" इति तद्भाष्ये सायणः ।)

शष्कुली स्त्री पिष्टकविशेष । पुरी पिठा इति भाषा । (यथा, महाभारते । ७ । ६२ । ७ ।
"मोदकान् पूरिकापूपान् मासाधमक शष्कुली ।")
अस्या गुणाः ।
"पर्पटा लघवो रूक्षा शष्कुल्य कफपित्तदा ।"
काञ्जिकपुष्टनिम्नशष्कुली ज्ञान्या यथा —
"माषैरिक्षुविकारैश्च काञ्जिकैश्छिन्नशष्कुलीम् ।
सूनक माषवपन मधुना च न भक्षयेत् ।"
इति राजवल्लभ ॥

तथा तत्तत्पापप्रायश्चित्त यथा । तथा पायसपूपशष्कुलीकृसरसयावशिग्रुलोहितव्रश्च नियासामेध्यप्रभवानां भक्षणे कामतश्चान्द्रायणं अकामतश्चार्द्धम् । अत्रियादीनां पादपादहानि । इति प्रायश्चित्तविवेक ॥

शस्त, इ र सु स्तुतौ । इति कविकल्पद्रुम ॥ (भ्वा॰ पर॰ सक॰ सेट ।) इ, शंस्यते । शमथा पाठोऽपि नस्य उपधात्वाभावान लोपाभाव इत्युक्तम्ो वेदेभूषारणमित्यर्थे । सु, शसि । र वैदिक । इति दुर्गादास ॥

शस्त क्ली (शसु+क्त ।) कल्याणम् । इत्यमरः ॥ ( यथा, महाभारते । १३ । १० । ४२ ।
'लक्षणैर्मता पुरोधास्तु बहुशस्त नराधिपम् ।")
शरीरम् । इति त्रिकाण्डशेषः ॥

शस्त, त्रि कल्याणयुक्त । स्तुत । इत्यमरः ॥ प्रशस्त । इति मेदिनी । ( यथा, भागवते । ३ । १९ । १५ ।
"क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यश ।"
निहत । यथा, महाभारते ३ । ४० । ३ ।
"शस्ताभिषेके समदहदुर्च्चैतदनिलम् ।
भगवा दानवा शस्त्रास्त्रमोहा दारुणेन च प्रभो ।")

शस्तक, क्ली, अङ्गुलित्राणम् । यथा,—
"अङ्गुलित्र शस्तकञ्च तथा चाङ्गुष्ठरक्षकम् ।"
इति शब्दरत्नावली ॥

शस्तकेशक, त्रि ( शस्ता केशा यस्य कप् । ) प्रशस्तकेशयुक्त । इति शब्दरत्नावली ॥

शस्त्र, क्ली, ( शस्यते हिंस्यते अनेन । "अमिचि मिदिशसिभ्य क्त्र ।" उणा॰ ४ । १६३ । इति क्त्र । यद्वा, "दाम्नीशसयुयुजेति ।" ३ । २ । १८२ । इति ष्ट्रन । ) लोहम् । अस्त्रम् । इत्यमरः ॥ शस्त्राखैर्बहुधा मुक्तैरित्यादिदर्शनात् शस्त्रास्त्रयो कश्चिद्भेदमाह । येन करस्थेन हन्यते तत शस्त्र खड्गादि । येन क्षिप्तेन हन्यते तदस्त्र काण्डादि । इति तट्टीकायां भरत ॥ तत्पर्य्याय ।
"अस्त्रि शस्त्र प्रहरणमायुधानि हेतिरायुध ।"
इति शब्दरत्नावली ॥
"एकैकमस्त्र शस्त्रञ्च देवैर्मुक्त सहस्रधा ।
चिच्छेद लीलयैवासौ जगतां मधुसूदन ।"
इति विष्णुपुराणे ५ अंशे ३० अध्याय ॥
अस्य मन्त्राभिमन्त्रितम् । शस्त्र तदिवत् । इति तट्टीका ॥ राज्ञो अस्त्राचार्य्यो यथा,—
"धनुर्वेदे पारिवृत्ते चमूते युद्धधारिणे ।
अस्त्राचार्य्यो निरुद्विग्न कुम्भश्च विधिश्यते ।"
तदगारनियुक्तस्य लक्षण यथा —
"आयस्यातोऽनिशातश्च सतत प्रतिजागृता ।
राज्ञ स्यादायुधागारे दक्ष कर्म्मसु चोदित ।"
इति मात्स्ये १८९ अध्याय ॥
अस्त्रचिकित्सा यथा । अथातोऽग्योपहरणीय मध्याय व्याख्यास्याम । त्रिविधं कर्म्म । पूर्व्व कर्म्म प्रधानकर्म्म पश्चात्कर्म्मेति । तद्व्याधि प्रत्युपदेक्ष्याम । अस्मिन् शास्त्रे शस्त्रकर्म्म

प्राधान्यात् शस्त्रकर्म्मैव तावत् पूर्व्वमुपदेक्ष्याम-स्तत्सम्भाराश्च। तच्च शस्त्रकर्म्माष्टविधम्। तद्यथा। छेद्यं भेद्यं लेख्यं वेध्यमेष्यमाहार्य्यं विस्राव्यं सीव्यमिति ॥ ० ॥ अतोऽन्यतमं कर्म्म चिकीर्षता वैद्येन पूर्व्वमेवोपकल्पयितव्यानि। तद्यथा। यन्त्रशस्त्रक्षाराग्निशलाकाशृङ्गतुम्ब-जलौकालावूजाम्बवौष्ठपिचुप्रोत-सूत्रपत्रपट्टमधु-घृतवसापयस्तैलतर्पणकाषायालेपनकल्काव्यजन-शीतोष्णोदककटाहादीनि परिकर्म्मिणश्च स्निग्धाः स्थिरा बलवन्तः। ततः प्रशस्तेषु तिथि-करणमुहूर्त्तनक्षत्रेषु दध्यक्षतान्नपानरत्नैरग्निं विप्रान् भिषजश्चार्च्चयित्वा कृतबलिमङ्गलस्वस्ति-वाचनं लघु भुक्तवन्तं प्राङ्मुखमातुरमुपवेश्य यन्त्रयित्वा प्रत्यङ्मुखो वैद्यो मर्म्मशिरास्नायु-सन्ध्यस्थिधमनीः परिहरन्ननुलोमं शस्त्रं निद-ध्यादापूयदर्शनात् सकृदेवापहरेच्छस्त्रमाशु च। महत्स्वपि च पाकेषु द्व्यङ्गुलं त्र्यङ्गुलं वा शस्त्र-पदमुक्तम्। तत्रायतो विशालः समः सुविभक्त इति व्रणगुणाः। भवतश्चात्र।

"आयतश्च विशालश्च सुविभक्तो निराश्रयः।
प्राप्तकालकृतश्चापि व्रणः कर्म्मणि शस्यते ॥
शौर्य्यमाशु क्रिया शस्त्रं तैक्ष्ण्यमस्वेदवेपथू।
असंमोहश्च वैद्यस्य शस्त्रकर्म्मणि शस्यते ॥"

एकेन वा व्रणेनाशुध्यमानेनान्तरालमवेक्ष्य अपरान् व्रणान् कुर्य्यात्। भवन्ति चात्र।

"यतो यतो गतिं विद्यादुत्सङ्गो यत्र यत्र च।
तत्र तत्र व्रणं कुर्य्याद्यथा दोषो न तिष्ठति ॥"

तत्र भ्रूगण्डशङ्खललाटाक्षिपुटौष्ठदन्तवेष्टकक्षा-कुक्षिवङ्क्षणेषु तिर्य्यक्छेद उक्तः ॥

"चन्द्रमण्डलवच्छेदान् पाणिपादेषु कारयेत्।
अर्द्धचन्द्राकृतींश्चापि गुदे मेढ्रे च बुद्धिमान् ॥"

अन्यथा तु शिरास्नायुच्छेदनमतिमात्रं वेदना चिराद्व्रणसंरोहो मांसकन्दी प्रादुर्भावश्चेति। मूढगर्भोदराशोऽश्मरीभगन्दरमुखरोगेष्वभुक्त-वतः कर्म्म कुर्व्वीत। ततः शस्त्रमवचार्य्य शीता-भिरद्भिरातुरमाश्वास्य समन्तात् परिपीड्या-ङ्गुल्या व्रणमभिमृज्य प्रक्षाल्य कषायेण शीते-नोदकेनादाय तिलकल्कमधुसर्पिःप्रगाढामौषध-युक्तां वर्त्तिं प्रणिदध्यात्। ततः कल्केनाच्छाद्य नातिस्निग्धां नातिरूक्षां नातिघनां कवलिकां दत्त्वा वस्त्रपट्टेन बध्नीयाद्वेदनारक्षोघ्नैर्धूपैर्धूपये-द्रक्षोघ्नैश्च मन्त्रै रक्षां कुर्व्वीत। ततो गुग्गुल्व-गुरुसर्ज्जरसवचागौरसर्षपचूर्णैर्लवणनिम्बपत्रव्या-मिश्रैराज्ययुक्तैर्धूपैर्धूपयेत्। आज्यशेषेण चास्य प्राणान् समालभेत। उदकुम्भाच्चापो गृहीत्वा प्रोक्षयन् रक्षाकर्म्म कुर्य्यात्तद्वक्ष्यामः ॥ ० ॥

"कृत्यानां प्रतिघातार्थं तथा रक्षोभयस्य च।
रक्षाकर्म्म करिष्यामि ब्रह्मा तदनुमन्यताम् ॥
नागाः पिशाचा गन्धर्व्वाः पितरो यक्षराक्षसाः।
अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान् सदा ॥
पृथिव्यामन्तरीक्षे च ये चरन्ति निशाचराः।
दिक्षु वास्तुनिवासाश्च पान्तु त्वां ते नमस्कृताः।
पान्तु त्वां मुनयो ब्राह्मा दिव्या राजर्षयस्तथा।
पर्व्वताश्चैव नद्यश्च सर्व्वाः सर्व्वेऽपि सागराः ॥
अग्नी रक्षतु ते जिह्वां प्राणान् वायुस्तथैव च ॥
सोमो व्यानमपानं ते पर्ज्जन्यः परिरक्षतु ॥
उदानं विद्युतः पान्तु समानं स्तनयित्नवः।
बलमिन्द्रो बलपतिर्मनुर्मन्ये मतिं तथा ॥
कामांस्ते पान्तु गन्धर्व्वाः सत्त्वमिन्द्रोऽभिरक्षतु।
प्रज्ञां ते वरुणो राजा समुद्रो नाभिमण्डलम् ॥
चक्षुः सूर्य्यो दिशः श्रोत्रे चन्द्रमाः पातु ते मनः।
नक्षत्राणि सदा रूपं छायां पान्तु निशास्तव ॥
रेतस्त्वाप्याययन्त्वापो रोमाण्योषधयस्तथा।
आकाशं खानि ते पातु देहं तव वसुन्धरा ॥
वैश्वानरः शिरः पातु विष्णुस्तव पराक्रमम्।
पौरुषं पुरुषश्रेष्ठो ब्रह्मात्मानं ध्रुवो भ्रुवौ ॥
एता देहे विशेषेण तव नित्या हि देवताः।
एतास्त्वां सततं पान्तु दीर्घमायुरवाप्नुहि ॥
स्वस्ति ते भगवान् ब्रह्मा स्वस्ति देवाश्च कुर्व्व-नाम्।
स्वस्ति ते चन्द्रसूर्य्यौ च स्वस्ति नारदपर्व्वतौ ॥
स्वस्त्यग्निश्चैव वायुश्च स्वस्ति देवाः सहेन्द्रगाः।
पितामहकृता रक्षा स्वस्त्यायुर्व्वर्द्धतां तव।
ईतयस्ते प्रशाम्यन्तु सदा भव गतव्यथः ॥"

इति स्वाहा ॥

"एतैर्वेदात्मकैर्मन्त्रैः कृत्या व्याधिविनाशनैः।
मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि ॥" ० ॥

ततः कृतरक्षमातुरमागारं प्रवेश्याचारिक-मादिशेत्। ततस्तृतीयेऽहनि विमुच्यैवं बध्नी-यात् सूक्ष्मपट्टेन। न चैनं त्वरमाणोऽपरेद्युर्मोक्ष-येत्। द्वितीयदिवसे परिमोक्षणाद्विग्रथितो व्रणश्चिराद्रुपसंरोहति तीव्ररुजश्च भवति। अत ऊर्द्धं दोषकालबलादीनवेक्ष्य कषायालेपनबन्धा-हाराचारान् विदध्यात्। न चैनं त्वरमाणः सान्तर्दोषं रोपयेत् स ह्यल्पेनाप्यपचारेणाभ्य-न्तरमुत्सङ्गं कृत्वा भूयोऽपि विकरोति। भवन्ति चात्र।

"तस्मादन्तर्व्वहिश्चैव सुशुद्धं रोपयेद्व्रणम्।
रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्ज्जयेत् ॥
हर्षं क्रोधं भयञ्चापि यावदास्थैर्य्यसम्भवात्।
मासान् षट् सप्त वा नूनं विधिरेषः प्रशस्यते ॥
हेमन्ते शिशिरे चैव वसन्ते चापि मोक्षयेत्।
त्र्यहात् द्व्यहाच्छरद्ग्रीष्मवर्षास्वपि च बुद्धि-मान् ॥
अतिपातेषु रोगेषु नेच्छेद्विधिमिमं भिषक्।
प्रदीप्तागारवच्छीघ्रं तत्र कुर्य्यात् प्रतिक्रियाम् ॥
या वेदना शस्त्रनिपातजाता
तीव्रा शरीरं प्रदुनोति जन्तोः।
घृतेन सा शान्तिमुपैति सिक्ता
कोष्णेन यष्टीमधुकान्वितेन ॥"

इति सुश्रुते ५ अध्यायः

शस्त्रः, पुं, ( शसत्यनेनेति। शस वधे + "असिचि मिदिशसिभ्यः क्तः।" उणा० ४।१६३। इति क्तः। यद्वा, दाम्नीशसयुयुजेति।" ३ । २ । १८२ । इति ष्ट्रन्। ) खड्गः। यथा,—

"रिष्टः खड्गस्तरवारिः शस्त्रो मण्डलाग्रश्च सः ॥"

इति त्रिकाण्डशेषः ॥

शस्त्रकं, क्ली, ( शस्त्रमिव। स्वार्थे कन्। ) लोहम्। इत्यमरः ॥

शस्त्रकोशतरुः, पुं, ( शस्त्रस्य खड्गस्य कोश इव तरुः। ) महापिण्डीतरुः। इति राजनिर्घण्टः ॥

शस्त्रजीवी, [ न् ] ( शस्त्रेण जीवतीति। जीव + णिनिः। ) शस्त्राजीवः। इति हेमचन्द्रः ॥ ( यथा, बृहत्संहितायाम्। १० । २४।

"रविजेन भित्ते विजिते
गणमुख्याः शस्त्रजीविनश्चान्नम् ॥")

शस्त्रधारणजीवकः, त्रि, ( शस्त्रधारणेन जीव-तीति। जीव + ण्वुल्। ) शस्त्राजीवः। इति शब्दरत्नावली ॥

शस्त्रपाणिः, त्रि, ( शस्त्रं पाणौ यस्य। ) शस्त्र-हस्तः। यथा,—

"उन्मादकोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः।
केशाकेशिग्रहीतश्च युगपत् पारदारिकः ॥"

इति व्यवहारतत्त्वम्

अपि च।

"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारापहारी च षडेते आततायिनः ॥"

इति प्रायश्चित्तविवेकः ॥

शस्त्रभृत्, त्रि, शस्त्रधारी। शस्त्रं बिभर्त्तीति। भृधातोः क्विप्प्रत्ययेन निष्पन्नमेतत् ॥ ( यथा, रघुः। २ । ४० ।

"शस्त्रेण रक्ष्यं यदशक्यरक्षं
न तद्यशः शस्त्रभृतां क्षिणोति ॥")

शस्त्रमार्जः, पुं, (शस्त्राणि मार्ष्टीति। मृज + अण्।) शस्त्रमार्जनकर्त्ता। सिकलगर इति भाषा। तत्पर्य्यायः। असिधावकः २। इत्यमरः ॥ अस्त्र-मार्जः ३ असिधावः ४। इति शब्दरत्नावली ॥ शाणाजीवः ५ भ्रमासक्तः ६। इति हेम-चन्द्रः ॥

शस्त्रहतः, त्रि, ( शस्त्रेण हतः। ) शस्त्राघातेन मृतः। तस्याशौचादि यथा। याज्ञः।

"क्षतेन म्रियते यस्तु तस्याशौचं भवेद्विधा।
आसप्ताहात् त्रिरात्रं स्यात् दशरात्रमतःपरम् ॥
शस्त्राघाते त्र्यहादूर्द्धं यदि कश्चित् प्रमीयते।
अशौचं प्राकृतं तत्र सर्व्ववर्णेषु नित्यशः ॥"

अत्र शस्त्रघातपदं चेतरशस्त्रघातपरं पारि-भाषिकशस्त्रघातपरमपि। यथा, देवीपुराणे।

"पक्षिमत्स्यमृगैर्ये तु दंष्ट्रिशृङ्गिनखैर्हताः।
पतनानशनप्रायैर्व्वज्राग्निविषबन्धनैः।
मृता जलप्रवेशेन ते वै शस्त्रहताः स्मृताः ॥"

अन्यथा चतं विना पतनादिभिर्विलम्बमृतानां दिनत्रयमध्ये अनध्यवसायः स्यात्। न च शास्त्रीय-व्यवहारेऽन्तरङ्गत्वेन पारिभाषिकस्यैव युक्तत्व-मिति वाच्यं त्राहि पारिभाषिकापारिभाषिक-

अन्नं पितृगमित्युक्तं खिन्नमन्नसुराहृतम् ॥"

इति स्मृतिः ॥

ग्राम्यशस्यानि यथा,—

"व्रीहयश्च यवाश्चैव गोधूमाश्चाणवस्तिलाः ।
प्रियङ्गवो ह्युदाराश्च कोरदूषाः सचीनकाः ॥"

उदाराः दीर्घशालयः ।

"माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ।
आढक्यश्चणकाश्चैव शणाः सप्तदश स्मृताः ॥
इत्येता ओषधीनान्तु ग्राम्याणां जातयो मुने ॥"

ग्राम्यारण्यशस्यानि यथा,—

"ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्द्दश ।
व्रीहयश्च यवा माषा गोधूमाश्चाणवस्तिलाः ॥
प्रियङ्गुसप्तमा ह्येते अष्टमास्तु कुलत्थकाः ।
श्यामाकास्त्वथ नीवारा जर्त्तिलाः सगवेधुकाः ॥
तथा वेणुयवाः प्रोक्तास्तथा मर्कटका मुने ।
ग्राम्यारण्याः स्मृता ह्येता ओषध्यस्तु चतुर्द्दश ॥"

इति विष्णुपुराणे १ अंशे ६ अध्यायः ॥*॥

नवशस्यसम्भोगनक्षत्राणि यथा,—

"अनुराधा मृगशिरो रेवती चोत्तरात्रयम् ।
हस्ता चित्रा मघा पुष्या श्रवणा च पुनर्व्वसुः ॥
रोहिणी नवशस्यादिनवरत्नाशनादिषु ।
प्रशस्तं नवपीठादिसम्भोगं श्रपविद्वदेत् ॥"*॥

नवशस्यश्राद्धादिकालो यथा,—

"शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः ॥"

इत्यनेन शरद्वसन्तविहितनवशस्येष्टिः ।

"श्यामाकैर्व्रीहिभिश्चैव यवैरन्योन्यकालतः ।
प्राग्यज्ञं युज्यतेऽवश्यं न त्वाग्रयणात्ययः ॥"

इति कालान्तरदर्शनात् श्राद्धेऽपि तथा । आग्रयणं नवशस्येष्टिः ।

"वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः ।
अपरे क्रियमाणं हि धनुष्येव कृतं भवेत् ॥
धनुषि यत् कृतं श्राद्धं मृगनेत्रासु रात्रिषु ।
पितरस्तस्य गृह्णन्ति नवान्नमिषकाङ्क्षिणः ॥"

अपरे कृष्णपक्षे ।

"पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुधः ।
भवेत् जन्मान्तरे रोगी पितॄणां नोपतिष्ठते ॥
यद्यपि व्रीहिपाके च यवपाके च पार्थिव ।
न तावान्नो महाराज विना श्राद्धं कथञ्चन ॥"

इति विष्णुधर्म्मोत्तरवचने श्राद्धं प्रति व्रीहियवपाकयोर्निमित्तत्वं प्रतीयते । तथापि नवोदके नवान्ने च इति शातातपवचने पूर्व्वोक्तवहुषु वचनेषु च नवान्नस्य श्रुतेर्नवान्नत्वेनैवोभयसाधारणं निमित्तं लाघवात् । अभिलापवाक्ये नवान्नागमनिमित्तमिति नियोज्यम् । न तु यवान्नागमादि । वृश्चिके शुक्लपक्षे च इति तु धनुरादिपर्य्युदस्तेतरगौणकालमध्ये वृश्चिकस्य प्राशस्त्यमात्रार्थं न तु श्राद्धान्तरार्थमिति । इति मलमासतत्त्वम् ॥ अन्यत् नवान्नशब्दे द्रष्टव्यम् ॥

शस्यध्वंसी, [न्] पुं, (शस्यानि ध्वंसयतीति । ध्वंस + णिनिः ।) तुमरुवृक्षः । इति शब्दचन्द्रिका ॥ शस्यनाशके, त्रि ॥

शस्यमञ्जरी, स्त्री, (शस्यस्य मञ्जरी ।) अभिनवनिर्गतधान्यादिशीर्षकम् । शीष इति भाषा ॥ तत्पर्य्यायः । कणिशम् २ । इत्यमरः ॥ कणिशः ३ कणिषः ४ । इति तट्टीका ॥

शस्यशूकं, क्ली, (शस्यस्य शूकम् ।) शस्यस्य तीक्ष्णाग्रम् । शुङा इति भाषा । तत्पर्य्यायः । किंशारुः २ । इत्यमरः ॥

शस्यसम्बरः, पुं, शालवृक्षः । इत्यमरः ॥

शस्याद्, त्रि, शस्यभक्षकः । शस्यं अत्ति इत्यर्थे अदधातोः कर्त्तरि क्विप्प्रत्ययेन निष्पन्नमेतत् । इति मुग्धबोधव्याकरणम् ॥

शस्यारः, पुं, क्षुद्रशमीवृक्षः । इति शब्दरत्नावली ॥

शांशपः, पुं, शिंशपाया विकारश्चमसः । शिंशपाशब्दादण्प्रत्यये इकारस्य आकारादेशेन निष्पन्नमेतत् । इति सिद्धान्तकौमुदी ॥

शांशपायनः, पुं, मुनिविशेषः । इति पुराणम् ॥ (यथा, विष्णुपुराणे । ३ । ६ । १८ ।

"काश्यपः संहिताकर्त्ता सावर्णिः शांशपायनः ॥")

शाकं, क्ली,पुं, (शक्यते भोक्तुमिति । शक + घञ् ।) पत्रपुष्पादि । साग इति हिन्दीभाषा । तत्पर्य्यायः । हरितकम् २ शिग्रुः ३ । इत्यमरः ॥ शिग्रुः ४ । इति तट्टीका ॥ हारितकम् ५ । इति शब्दरत्नावली ॥ अथ शाकवर्गः । तत्र शाकनिरूपणम् ।

"पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा ।
शाकं षड्विधमुद्दिष्टं गुरु विद्यात् यथोत्तरम् ॥"

अथ शाकानां गुणाः ।

"प्रायः शाकानि सर्व्वाणि विष्टम्भीनि गुरूणि च ।
रूक्षाणि बहुवर्च्चांसि सृष्टविण्मारुतानि च ॥
शाकं भिनत्ति वपुरस्थि निहन्ति नेत्रं
वर्णं विनाशयति रक्तमथापि शुक्रम् ।
प्रज्ञाक्षयञ्च कुरुते पलितञ्च नूनं
हन्ति स्मृतिं गतिमिति प्रवदन्ति तज्ज्ञाः ॥
शाकेषु सर्व्वे निवसन्ति रोगाः
सहेतवो देहविनाशनाय ।
तस्माद्बुधः शाकविवर्ज्जनञ्च
कुर्य्यात्तथाम्लेषु स एव दोषः ॥"

इति भावप्रकाशः ॥

अपि च ।

"सर्व्वशाकमचाक्षुष्यमलक्ष्म्यममैथुनम् ।
ऋते पटोलवास्तूककाकमाचीपुनर्नवाः ॥"

इति राजवल्लभः ॥

शाकः, पुं, वृक्षविशेषः । सेगुन् इति भाषा । तत्पर्य्यायः । शाकवृक्षः २ शाकाख्यः ३ खरपत्रः ४ अर्ज्जुनोपमः ५ । इति रत्नमाला ॥ ककचपत्रः ६ शरपत्रः ७ घनपत्रः ८ अहीरुहः ९ श्रेष्ठकाष्ठः १० स्थिरसारः ११ गृहद्रुमः १२ । अस्य गुणाः । सारकत्वम् । पित्तदाहश्रमापहत्वञ्च । अस्य वल्कलगुणाः । कफनाशित्वम् । मधुरत्वम् । रूक्षत्वम् । कषायत्वञ्च । इति राजनिर्घण्टः ॥*॥ शक्तिः । इति मेदिनी ॥ शिरीषवृक्षः । इति शब्दरत्नावली ॥ नृपभेदः । इति विश्वः ॥ द्वीपविशेषः । तस्य विवरणं यथा,—

सूत उवाच ।

"शाकद्वीपस्य वक्ष्यामि यथावदिह निश्चयम् ।
कथ्यमानं निबोधध्वं शाकद्वीपं द्विजोत्तमाः ॥
जम्बुद्वीपस्य विस्ताराद्द्विगुणस्तस्य विस्तरः ।
विस्ताराद्द्विगुणश्चापि परिणाहः समन्ततः ॥
तेनावृतः समुद्रोऽयं द्वीपेन लवणोदधिः ।
तत्र पुण्या जनपदाश्चिराच्च म्रियते जनः ॥
कुत एव च दुर्भिक्षं क्षमातेजोयुतेष्विह ।
तत्रापि पर्व्वताः शुभ्राः सप्तैव मणिभूषिताः ॥
शाकद्वीपादिद्वीपेषु सप्त सप्त नगास्त्रिषु ।
ऋज्वायताः प्रतिदिशं निविष्टा वर्षपर्व्वताः ॥
रत्नाकरादिनामानः शोभावन्तो महाचिताः ।
समाचिताः प्रतिदिशं द्वीपविस्तरमानतः ॥
उभयत्रावगाढाश्च लवणक्षीरसागरौ ।
शाकद्वीपे तु वक्ष्यामि सप्त दिव्यान् महाचलान् ॥
देवर्षिगन्धर्व्वयुतः प्रथमो मेरुरुच्यते ।
प्रागायतः स सौवर्ण उदयो नाम पर्व्वतः ॥
तत्र मेघास्तु वृष्ट्यर्थं प्रभवन्ति च यान्ति च ।
तस्यापरेण सुमहान् जलधारो महागिरिः ॥
स वै चन्द्रः समाख्यातः सर्व्वौषधिसमन्वितः ।
तस्मान्नित्यमुपादत्ते वासवः परमं जलम् ॥
नारदो नाम सैवोक्तो दुर्गशैलो महाचितः ।
तत्राचले समुत्पन्नौ पूर्व्वं नारदपर्व्वतौ ॥
तस्यापरेण सुमहान् श्यामो नाम महागिरिः ।
यत्र श्यामत्वमापन्नाः प्रजाः पूर्व्वमिमाः किल ॥
स एव दुन्दुभिर्नाम श्यामः पर्व्वतसत्तमः ।
शब्दमृत्युः पुरा तस्मिन् दुन्दुभिस्ताडितः सुरैः ॥
रत्नज्वालाम्बरमयः शाल्मलश्चान्तरालवान् ।
तस्यापरेण रजतो महानस्तो गिरिः स्मृतः ॥
स वै सोमक इत्युक्तो देवैर्यत्रामृतं पुरा ।
सम्भृतञ्च हृतञ्चैव मातुरर्थे गरुत्मता ॥
तस्यापरे चाम्बिकेयः सुमनाश्चैव स स्मृतः ।
हिरण्याक्षो वराहेण तस्मिन् शैले निसूदितः ॥
आम्बिकेयात् परो रम्यः सर्व्वौषधिसमन्वितः ।
विभ्राजस्तु समाख्यातः स्फाटिकः स महागिरिः ॥
यस्माद्विभ्राजते नित्यं विभ्राजस्तेन स स्मृतः ।
सैवेह केशवेत्युक्तो यतो वायुः प्रवायति ॥
तेषां वर्षाणि वक्ष्यामि पर्व्वतानां द्विजोत्तमाः ।
शृणुध्वं नामतस्तानि यथावदनुपूर्व्वशः ,
द्विनामान्येव वर्षाणि यथैव गिरयस्तथा ।
उदयस्योदयं वर्षं जलधारेति विश्रुतम् ॥
नाम्ना शान्तभयन्नाम वर्षं तत् प्रथमं स्मृतम् ॥
द्वितीये जलधारस्य सुकुमारमिति स्मृतम् ।
तदेव शैशिरं नाम वर्षं संपरिकीर्त्तितम् ॥
रैवतस्य तु कौमारं तथैव च सुखोदयम् ।
श्यामपर्व्वतवर्षन्तु मणीचकमिति स्मृतम् ॥
आनन्दकमिति प्रोक्तं तदेव मुनिभिः शुभम् ।

लोमकस्य शुभं वर्षं विज्ञेयं कुसुमोत्तरम् ।
तदेव शिवमित्युक्तं वर्षं लोमकशक्तितम् ।
आम्बिकेयस्य मेदाकि क्षेमकश्चैव तत्स्मृतम् ।
सेतुपर्व्वतकस्यापि महाद्रुममिति स्मृतम् ।
तदेव ध्रुवमित्युक्तं वर्षं विभ्राजसाह्वितम् ।
द्वीपस्य परिणाहश्च ह्रस्वदीर्घत्वमेव च ।
जम्बुद्वीपेन सङ्ख्यातस्तस्य मध्ये वनस्पतिः ।
शाको नाम महावृक्षस्तस्य प्रजा महानुगाः ।
एतेषु देवगन्धर्व्वाः सिद्धाश्च सह चारणैः ।
विहरन्ति रमन्ते च दृश्यमानाश्च तैः सह ।
तत्र पुण्या जनपदाश्चातुर्व्वर्ण्यसमन्विताः ।
तेषु नद्यस्तु वै सप्त प्रतिवर्षं समुद्रगाः ।
द्विनाम्नश्चैव ताः सर्व्वा गङ्गा सप्तविधा स्मृता ।
प्रथमा सुकुमारीति गङ्गा शिवजला शुभा ।
अनुतप्ता च नाम्नैषा नदी सम्परिकीर्त्तिता ।
सुकुमारी तपःसिद्धा द्वितीया नामतः सती ।
नन्दा च पावनी चैव तृतीया परिकीर्त्तिता ।
शिविका तु चतुर्थी स्यात् त्रिविधा च पुनः
स्मृता ।
इक्षुश्च पञ्चमी ज्ञेया तथैव च पुनः कुहूः ।
वेणुका चामृता चैव षष्ठी सम्परिकीर्त्तिता ।
सुकृता च गभस्ती च सप्तमी परिकीर्त्तिता ।
एताः सप्त महाभागाः प्रतिवर्षं शिवोदकाः ।
पावयन्ति जनं सर्व्वं शाकद्वीपनिवासिनम् ।
अभिगच्छन्ति ताभ्योऽन्या नदीनद्यः सरांसि च ।
बहूदकपरिस्रावा यतो वर्षति वासवः ।
आसान्तु नामधेयानि परिमाणं तथैव च ।
न शक्यं परिसङ्ख्यातुं पुण्यास्ताः सरिदुत्तमाः ।
ताः पिबन्ति प्रहृष्टा नदीजनपदास्तु ते ।
ये ते शान्तभयाः प्रोक्ताः प्रमोदाश्चापि वै
शिवाः ।
आनन्दाश्च सुखाश्चैव क्षेमकाश्च ध्रुवैः सह ।
वर्णाश्रमाचारयुक्ता देशास्ते सप्त विश्रुताः ।
अरोगा बलिनश्चैव सर्व्वे मरणवर्ज्जिताः ।
अवसर्पिणी न तेष्वस्ति तथैवोत्सर्पिणी पुनः ।
न तत्रास्ति युगावस्था चतुर्युगकृता क्वचित् ।
त्रेतायुगसमः कालस्तदा तत्र प्रवर्त्तते ।
शाकद्वीपादिषु ज्ञेयं पञ्चस्वेतेषु सर्व्वशः ।
देशस्य तु विचारेण कालः स्वाभाविकः स्मृतः ।
न तेषु सङ्करः कश्चिद्वर्णाश्रमकृतः क्वचित् ।
धर्म्मस्याव्यभिचारेण एकान्तसुखिताः प्रजाः ।
न तेषु माया लोभो वा ईर्ष्यासूया भयं तथा ।
विपर्य्ययो न तेष्वस्ति तद्वै स्वाभाविकं स्मृतम् ।
कालो न च तेष्वस्ति न दण्डो न च दाण्डिकः ।
स्वधर्म्मेण च धर्म्मज्ञास्ते रक्षन्ति परस्परम् ।
इति मात्स्ये १०२ अध्यायः ॥ * ॥
अपि च । एवं परस्तात् क्षीरोदात् परित
उपवेष्टितः शाकद्वीपो द्वात्रिंशल्लक्षयोजनायाम
समानेन दधिमण्डोदेन परीतः । यस्मिन् शि
शाकी नाम महीरुहः स्वक्षेत्रव्यपदेशकः ।
यस्य ह महासुरभिगन्धस्तं द्वीपमनुवासयति ।
तस्यापि प्रैयव्रत एवाधिपतिर्नाम्ना मेधातिथिः ।
सोऽपि विभज्य सप्त वर्षाणि पुत्त्रनामानि तेषु
स्वात्मजान् पुरोजवमनोजववेपमानधूम्रानीक
चित्ररेफबहुरूपविश्वाधारसञ्ज्ञान् निधाप्याधि
पतीन् स्वयं भगवत्यनन्त आवेशितमतिस्तपोवनं
प्रविवेश । एतेषां वर्षमर्य्यादागिरयो नद्यश्च
सप्त सप्तैव । ईशान उरुशृङ्गो बलभद्रः शत
केशरः सहस्रस्रोतो देवपालो महानस इति ।
अनघा आयुर्दा उभयस्पृष्टिरपराजिता पञ्चपदी
सहस्रस्रुतिर्निजधृतिरिति । तद्वर्षपुरुषा ऋत
व्रतसत्यव्रतदानव्रतानुव्रतनामानो भगवन्तं वाय्वा
त्मकं प्राणायामविधूतरजस्तमसः परमसमा
धिना यजन्ते । इति श्रीभागवते ५ स्कन्धे २०
अध्यायः ॥ * ॥ युधिष्ठिरविक्रमादित्यशालि
वाहनादिशककरपञ्जीनामतीताब्दः । तस्य
प्रमाणं दिनपञ्जिकायां द्रष्टव्यम् । (शक्तिः ।
कर्म्म । यथा ऋग्वेदे । १ । २४ । ४ ।
'शचीवन्तो पुरुशाक शाका
गवामिव स्रुतयः सञ्चरणीः ॥"
'हे पुरुशाक बहुकर्म्मन्निन्द्र शचीवतः प्रज्ञा
वतस्ते त्वदीयाः शाकाः शक्तयः कर्म्माणि वा ।'
इति तद्भाष्ये सायणः ॥ * ॥ समर्थे त्रि ; यथा
ऋग्वेदे । ५ । ३० । १० ।
'अभ्रा इन्द्रो अधमद्दस्य शाकैः
यदीं सोमास सुषुता अमन्दन् ॥"
'शाकैः शक्तिमद्भिः सह ' इति तद्भाष्ये
सायणः ।)
शाकचुक्रिका, स्त्री, चिञ्चा । इति राजनिर्घण्टः ।
शाकट, त्रि (शकट+अण् ।) शकटस्येदम् ।
शकटवोढा । इति मेदिनी ॥
शाकट पुं श्लेष्मातकवृक्षः । इति राजनिर्घण्टः ।
(शकटं वहतीति । शकट+"शकटादण् ।'
४ । ४ । ८० । इत्यण् ।) युगादिवोढा । तत्
पर्य्यायः । युग्यः २ प्रासङ्ग्यः ३ । इत्यमरः ।
शाकटाक्ष पुं (शाकट इति आख्या यस्य ।)
धववृक्षः । इति रत्नमाला ॥
शाकटायन , पुं, (शकटस्यापत्यं पुमान् । शकट+
'नडादिभ्यः फक् ।"४।१।९९. इति फक् ।) आद्य
शाब्दिकान्तर्गतशाब्दिकविशेषः । यथा —
"इन्द्रश्चन्द्रः काशकृत्स्ना पिशली शाकटा
यनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥"
इति कविकल्पद्रुमः ।
(अयन्तु नाममात्रं धातुजमाह । यथा
कातन्त्रे उणादयो भूतेऽपि दृश्यन्ते
इत्यत्र त्रिलोचनः ।
"नाम च धातुजमाह निरुक्ते
व्याकरणे शकटस्य च तोकम्
यन्न पदार्थविशेषसमुत्थं
प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥")
शाकटिक , त्रि शकटगामी । शकटेन गच्छतो
ऽर्थे ठक्प्रत्ययेन निष्पन्नमेतत् । इति सिद्धान्त
कौमुदी । (यथा हर्षचरितायाम् । १० । ४ ।
"रोहिण्यां कोपशमन
कामिन्याश्चाल शाकटिका ॥ )
शाकटीन पुं विंशतितुलापरिमाणम् । तत्
पर्य्यायः । भारः २ आचितः ३ शकटः ४
शालाटः ५ । इति हेमचन्द्रः ॥
शाकतरु, पुं शाकाख्यवृक्षः । शाकवृक्षः ।
इति शब्दमाला । सागोन इति हिन्दी भाषा ।
शाकपत्र पुं शिग्रुः । इति राजनिर्घण्टः ॥
शाकपार्थिव पुं मध्यपदलोपिसमासः । इति शब्दरत्नावली ॥
शाकम्भरी स्त्री शाकेन बिभर्त्ति । भृ+खच् ।
ङीप् ।) दुर्गा । यथा —
'ततोऽहमखिलं लोकमात्मदेहसमुद्भवैः ।
भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः ।
शाकम्भरीति विख्यातिं तदा यास्याम्यहं भुवि ।
तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् ॥"
इति मार्कण्डेयपुराणे नारायणीस्तुतिः ॥
अपि च ।
"भूयः सुराणामयुगे निराशना
निरीक्ष्य मारीचगृहे समाश्रिता ।
लोकान् भरिष्यामि तनूजशाकैः
तदा भविष्यामि च शाकम्भरीति ॥"
इति वामने ५३ अध्यायः
नगरविशेषः । शाम्भरीति ख्यातः । इति केचित् ॥
शाकम्भरीय क्ली आजमेराख्यदेशान्तर्गतशाम्भर
नगरीयजलाशयविशेषोद्भवलवणम् । शाम्भरि
इति ख्यातम् तत्पर्य्यायगुणा यथा —
'शाकम्भरीयं कथितं गडाख्यं रोमकं तथा ।
गडाख्यं लघु वातघ्नमत्युष्णं भेदि पित्तलम्
तीक्ष्णं व्यवायि सूक्ष्मञ्चाभिष्यन्दि कटुपाकि
च ॥'
इति भावप्रकाशः ॥
शाकयोग्य, पुं (शाकस्य योग्यः ।) धान्यकम् ।
इति राजनिर्घण्टः ॥
शाकराज , पुं (शाकानां राजा निर्दोषत्वात् ।
राजाहःसखिभ्यष्टच् । ५ । ४ । ९१ । इति टच् ।)
वास्तूकम् । इति राजनिर्घण्टः ॥
शाकल , } पुं शकलेन प्रोक्तमधीयते शाक
शाकलक } लिनो बह्वृचाः । शोणो वा
"शाकलाद्वा ।" ४ । ३ । १२८ । इति अण् ।
परम्परासम्बन्धोऽङ्कः । इति सिद्धान्तकौमुदी ॥
(द्वीपविशेषः यथा, महाभारते । २ । २६ । ६ ।
"शाकलद्वीपवासाश्च सप्तद्वीपेषु ये नृपाः ।
अर्ज्जुनस्य च सैन्यैस्तैर्विग्रहस्तुमुलोऽभवत् ॥ )
शाकलिक त्रि, शकलसम्बन्धी । "शकलकर्द
माभ्यामुपसङ्ख्यानम् ।' ४ । २ । ५ । इत्यस्य
वार्त्तिकोक्त्या शाकलिकः कार्द्दमिकः । अण्या
मपीति वृत्तिकारः । शाकलः । कार्द्दमः ।
इति सिद्धान्तकौमुदी ॥
शाकविल्व , पुं (शाके विल्व इव ।) वार्त्ताकुः ।
इति जटाधरः ॥
शाकविल्वक , पुं (शाकविल्व+स्वार्थे कन् ।)
वार्त्ताकुः । इति शिक्षापटलः ॥

शाकवीरः, पुं, ( शाकेषु वीरः । ) वास्तूकशाकः । इति त्रिकाण्डशेषः ॥ जीवशाकः । इति राजनिर्घण्टः ॥

शाकवृक्षः, पुं, ( शाकाख्यो वृक्षः । ) तरुविशेषः । इति रत्नमाला ॥ सेगोन इति भाषा । अस्य पर्य्यायगुणौ शाकशब्दे द्रष्टव्यौ ॥

शाकशाकटं, क्ली, ( शाकानां भवनं क्षेत्रम् । शाक+"भवने क्षेत्रे शाकटशाकिनौ ।" इति शाकटः । ) शाकक्षेत्रम् । इति हेमचन्द्रः ॥

शाकशाकिनं, क्ली, (शाकानां भवनं क्षेत्रम् । शाक +शाकिनः ।) शाकक्षेत्रम् । इति हेमचन्द्रः ॥

शाकश्रेष्ठः, पुं, ( शाकेषु श्रेष्ठः । ) वास्तूकशाकम् । इति शब्दरत्नावली ॥

शाकश्रेष्ठा, स्त्री, ( शाकेषु श्रेष्ठा । ) जीवन्ती । डोडीक्षुपः । वार्त्ताकुः । इति राजनिर्घण्टः ॥

शाका, स्त्री, हरीतकी । इति केचित् ॥

शाकाख्यं, क्ली, ( शाक इति आख्या यस्य । ) पत्रपुष्पादि । इत्यमरः ॥

"व्यञ्जनयोग्यं पत्रपुष्पादि शाकपदवाच्यम् ।
आदिना फलमूलादिग्रहः । यदुक्तम् ।
'मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् ।
त्वक् पुष्पं कवकञ्चैव शाकं दशविधं स्मृतम् ॥'
तत्र मूलं मूलकादेः । पत्रं पटोलादेः । करीरं वंशाङ्कुरादि । अग्रं वेत्रादेः । फलं कुष्माण्डादेः । काण्डं उत्पलादिनाडी । अधिरूढं तालास्थिमज्जा । अधिरूढोऽङ्कुर इति केचित् । त्वक् मातुलुङ्गादेः । पुष्पं कोविदारादेः । कवकं छत्रिका । शक्यते भोक्तुमनेनेति शाकम् । शक्ति सामर्थ्यं तनूकरोति शो तनूकरणे बाहुल्यात् कः शाकमित्यन्ये ।" इति तट्टीकायां भरतः ॥

शाकाख्यः, पुं, (शाक इति आख्या यस्य ।) शाकवृक्षः । इति रत्नमाला ॥ अस्य पर्य्यायगुणौ शाकशब्दे द्रष्टव्यौ ॥

शाकाङ्गं, क्ली, ( शाकस्य अङ्गमिव । ) मरिचम् । इति राजनिर्घण्टः ॥

शाकाम्लं, क्ली, ( शाके अम्लो यस्य । ) वृक्षाम्लम् । इति राजनिर्घण्टः ॥

शाकाम्लभेदनं, क्ली, (शाकाम्लं भेदनञ्च ।) चुक्रम् । इति राजनिर्घण्टः ॥

शाकालाबुः, स्त्री, राजालाबुः । इति राजनिर्घण्टः ॥

शाकाष्टका, स्त्री, ( शाका अष्टौ प्रदेया यत्र । ) शाकोपकरणकश्राद्धाष्टमी । सा च चैत्र-फाल्गुनकृष्णाष्टमी । तद्विवरणं मांसाष्टकाशब्दे द्रष्टव्यम् ॥

शाकिनी, स्त्री, (शाकोऽस्त्यस्येति । शाक+इनिः ।) शाकयुक्ता भूमिः । यथा,—

"शकटः शाकिनी गावो जालमस्यन्दनं वनम् ।
अनूपं पर्वतो राजा दुर्भिक्षे नव वृत्तयः ॥"
शकटो धान्यादिवहनद्वारेणोपजीव्यः ।
"धर्म्मं पुण्यं धनं कन्दं नालं यन्निरुद्धं तथा ।
शाकं बहुविधप्रोक्तं गुरु विद्यात् यथोत्तरम् ॥"

इति वैद्योक्तशाकयोगात् शाकिनी गृहवाटिका-शाकाद्याहरणेन । गावो दुग्धादिना । जालं मत्स्याद्याहरणेन । अस्यन्दनं स्वस्थानादत्यागः कुशीदलाभेन ; वणिग्व्यवहारेण च । वनं फलपुष्पाद्याहरणेन । अनूपं बहूदकदेशः मत्स्यशालूकाद्याहरणेन । पर्व्वतो गैरिक-मृदाद्याहरणेन । राजा सेवादिना । इत्या-ह्निकतत्त्वम् ॥ * ॥ दुर्गाया अनुचरीविशेषः । यथा,—

"डाकिनी योगिनी चैव खेचरी शाकिनी तथा ।
दिक्षु पूज्या इमा देव्यः सुसिद्धाः फलदायिकाः ॥"
इति कात्यायनीकल्पः ॥

"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
ततः परशिवो देवि षट्शिवाः परिकीर्त्तिताः ॥
मूलाधारे तु ब्रह्माणं डाकिनीसहितं न्यसेत् ॥
सर्व्वत्र चतुरक्षरा वादिसान्तं सविन्दुकम् ॥
स्वाधिष्ठानाख्यचक्रे तु सविष्णुं राकिणीं तथा ।
वादिलान्तं प्रविन्यस्य नाभौ तु मणिपूरके ॥
डादिफान्तार्णसहितं रुद्रञ्च लाकिनीं तथा ।
अनाहते कादिठान्तं ईश्वरं काकिनीं तथा ॥
विशुद्धाख्ये महाचक्रे षोड़शस्वरसंयुतम् ।
सदाशिवं शाकिनीञ्च विन्यसेत् पूर्व्ववत्ततः ॥
आज्ञाचक्रे तु देवेशि ह-क्ष-वर्णसमन्वितम् ।
परं शिवं ब्रह्मरूपं हाकिनीसहितं न्यसेत् ॥"
इति तारान्यासभेदः । इति तन्त्रसारः ॥

शाकुचः, त्रि, परोपतापी । इति शब्दमाला ॥

शाकुनः, पुं, ( शकुनमधिकृत्य कृतो ग्रन्थः । शकुन +अण् । ) पशुपक्ष्यादिरूपशकुनद्वारा मनुष्य-शुभाशुभनिश्चायकग्रन्थः । तल्लक्षणं यथा,

"शुभाशुभज्ञानविनिर्णयाय
हेतुर्नृणां यः शकुनः स उक्तः ।
गतिः स्वरालोकनभावचेष्टा
संकीर्त्तयामो द्विपदादिकानाम् ॥
लोकोत्तमा शाकुनसंज्ञकेन
ज्ञानेन विज्ञातसमस्तकार्य्याः ।
नापायकूपे पतति प्रसर्पन्
शाखं हि दिव्या दृगतीन्द्रियेषु ॥"
इति वसन्तराजशाकुने १ सर्गः ॥

(शकुनस्यायमिति । शकुन+"तस्येदम् ।" ४ । ३ । १२० । इति अण् । पक्षिसम्बन्धी । यथा, मनुः । ३ । २६८ ।

"द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु ।
औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै ॥")

शाकुनिकः, पुं, ( शकुनान् हन्तीति । शकुन+"पक्षिमत्स्यमृगान् हन्ति ।" ४ । ४ । ३५ । इति ठक् । ) पक्षिहन्ता । पाखिमारा इति चिड़िमार इति च भाषा । तत्पर्य्यायः । जीवान्तकः २ । इत्यमरः ॥ (यथा, मनुः । ८ । २६० ।

"व्याधान् शाकुनिकान् गोपान् कैवर्त्तान् मूलखानकान् ॥")

शाकुनेयः, पुं, (शकुनेरपत्यम् । शकुनि+"शुभ्रादिभ्यश्च ।" ४ । १ । १२३ । इति ढक् ।) क्षुद्रोलूक-पक्षी । इति राजनिर्घण्टः ॥ ( शकुनिपुत्त्रो वृकासुरः । यथा, भागवते । १० । ८८ । २९ ।

"शाकुनेय भवान् व्यक्तं श्रान्तः किं दूरमागतः ।
क्षणं विश्राम्यतां पुंस आत्मायं सर्व्वकामधुक् ॥")
शकुनसम्बन्धिनि, त्रि ॥

शाकुन्तलेयः, पुं, ( शकुन्तलाया अपत्यमिति । शकुन्तला+"स्त्रीभ्यो ढक् ।" ४ । १ । १२० । इति ढक् । ) भरतराजः । इति जटाधरः ॥ शकुन्तलासम्बन्धिनि, त्रि ॥

शाकुलिकः, त्रि, शकुलान् हन्ति यः । शकुल-शब्दात् "पक्षिमत्स्यमृगान् हन्ति ।" ४ । ४ । ३५ । इति ठक्प्रत्ययेन निष्पन्नमेतत् । इति सिद्धान्तकौमुदी ॥

शाक्करः, पुं, ( शक्कर एव । स्वार्थे अण् । ) अन-ड्वान् । इति हेमचन्द्रः ॥

शाक्तः, त्रि, शक्तिर्देवता अस्य । (शक्ति+"साऽस्य देवता ।" ४।२।२४ । इत्यण् । ) शक्त्युपासकः । अस्य प्रशंसा यथा —

"स्वर्गे मर्त्त्ये च पाताले नास्ति शाक्तात् परः प्रियः ।
सौराणां गाणपत्यानां वैष्णवानां तथैव च ॥
तदन्ते चैव शाक्ताः स्युः क्रमशः क्रमशः प्रिये ।
इत्थं देवि वरारोहे नास्ति शाक्तात् परो जनः ॥
शाक्तोऽपि शङ्करः साक्षात् परं ब्रह्मस्वरूप-भाक् ।
आराधिता येन काली तारा त्रिभुवनेश्वरी ॥
षोड़शी चैव मातङ्गी छिन्ना च बगलामुखी ।
आराधिता महेशानि स शिवो नात्र संशयः ॥
अनिर्व्वाच्यं महेशानि शाक्तानां परमं पदम् ।
यो जानाति महीमध्ये स शिवो नात्र संशयः ॥
ब्रह्मार्च्चितपादाब्जं यो भवेत् सततं सदा ।
स याति चिरकालेन शक्तिमन्दिरमेव हि ।
पार्व्वतीचरणद्वन्द्वभजनाकिङ्करो भवेत् ।
स्वर्गभोगश्च मोक्षश्च शाक्तानां न भवेत् किम् ॥
शाक्तानाञ्चैव निन्दां ये कुर्व्वन्ति हि नराधमाः ।
तेषां शोणितपानं वै कुर्व्वन्ति भैरवीगणाः ॥
भैरवाश्चैव भैरव्यः सदा छिन्दन्ति पामरान् ।
शाक्तान् हिंसन्ति गर्जन्ति निन्दन्ति बहु-जल्पकाः ॥
छिनत्ति तेषां देवेशि शिरांसि चक्रनेमिना ।
शाक्तेभ्य उत्तमो नास्ति स्वर्गे मर्त्त्ये रसातले ॥
शाक्तस्तु शङ्करो ज्ञेयश्चिनेत्रश्चन्द्रशेखरः ।
स्वयं गङ्गाधरो भूत्वा विचरेत् क्षितिमण्डले ॥"
देवीं प्रति शिववाक्यम् ।
"महेशाश्चैव ये भूतास्ते शैवा नात्र संशयः ।
सर्व्वेशाश्चैव शाक्ताश्च सर्व्वे वै गिरिनन्दिनि ।
महुर्षयस्तु शान्ताः शैवाः हरिपरायणाः ।
शाक्ता वै शङ्करा देवि यत्र तत्र कुलोद्भवाः ॥
चाण्डाला शाक्ताः शूद्राः क्षत्रिया वैश्य-ब्राह्मणाः ।

शाखोटो रक्तपित्तार्शोवातश्लेष्मातिसारजित् ॥”

इति भावप्रकाशः ॥

शाख्यः, त्रि, शाखासम्बन्धी । शाखाशब्दात् यप्रत्ययेन निष्पन्नमेतत् ॥

शाङ्करं, क्ली, ( शङ्कर + अण् । ) छन्दोभेदः । इति मेदिनी ॥ अस्य रूपान्तरं शाक्करं शाक्वरञ्च ॥ (शङ्करो देवतास्य इत्यर्थे अपि आर्द्रानक्षत्रम् । यथा, बृहत्संहितायाम् । ७१ । ७ ।

“द्वगे तु सूचकाद्भयं यमुलमेव शाङ्करे ॥” )

शाङ्करः, पुं, ( शङ्करस्यायं वाहनत्वात् । शङ्कर + अण् ।) बलीवर्द्दः । इति मेदिनी ॥ ( शङ्कर-सम्बन्धिनि, त्रि । यथा, कथासरित्सागरे । ४६ । २०१ ।

“नन्वेषां तद्गुणाढ्यप्रमथानां शाङ्करा गणाः ॥”)

शाङ्करिः, पुं, ( शङ्करस्यापत्यं पुमान् । शङ्कर + इञ् । ) कार्त्तिकेयः । गणेशः । इति मेदिनी ॥

शाङ्कुची, स्त्री, शङ्कोचनमत्स्यः । इति शब्दरत्नावली ॥

शाठः, त्रि, शठसम्बन्धि । शठशब्दात् अण्प्रत्ययेन निष्पन्नमेतत् ॥

शाङ्खिकः, पुं, ( शङ्खकरणं शिल्पमस्य इति । शङ्ख + ठक् । ) जातिविशेषः । शाँखारि इति भाषा । तत्पर्य्यायः । काम्बविकः २ । इत्यमरः ॥ शङ्खकारः ३ काम्बलकः ४ । इति शब्दरत्नावली ॥ शङ्खवादकः । तत्पर्य्यायः । शङ्खध्मः २ । इति जटाधरः ॥

शाङ्गुष्ठा, स्त्री, गुञ्जा । इति रत्नमाला ॥

शाटः, पुं, वस्त्रभेदः । इत्यमरभरतौ ॥ यथा,—

“दूरतः शोभते मूर्खो लम्बशाटपटावृतः ।
तावच्च शोभते मूर्खो यावत् किञ्चिन्न भाषते ॥”

इति चाणक्यशतकम् ॥

शाटकः, पुं क्ली, ( शाट + स्वार्थे कन् । ) पटः । ( यथा, कथासरित्सागरे । ५३ । ३८ ।

“स राजवन्दिनामा तद्दत्त्वा शाटकमग्रहीत् ॥”)

नाटकभेदः । इत्यमरभरतौ ॥

शाटिका, स्त्री, शाटी । इत्यमरटीकायां भरतः ॥

शाटी, पुं स्त्री, वस्त्रभेदः । शाड़ी इति भाषा । इत्यमरः ॥ अस्या निर्माल्यत्वं निर्माल्यशब्दे द्रष्टव्यम् ॥

शाट्यायनं, क्ली, प्रकृतकर्म्मवैगुण्यप्रशमनार्थहोमः । यथा । यत्तु प्रकृतकर्म्मवैगुण्यप्रशमनाय शाट्यायनहोमाभिधानं भवदेवभट्टसम्मतं तन्न प्रामाणिकं तस्मादपि महाप्रामाणिकैर्भट्टनारायणचरणैर्गोभिलभाष्ये तदप्रमाणीकृतत्वात् । छन्दोगपरिशिष्टेऽपि प्रायश्चित्तार्थं प्रकारत्रयमात्रमुक्तम् । यथा,—

“यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत् ।
चतस्रस्तत्र विज्ञेया स्त्रीपाणिग्रहणे यथा ॥
अपि वाज्ञातमित्येषा प्राजापत्यापि वाहुतिः ।
होतव्या त्रिर्विकल्पोऽयं प्रायश्चित्तविधिः स्मृतः ॥”

त्रिर्विकल्प इत्यनेन कल्पान्तरनिषेधात् गोभिलीयकर्म्मण्यपि शाट्यायनहोमो न युक्तः । किन्तु व्यस्तसमस्तमहाव्याहृतिभिश्चतसृभिः प्रायश्चित्तहोमो युक्तः । विशारदप्रभृतयोऽप्येवम् । शाट्यायनहोमस्य सम्मूलत्वेऽपि शाखान्तरीयत्वम् । इति तिथ्यादितत्त्वम् ॥

शाट्यायनः, पुं, मुनिविशेषः । इति पुराणम् ॥

शाठ्यं, क्ली, ( शठस्य भावः । शठ + ष्यञ् । ) शठता । (यथा । “शठे शाठ्यं समाचरेत् ॥”) तत्पर्य्यायः । कपटः २ व्याजः ३ दम्भः ४ उपधिः ५ छद्म ६ कैतवम् ७ कुसृतिः ८ निकृतिः ९ । इत्यमरः ॥ नव व्यवहार्थव्यवहारे । शठ वधे संश्लेषणे च तालव्यादिः अच् तस्य कर्म्म शाठ्यं ष्यञ् । कपटादिषट्कं छद्मानि कुसृत्यादित्रयं चित्तकौटिल्ये इत्येके । कपटादिषट्कं वञ्चनमात्रफलम् । कुसृत्यादित्रिकन्तु हिंसाफलमिति भेदः । इति सर्व्वानन्दो मधुश्च । नवैवैकार्था इति वयम् । इति भरतः ॥ अपि च ।

“अस्त्रियां कपटो व्याज उपधिर्दम्भ एव च ।
कूटं कल्कं छलं छद्म मिथ्यैकैरवकैतवम् ॥
अथ शाठ्यञ्च शठता कुसृतिर्निकृतिश्च सा ।
हिंसाफले चतुष्कं स्यात् शाठ्यपर्य्याय ईरितः ॥
पूर्व्वः कपटपर्य्यायः फले वञ्चनमात्रके ।
उभयोरेकपर्य्याय इति केचित् प्रचक्षते ॥”

इति शब्दरत्नावली ॥

शाड, ङ श्लाघे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) ङ, अशशाड़त् । ङ, शाडते गुणिनं गुणी । अन्तःस्थवर्गतृतीयवान् क्षादिरयमिति कस्यचिद्भ्रमः । इति दुर्गादासः ॥

शाड्वलः, पु, शाद्वलः । इति केचित् ॥

शाणं, क्ली, (शणेन निर्म्मितमिति । शण + अण् ।) शणनिर्म्मितवस्त्रम् । यथा । क्षौमं शाणं वा ब्राह्मणस्य कार्पासं क्षत्रियस्य आविकं वैश्यस्य । क्षुमा अतसी तस्या इदं क्षौमं तसरादि । शाणं शणतन्तुभवं तदुभयं ब्राह्मणस्य । इति संस्कारतत्त्वम् ॥

शाणः, पुं, ( शण्यते दायते गुणादिरनेनेति । शण + घञ् । ) कषपट्टिका । कष्टिपातर इति भाषा । तत्पर्य्यायः । निकषः २ कषः ३ । इत्यमरः ॥ शाणः ४ निकसः ५ कषः ६ । इति भरतः ॥ व्याकषः ७ । इति शब्दरत्नावली ॥ माषचतुष्टयम् । चारि मासा इति भाषा । तत्पर्य्यायः । निष्कः २ टङ्कः ३ । इति वैद्यकपरिभाषा ॥ यथा,—

“माषैश्चतुर्भिः शाणः स्यात् धरणः स निगद्यते ।
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ॥”

इति भावप्रकाशः ॥

लौहादीनां निकषः । शानपातर इति भाषा । इति मेदिनी ॥ करपत्रम् । करात् इति भाषा । इति विश्वः ॥

शाणाजीवः, पुं, ( शाणेन आजीवतीति । आ + जीव + अच् । ) अस्त्रमार्ज्जकः । यथा,—

“शाणाजीवः शस्त्रमार्जो भ्रमासक्तोऽसिधावकः ॥”

इति हेमचन्द्रः ॥

शाणिः, पुं, पट्टरथः । यथा,—

“पट्टे राजशयः शाणिभिश्च वाकुखटपचकः ॥”

इति शब्दमाला ॥

शाणितः, त्रि, तीक्ष्णीकृतः । निशितः । कृतशाणः ॥ शाणशब्दादितप्रत्ययेन निष्पन्नमेतत् ॥

शाणी स्त्री, ( शणस्य विकारः । शण + अण् । टिड्ढेति ङीप् । ) शणसूत्रमयी पट्टिका । यथा,—

“शाणीप्रायाणि वस्त्राणि शमीप्राया महीरुहाः ।
शूद्रप्रायास्तथा वर्णा भविष्यन्ति कलौ युगे ॥”

इति विष्णुपुराणे ६ अंशे १ अध्यायः ॥

शाणी शणसूत्रमयी पट्टिका तत्तुल्यानि वस्त्राणि । इति तट्टीका ॥ (यथा, महाभारते । ३ । १६४ । १६ ।

“वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकः ॥” )

प्रावरणान्तरम् । तामु इति भाषा । इति मेदिनी ॥ छिन्नवस्त्रम् । यथा । शाणी गोणी छिन्नवस्त्रे । इति हेमचन्द्रः ॥ एककटाक्षादिसूचना । इशारा इति पारस्यभाषा । इति शब्दरत्नावली ॥

शाणीरं, क्ली, शोणनदमध्यस्थतटः । इदंशोणनदीतटः । इति विश्वः ॥

शाण्डिल्यः, पुं, विल्ववृक्षः । इत्यमरः ॥ ( यथा, महागणपतिस्तोत्रे । ९ ।

“हेरम्बं प्रणमामि यस्य पुरतः शाण्डिल्यमूले श्रिया
बिभ्रत्याम्बुरुहे समं मधुरिपुस्ते शङ्खचक्रे वहन् ॥” )

वह्निभेदः । ( शण्डिलस्य मुनेर्गोत्रापत्यमिति । शाण्डिल + “गर्गादिभ्यो यञ् ।” ४ । १ । १०५ । इति यञ् । ) मुनिविशेषः । इति मेदिनी ॥ स तु गोत्रकारः भक्तिसूत्रकारश्च । तत्सूत्रभाष्याद्यश्लोको यथा,—

“प्रणम्य परमं देवं श्रीसर्व्वेश्वरसूरिणा ।
शाण्डिल्यशतसूत्रीयं भाष्यमाभाष्यतेऽधुना ॥”

शातं, क्ली, ( शो + क्तः । “शाच्छोरन्यतरस्याम् ।” ७ । ४ । ४१ । इति पक्षे इत्वाभावः ।) सुखम् । तद्वति, त्रि । इत्यमरः ॥ ( विनाशः । यथा, सुश्रुते । ४ । १ ।

“पाणिप्रपाणिप्रदाहं नखशातं करोति च ॥”)

शातः, त्रि, ( शो + क्तः । ) दुर्ब्बलः । निशितः । इति मेदिनी ॥ धुस्तूरः । इत्यमरः ॥

शातकुम्भं, क्ली, ( शतकुम्भे पर्व्वते भवम् । शतकुम्भ + अण् । ) काञ्चनम् । ( यथा, माघे । ६ । ६ ।

"द्रुतशातकुम्भनिभमंशुमतो
वपुरर्द्धमग्नवपुषः पयसि ।")

धुस्तूरः । इत्यमरः ॥

शातकुम्भः, पुं, करवीरवृक्षः । इति मेदिनी ॥

शातकौम्भ, क्ली, स्वर्णम् । इति भरतद्विरूपकोषः ॥ (सुवर्णनिर्म्मिते, त्रि । यथा, रामायणे । २ । ३ । ११ ।
"शतञ्च शातकौम्भानां कुम्भानामग्निवर्च्चसाम् ॥")

शातन, क्ली, कार्श्यम् । विशातनम् । यथा —
"वसन्ते सर्व्वशस्यानां जायते पत्रशातनम् ।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥"
इति सारमञ्जरी ॥
(छेदके, त्रि । यथा, रघुः । ३ । ४२ ।
"स पूर्व्वतः पर्व्वतपक्षशातनं
ददर्श देवं नरदेवसम्भवः ॥")

शातपत्रक, पुं, (शातपत्रं पद्ममिव । कन् ।) चन्द्रप्रकाशः । यथा, —
"चन्द्रिका कौमुदी ज्योत्स्ना प्रकाशो द्योत आतपः ।
अकस्का चन्द्रिकायाञ्च प्रकाशे शातपत्रकः ॥"
इति शब्दचन्द्रिका ॥

शातभीरु, पुं, मदनमाली । मल्लिकाभेदः । यथा, —
"शातभीरुर्म्मदवल्ली भूमिमल्लीऽदमादिका ॥"
इति रत्नमाला ॥

शातमान, त्रि, (शतमान + "शतमानविंशतिकेति ।" ५ । १ । २७ । इति अण् ।) शतमानेन क्रीतम् । इति सिद्धान्तकौमुदी ॥

शातला, स्त्री, (शातं छेदं लातीति । ला + क ।) सातला । चर्म्मकषा इति ख्याता । इत्यमरटीकायां भरतः ॥

शात्रव, क्ली, (शत्रोर्भावः समूहो वा । शत्रु + अण् ।) शत्रुभावः । शत्रुसङ्घातः । इति मेदिनी ॥ (शत्रुसम्बन्धिनि, त्रि । यथा, रघुः । ४ । ४२ ।
"ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ।
नारिकेलासवं योधाः शात्रवञ्च पपुर्यशः ॥")

शात्रव, पुं, (शत्रुरेव । स्वार्थे अण् ।) शत्रुः । इत्यमरः ॥ (यथा, माघे । १९ । ३३ ।
"तत्र माधवबलो महाहवे
शात्रवादिव पराङ्मुखोऽपि च ॥")

शाद, पुं, (शो तनूकरणे + "शाशपिभ्यां ददनौ ।" उणा० ४ । ९७ । इति दः ।) कर्द्दमः । शष्पम् । इत्यमरः ॥

शाद्धरित, त्रि, (शादैः शष्पैः हरितः ।) शाद्वलः । इत्यमरः ॥

शाद्वल, त्रि, (शाद + "नडशादाड्ड्वलच् ।" ४ । २ । ८८ । इति ड्वलच् ।) नवशष्पबहुलदेशः । इत्यमरः ॥ शादो नवतृणं विद्यतेऽत्र शाद्वलः । शष्पवाचिन एव शादशब्दस्य ख्यातं न तु पङ्कवाचिनोऽनभिधानात् । इति तट्टीकायां भरतः ॥ (यथा रामायणे । २ । ९० । १३ ।
"शाद्वलेषु यदा शिश्ये वनान्ते वनगोचरः ।
कुथास्तरणयुक्तेषु किं स्यात् सुखतरं ततः ॥")

शान, अ तेजे । इति कविकल्पद्रुमः ॥ (भ्वा० उभ० सक० सेट् ।) शानस्तेजोकरणम् । अ, शीशांसति शीशांसते खड्गं कर्म्मकारः । इति दुर्गादासः ॥

शान, पुं, शाणः । इत्यमरटीकायां भरतः ॥

शा(श)नपाद, पुं, पारियात्रपर्व्वतः । (अस्य विवरणं हरिवंशे १२१ अध्याये द्रष्टव्यम् ।) चन्दनपङ्कपाशाय । इति महाभारते हरिवंशः । चन्दनपिड़ि इति भाषा ॥

शानी, स्त्री, इन्द्रवारुणी । इति शब्दचन्द्रिका ॥

शान्त, त्रि, (शम + क्त । "वा दान्तशान्तेति ।" ७ । २ । २७ । इति निपातितः ।) उपशमप्रापितः । शमोपशमः । इति भरतः ॥ तत्पर्य्यायः । शमितः २ । इत्यमरः ॥ श्रान्तः ३ जितेन्द्रियः ४ । इति हेमचन्द्रः ॥ शमान्वितः ५ । इति मेदिनी ॥

शान्त, पुं, अभियुक्तः । रसभेदः । इति मेदिनी ॥ शान्तरसस्य लक्षणादि यथा —
"शान्तः शमस्थायिभाव उत्तमप्रकृतिर्म्मतः ।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ॥
अनित्यत्वादिनाशेषवस्तुनिःसारता तु या ।
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते ॥
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ।
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः ॥
रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः ।
निर्व्वेदहर्षस्मरणमतिभूतदयादयः ॥"
यथा —
"रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासञ्च सकौतुकञ्च सदयं दृष्टस्य तैर्नागरैः ।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कः करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ॥"
युधिष्ठिरस्तु महाभारतादौ द्रष्टव्यः ।
"निरहङ्काररूपत्वात् दयावीरादिरेष नो ।"
दयावीरादौ हि जीमूतवाहनादौ अन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्त्तित्वाद्यभिदर्शनादहङ्कारोपशमो न दृश्यते । शान्तस्तु सर्व्वप्रकारेणाहङ्कारप्रशमैकरूपत्वात् तत्रान्तर्भावमर्हति । अतश्च नागानन्दे शान्तरसप्रधानत्वमपास्तम् । ननु ।
"न यत्र दुःखं न सुखं न चिन्ता
न द्वेषरागौ न च काचिदिच्छा ।
रसः स शान्तः कथितो मुनीन्द्रैः
सर्व्वेषु भावेषु शमप्रधानः ॥"
इत्येवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात् । तत्र सञ्चार्य्यादीनामभावात् कथं रसत्वमित्युच्यते युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः रसतामेति तदस्मिन् सञ्चार्य्यादि स्थितिश्च न विरुद्धा । यच्चास्मिन् सुखाभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः । उक्तं हि ।
"यच्च कामसुखं लोके यच्च दिव्यं महासुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥
सर्व्वाकारमहङ्काररहितत्वं व्रजन्ति चेत् ।
अत्रान्तर्भावमर्हन्ति दयावीरादयस्तदा ॥"
आदिशब्दात् धर्म्मवीरदानवीरदेवताविषयरतिप्रभृतयः । तत्र देवताविषया रतिर्यथा —
"कदा वाराणस्यामिह सुरधुनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥"
इति साहित्यदर्पणे ३ परिच्छेदः ॥

शान्त, [म्] अ, वारणम् । इति मेदिनी ॥

शान्तनव, पुं, (शान्तनोरपत्यं पुमान् । शान्तनु + अण् ।) शान्तनुराजपुत्रः । भीष्मः । इति त्रिकाण्डशेषः ॥ (यथा, महाभारते । १ । ९९ । ६० ।
"तथा भीष्मः शान्तनवो गङ्गायाममितद्युतिः ।
वसुवीर्य्यात् समभवत् महावीर्य्यो महायशाः ॥")

शान्तनु, पुं, द्वापरयुगस्य चन्द्रवंशीयैकविंशराजः । स तु गङ्गायां भीष्मं जनयामास । तस्य पिता प्रतीपः । यथा —
"जयसेनस्तत्तनयो राधिकोऽतोऽयुतायुभूत् ।
ततश्चाक्रोधनस्तस्मात् देवातिथिरमुष्य च ।
ऋक्षस्तस्य दिलीपोऽभूत् प्रतीपस्तस्य चात्मजः ।
देवापिः शान्तनुस्तस्य वाह्लीक इति चात्मजाः ॥
यं यं कराभ्यां स्पृशति जीर्णं यौवनमेष्यति ।
शान्तिमाप्नोति चैवाग्र्यां कर्म्मणा तेन शान्तनुः ॥
वाह्लीकात् सोमदत्तोऽभूत् भूरिर्भूरिश्रवास्ततः ।
शलश्च शान्तनोरासीत् गङ्गायां भीष्म आत्मवान् ॥"
इति श्रीभागवते ९ स्कन्धे २२ अध्यायः ॥
तत्पर्य्यायः । महाभीष्मः २ । इति जटाधरः ॥ प्रातीपः ३ । इति त्रिकाण्डशेषः ॥ प्रतीपः ४ प्रतिपः ५ । इति शब्दरत्नावली ॥ (शन्तनुरिति पाठस्तु बहुभिरादृतः ।) कर्कटी । इति रत्नमाला ॥

शान्ता, स्त्री, दशरथराजकन्या । दशरथेन कन्येयं लोमपादाय राज्ञे प्रदत्ता । सा च ऋष्यशृङ्गभार्य्या । इति रामायणम् ॥ (यथा उत्तरचरिते १ अङ्के ।
"कन्यां दशरथो राजा शान्तां नाम व्यजीजनत् ।
अपत्यकृतिकां राज्ञे लोमपादाय यां ददौ ॥")
शमीभेदः । तत्पर्य्यायः । शुभा २ भद्रा ३ अपराजिता ४ जया ५ विजया ६ । अस्याः गुणाः शमीवत् । इति राजनिर्घण्टः ॥

शान्ति, स्त्री, (शम + क्तिन् ।) कामक्रोधादिप्रशमः । चित्तोपशमः । इति भरतः ॥ विघ्नेभ्य

इन्द्रियोपरमः। इति चण्डीटीकायां नागोजी-भट्टः॥ तत्पर्य्यायः। शमथः २ शमः ३। इत्यमरः॥ प्रशमः ४ उपशमः ५ प्रशान्तिः ६। इति शब्दरत्नावली॥ दमथः ७। इति हेमचन्द्रः॥ तत्र शमं यथा,—

"यत्किञ्चिद्वस्तु संप्राप्य स्वल्पं वा यदि वा बहु।
या तुष्टिर्जायते चित्ते शान्तिः सा गद्यते बुधैः॥"

इति पद्मपुराणे क्रियायोगसारे १५ अध्यायः॥ भद्रम्। इति हेमचन्द्रः॥ गोपीविशेषः। यथा,

राधिकोवाच।

"शान्त्या गोप्या युतस्त्वञ्च हरेऽहं रासमण्डले।
वसन्तपुष्पशय्यायां माल्यवान् चन्दनोक्षितः॥
रत्नप्रदीपैर्युक्तश्च रत्ननिर्माणमन्दिरे।
रत्नभूषितभूषाढ्यो रत्नभूषितया सह॥
तया दत्तञ्च ताम्बूलं भुक्तवांश्च पुरा विभो
मयो मच्छब्दमात्रेण तिरोधानं कृतं तया॥
शान्तिर्देहं परित्यज्य भयाल्लीना त्वयि प्रभो।
ततस्तस्याः शरीरञ्च गुणश्रेष्ठं बभूव ह॥
संविभज्य त्वया दत्तं प्रेमुणा प्रचुरता पुरा।
विश्वे विषयिणे किञ्चित् सत्त्वरूपाय विष्णवे॥
शुद्धसत्त्वस्वरूपायै महालक्ष्म्यै पुरा विभो।
त्वन्मन्त्रोपासकेभ्यश्च वैष्णवेभ्यश्च किञ्चन।
तपस्विभ्यश्च धर्म्माय धर्म्मिष्ठेभ्यश्च किञ्चन॥"

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ८ अध्यायः॥*॥ दुर्गा। यथा,—

"उत्पत्तिस्थितिनाशेषु रजआदित्रिगुणया मता।
सर्व्वथा सर्व्ववैकल्याच्छान्तित्वाच्छान्तिरुच्यते॥"

इति देवीपुराणे देवीनिरुक्ताध्यायः॥*॥ धर्म्मद्वारा ग्रहदौःस्थ्यदुःस्वप्नादिसूचितेष्टानिष्टदैवदुरितनिवृत्तिः। यथा,—

"यथा शस्त्रप्रहाराणां कवचं विनिवारकम्।
तथा दैवोपघातानां शान्तिर्भवति वारणम्॥"

कालप्रभूतग्रहनराधिपप्रबलतरशत्रुदुःखचरोगाभिभवाद्भुतदुःस्वप्नग्रहदौःस्थ्यादिनिमित्तकं शान्तिकर्म्मापि मलमासे कार्य्यम्। शुद्धकालप्रतीक्षायामवश्यहानेनानन्यगतिकत्वात्। अतएवाम्नानं सततं गोपायीत इति श्रुतौ सततमित्युक्तम्। इति मलमासतत्त्वम्॥*॥ उपसर्गशान्तिर्नाम्नी यथा,—

"एवमिन्द्रो महावीर्य्यस्त्रैलोक्यस्येश्वरोऽभवत्।
शतं क्रतूनामाहृत्य सुशान्तिर्नाम नामतः॥
तस्योपसर्गनाशाय नामाक्षरविभूषिता।
अद्यापि मानवैर्गाथा गीयते च महीतले॥
शान्तिर्देवराट् शान्तः सुशान्तिं न प्रयच्छति।
सहितः शिवसत्याद्यैस्तथैव वशवर्त्तिभिः॥"

इति मार्कण्डेयपुराणे उत्तममन्वन्तरसमाप्त्यध्यायः॥*॥

अथाद्भुतशान्तिः। तत्राद्भुतनिरूपणम्। अद्भुतसागरे आथर्व्वणाद्भुतवचनम्। प्रकृतिविरुद्धमद्भुतमापदः प्राकप्रबोधाय देवाः सृजन्तीति। तेनापज्ञानाय भूम्यादीनां पूर्व्वस्वभावप्रच्यवो देवकर्त्तृकोऽद्भुत इति। एवञ्च बुधोदयपर्य्यन्तञ्च ग्रहादीनां गणिताद्गणितत्वेन प्रकृतानामपि यदुत्पातत्वं तदद्भुतम्। तत्कारणञ्च गर्गसंहितावार्हस्पत्ययोः।

"अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्म्मतः।
नरापचारान्नियतमुपसर्गः प्रवर्त्तते॥
ततोऽपचारान्नियतमपवर्ज्जन्ति देवताः।
ताः सृजन्त्यद्भुतांस्तांस्तु दिव्यनाभसभूमिजान्॥
त एव त्रिविधा लोके उत्पाता देवनिर्म्मिताः।
विचरन्ति विनाशाय रूपैः सम्बोधयन्ति च॥"

तांश्च परं न दर्शयेदित्याह विष्णुः। नोत्पातं दर्शयेदिति। तत्र येनानर्थप्रसङ्गस्तन्निरूपणम्। यथा, दीपिकायाम्।

"प्राग्दिभिन्नतभांशेंदु निशोरसुतेषु सर्व्वेषु।
अनिलादिग्रहवशा भवन्त्यपतयः शुभाशुभेच॥"

येलामण्डलः।

"धर्म्मसृष्टादिचतुष्कचन्द्रतुरगादिष्विष्टु धातुभवेन्
दैवेज्यानविशाख्याभ्युगले पित्र्यद्वये चानलः।
चित्रादित्रयधाटमैत्रयुगलेष्विन्द्रो भवेन्मण्डलः
सर्पोपान्त्यशतान्त्यमूलयुगलेष्वाग्नेयपामीश्वरः॥
पवनदहनौ नेष्टौ योगस्तयोरतिदोषदः।
सुरपतिवरुणौ शस्तौ योगस्तयोरतिशोभनः॥
सवरुणमरुन्मिश्रः शक्रस्तथाग्निसमायुतः।
फलविरहितः सेन्द्रो वायुस्तथाग्नियुतोऽम्बुपः॥
वरुणवेलाद्भुतं पातं शान्तिर्देवताश्रया।
तथा शान्तिद्वयं कार्य्यं मण्डलद्वयजाद्भुते॥"*॥

विष्णुधर्म्मोत्तरे।

"ग्रहर्क्षवैकृतं दिव्यमान्तरीक्षं निबोध मे।
उल्कापातो दिशां दाहः परिवेषस्तथैव च॥
गन्धर्व्वनगरञ्चैव वृष्टिश्च विकृता तथा।
एवमादीनि लोकेऽस्मिन् नाभसानि विनिर्द्दिशेत्॥
चरस्थिरभवं भौमं भूकम्पमपि भूमिजम्।
जलाशयानां वैकृत्यं भौमं तदपि कीर्त्तितम्॥
भौमं चाल्पफलं ज्ञेयं चिरेण परिपच्यते।
नाभसं मध्यफलदं मध्यकालफलप्रदम्।
दिव्यं तीव्रफलं ज्ञेयं शीघ्रकारि तथैव च॥*॥
शीतोष्णानां विपर्य्यासः ऋतूनां रिपुजं भयम्।
पुष्पे फले च विकृते राज्ञो मृत्युं तथा दिशेत्॥
अकालप्रभवा नार्य्यः कालातीताः प्रजास्तथा।
विकृताः प्रसवाश्चैव युग्मप्रसवनं तथा॥
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा नराः।
पशवः पक्षिणश्चैव तथैव च सरीसृपाः॥
विनाशं तस्य देशस्य कुलस्य च विनिर्द्दिशेत्॥
प्रदोषे कुक्कुटारावो हेमन्ते चापि कोकिलाः।
अर्क्कोदयेऽर्क्काभिमुखः श्वारावो भयं दिशेत्॥
उलूको वसते यत्र निपतेद्वा तथा गृहे।
क्षयो गृहपतेर्मृत्युर्धननाशस्तथैव च॥
गृध्रः कङ्कः कपोतश्च उलूकः श्येन एव च।
चिल्लश्च चर्म्मचिल्लश्च भासः पाण्डर एव च॥
गृहे यस्य पतन्त्येते गेहं तस्य विपद्यते।
षण्मासाभ्यन्तरे वापि मृत्युः स्याद्गृहमेधिनः।
भार्य्या पुत्रस्य वा मृत्युर्द्रव्यं वापि विनश्यति॥
ब्राह्मणाय गृहं दद्यात् दद्यात् तन्मूल्यमेव वा।
गृह्णीयाद्यदि रोचेत शान्तिश्चेमां प्रयोजयेत्॥"

इमां वक्ष्यमाणाम्॥*॥

"मांसास्थीनि समादाय श्मशानाद्गृध्रवायसाः।
श्वा शृगालोऽथवा मध्ये पुरस्य प्रविशन्ति चेत्॥
विकिरन्ति गृहादौ च श्मशानं वा मही भवेत्।
चौरैश्च हन्यते लोकः परचक्रसमागमः॥
संग्रामश्च महाघोरो दुर्भिक्षं मरकं तथा।
अद्भुतानि प्रसूयन्ते तत्र देशस्य विद्रवः॥
अकाले फलपुष्पाणि देशविद्रवकारणम्॥"

मत्स्यपुराणे।

"अतिवृष्टिरनावृष्टिर्दुर्भिक्षादिभयं मतम्।
अनृतौ तु दिनादूर्द्ध्वं वृष्टिर्ज्ञेया भयाय च॥
निरभ्रे वाथ रात्रौ वा श्वेतं वस्योपरेच तु।
इन्द्रायुधं तथो दृष्ट्वा उल्कापातं तथैव च॥
दिग्दाहपरिवेषौ च गन्धर्व्वनगरं तथा।
परचक्रभयं विद्याद्देशोपद्रवमेव च॥"

भाषो वनकुक्कुटः॥*॥ कंसनिधनस्थाने हरिवंशः।

"वक्रमङ्गारकश्चक्रे चित्रायां घोरदर्शनः।
चलत्पर्व्वाणि मही गिरीणां शिखराणि च॥"

वाणोत्पाते स एव।

"दक्षिणां दिशमास्थाय धूमकेतुः स्थितोऽभवत्।
वक्रमङ्गारकश्चक्रे कृत्तिकासु भयङ्करः॥"*॥

ज्योतिश्चिन्तामणौ।

"त्यक्ताशौचविवेकतत्त्वमसृषा लोकाः क्षुधापीड़िताः
विप्रा वेदहतास्तथा प्रचलिता वक्काशिनो दुःखिताः।
क्षौणीमन्दफला नृपाश्च विकलाः संग्रामघोरा मही
प्रेताघातदुरन्तपीड़िततरा दैवज्ञराष्ट्रैर्युता॥
रक्ते शक्रोदयोगी मोचाखिवशादिभिर्नरकः।
धान्याहिरण्यत्वक्फलकुसुमाद्यै वर्षिते भयं विद्यात्।
अङ्गारपांशुवर्षे विनाशमुपयाति तन्नगरम्॥
उपलं विना जलधरैर्विकृता वा यदा प्राणिनो दृष्टाः।
छिद्रं वाप्यतिवृष्टं शस्यानामीतिसंजननम्॥"

बुधकौशिकसंवादे।

"वक्षाः प्रपाते च फलं शरटस्य प्ररोहणे।
शीर्षे राजश्रियोऽवाप्तिर्भाले चैश्वर्य्यमेव च॥
कर्णयोर्भूषणावाप्तिर्नेत्रयोर्बन्धुदर्शनम्।
नासिकायाश्च सौगन्ध्यं वक्त्रे मिष्टान्नभोजनम्॥
कण्ठे चैव श्रियोऽवाप्तिर्भुजयोर्विभवो भवेत्।
धनलाभो बाहुमूले करयोर्धनसंग्रहः॥
स्तनमूले च सौभाग्यं हृदि सौख्यविवर्द्धनम्।
पृष्ठे नित्यं महीलाभः पार्श्वयोर्बन्धुदर्शनम्॥
कटिद्वये वस्त्रलाभो गुह्ये मृत्युसमागमः।

"माया नारायणीशानी शारदेत्यम्बिकेति च ॥")

तस्या मूर्त्तिर्यथा,—

"शरत्काले पुरा यस्मात् नवम्यां बोधिता सुरैः ।
शारदा सा समाख्याता पीठे लोके च नामतः ॥"

इति तिथ्यादितत्त्वम् ॥

वीणाविशेषः । इति शब्दरत्नावली ॥ ब्राह्मी । सारिवा । इति राजनिर्घण्टः ॥

**शारदिकं**, क्ली, ( शरद् + "श्राद्धे शरदः ।" ४।३। १२। इति ठञ् । ) श्राद्धम् । इति सिद्धान्तकौमुदी ॥

**शारदिकः**, पुं, ( शरद् + "विभाषा रोगातपयोः ।" ४ । ३ । १३ । इति ठञ् । ) रोगः । आतपः । इति सिद्धान्तकौमुदी ॥

**शारदी**, स्त्री, ( शारद + ङीप् । ) तोयपिप्पली । सप्तपर्णः । इति मेदिनी ॥ कोजागरपूर्णिमा । इति शब्दरत्नावली ॥ शरत्कालीने, त्रि । यथा, स्कान्दभविष्ययोः ।

"शारदीचण्डिकापूजा त्रिविधा परिगीयते ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥
सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः ।
माहात्म्यं भगवत्याश्च पुराणादिषु कीर्त्तितम् ॥
पाठस्तस्य जपः प्रोक्तः पठेद्देवीमनाः प्रिये ।
राजसी बलिदानेन नैवेद्यैः सामिषैस्तथा ॥
सुरामांसाद्युपहारैर्जपयज्ञैर्विना तु या ।
विना मन्त्रैस्तामसी स्यात् किरातानाञ्च सम्मता ॥"

इति तिथ्यादितत्त्वम् ॥

( संवत्सरसम्बन्धिनी । यथा, ऋग्वेदे ।१।१३१।४।
"यदिन्द्र शारदीरवातिरः सा सद्यानी पयातिरः ।" )

**शारदीयमहापूजा**, स्त्री, (शारदीया महापूजा ।) शरत्कालीनदुर्गामहापूजा । यथा,—

"शारदीया महापूजा चतुःकर्म्ममयी शुभा ।
तां तिथित्रयमासाद्य कुर्य्यात् भक्त्या विधानतः ॥"

इति तिथ्यादितत्त्वम् ॥

अपि च ।

"हते घोरे महावीरे सुरासुरभयङ्करे ।
देवीमुपासका देवाः प्रसुता राघवास्तथा ॥
समेताः सर्व्वदेवास्ते देवीं भक्त्या तुतोषिरे ।
बलिश्च दत्तभूतानां महिषाजामिषेण च ॥
एवं तस्मिन् दिने वत्स प्रेतभूतसमाकुलम् ।
ततवान् सर्व्वदेवश्च पूजाञ्च शाश्वतीं महान् ॥
चलदान्तेऽश्विने मासि महिषारिनिवर्हिणीम् ।
देवीं संपूजयित्वा तु नरमीव्वहंरात्रिषु ॥
ये चालयन्ति सदा भक्त्या ते भवन्ति महाबलाः ।
बलिञ्च ये प्रयच्छन्ति सर्व्वभूतविनाशनम् ॥
तेषाञ्च तुष्यते देवी यावत् कल्पन्तु शाङ्करम् ।
क्रीडते विविधैर्भोगैर्देवलोके सुदुर्लभे ॥
यावद्भूर्व्वायुराकाशं जलं वह्निशशिग्रहाः ।
तावच्च चण्डिकापूजा भविष्यति सदा भुवि ॥
प्रावृट्काले विशेषेण आश्विने त्वष्टमीषु च ।
महाशब्दो नवम्याश्च लोके ख्यातिं गमिष्यति ॥

इन्द्र उवाच ।

आश्विने चासिते घोरे नवमी प्रतिपत्परम् ।
श्रोतुमिच्छाम्यहं तात उपवासव्रतादिकम् ॥
महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् ।
कर्त्तव्यं देवराजेन्द्र देवीभक्तिसमन्वितैः ॥
कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम् ।
अयाची त्वथ वैकाशी नक्ताशी चाथ वायुदः ॥
प्रातःस्नायी जितद्वन्द्वः त्रिकालं शिवपूजकः ।
जपहोमसमायुक्तः कन्यकां भोजयेत् सदा ॥
अष्टम्यां नवशेतान शावणानि शुभानि च ।
एवं वा पिष्टभागेन कारयेत् सुरसत्तम ॥
तस्मिन् देवी प्रकर्त्तव्या हैमी वा राजती च वा ।
स्फटाष्टौं जवलोपेता खड्गे शूलेऽथ पूजयेत ॥
सर्व्वोपहारसम्पन्नो वस्त्ररत्नफलादिभिः ।
कारयेद्धदोलादीन् पूजाञ्च वसिदैवकीम् ॥
पुष्पादिद्रोणविल्वाश्वजातीपुन्नागचम्पकैः ।
विचित्रां कारयेत् पूजां अष्टम्यामुपवासयेत् ॥
दुर्गाग्रतो जपेन्मन्त्रमेकाचित्तः शुभावितः ।
तदर्द्धयामिनीशेषे विजयार्थे नृपोत्तमैः ॥
पश्चाद्वर्षं लक्षणोपेतं गन्धधूपसमर्च्चितम् ।
विधिवत् कालि कालीति जप्त्वा खड्गेन घातयेत् ॥
तस्योत्थं रुधिरं मांसं गृहीत्वा पूतनादिषु ।
नैर्ऋताय प्रदातव्या महाकौशिकमन्त्रितम् ॥
तस्याग्रतो नृपः स्नायाच्छत्रं छत्वा तु पिष्टजम् ।
खड्गेन वासयित्वा तु दद्यात् स्कन्दविशाखयोः ॥"
ततो देवीं स्नापयेत् प्राज्ञः क्षीरसर्पिर्जलादिभिः ।
कुङ्कुमागुरुकर्पूरचन्दनैश्चारुधूपकैः ॥
हेमानि पुष्परत्नानि वासांसि स्वादुतानि च ।
निवेद्यं सुप्रभूतन्तु देयं देव्याः शुभावितैः ॥
अश्वमेधमवाप्नोति भक्तिमान सुरसत्तम ।
महानवम्यां पूजेयं सर्व्वकामप्रदायिका ॥
सर्व्वेषु सर्व्ववर्णेषु तव भक्त्या प्रकीर्त्तिता ।
कृत्वाप्नोति यशो राज्यं पुत्रायुर्धनसम्पदः ॥"

इति देवीपुराणे २६।३० अध्यायात् सङ्कलितं न तु सक्रमकम् ॥

**शारिः**, पुं, ( शॄ हिंसायाम् + इण् । ) अक्षोपकरणम् । पाशकादेर्वलम् । गुटिका । इति मेदिनी ॥ तत्पर्य्यायः । शारः २ खेलनी ३ । इति हेमचन्द्रः ॥

**शारिः**, स्त्री, ( शॄ + "अः शकुनौ ।" उणा० ४ । १२७ । इति इञ् । ) शकुनिकाभेदः । युद्धार्थगजपर्य्याणम् । व्यवहारान्तरम् । इति मेदिनी ॥ कपटः । इति धरणिः ॥

**शारिका**, स्त्री, ( शारिरेव । स्वार्थे कन् । ) पक्षिविशेषः । मयना इति भाषा । तत्पर्य्यायः । पीतपादा २ गोराटी ३ गोकिराटिका ४ । इति हेमचन्द्रः ॥ सारिका ५ शारी ६ चित्रलोचना ७ शारिः ८ । इति शब्दरत्नावली ॥ मदनशारिका ९ प्रपाठा १० । इति जटाधरः ॥ वीणादिवादनम् । तत्पर्य्यायः । कोणः १ । इति हेमचन्द्रः ॥

**शारिफलं**, क्ली पुं, (शारीणां खेलनीनां फलम् ।) शारिपट्टः । शारिखेलनाधारः । छक् इति भाषा । तत्पर्य्यायः । अष्टापदम् २ । इत्यमरः ॥ फलकः ३ । इति शब्दरत्नावली ॥ आकर्षः ४ शारिफलकः ५ विस्तृतङ्गः ६ यश्चकोष्ठी ७ । इति जटाधरः ॥

**शारिफलकः**, पुं क्ली, (शारीणां फलकः ।) शारिफलम् । इति जटाधरः ॥

**शारिवा**, स्त्री, श्यामलता । तत्पर्य्यायः । गोपी २ श्यामा ३ अनन्ता ४ उत्पलशारिवा ५ । इत्यमरः ॥ "एकं श्यामलतायाम् । नागजिह्वायामिति केचित् । गोप्यादित्रयं श्यामलतायां अनन्तादिद्वयं अनन्तमूले इति केचित् । गुपू रक्षणे शौर्य्यादित्वाद्ङीष् गोपा च ॥

'गोपीश्यामा गोपवती गोपा गोपालिकापि च ।'

इति वाचस्पतिः ।

'शटी वा शारिवायुक्तं सर्व्वत्रपित्तशोषणम् ।

इति वैद्यकम् ।" इति भरतः ॥

अस्या गुणः । धातुपित्तरक्तच्छर्द्दिज्वरनाशित्वम् । इति राजवल्लभः ॥

**शारिशृङ्खला**, स्त्री, ( शारीणां शृङ्खला यत्र । ) पाशकविशेषः । यथा,—

"धुन्धुरी तिन्तिड़ी द्यूतं पञ्चशी शारिशृङ्खला ।
नयपीठी पाशकाद्यो नयः स्यादक्षधूर्त्तकः ।
एते पाशकभेदाः स्युर्णयकोलाहलोऽपि च ॥"

इति शब्दरत्नावली ॥

**शारी**, स्त्री, ( शॄ + इञ् । वा ङीप् । ) कुशा । इति केचित् ॥ (शकुनिकाभेदः । यथा, आर्य्यासप्तशत्याम् । ६२३ ।

'सा विरहदहनदूना व्यस्ता व्यस्तापि जीवति वराकी ।
शारीव विततभयतरशकुनिगता मीलितास्येव ॥")

**शारीरं**, क्ली, वृषः । ( शरीरे भवः । शरीर + अण् । ) शरीरजाते, त्रि । इति मेदिनी ॥ शारीरदण्डो यथा,—

"दिग्दण्डं प्रथमं कुर्य्यात् वाग्दण्डं तदनन्तरम् ।
तृतीयं धनदण्डञ्च वधदण्डमतः परमिति ॥"

वधदण्डोऽपि शारीरो नाशस्यवतिरितानाम् । इति मिताक्षरायां व्यवहारकाण्डम् ॥ ० ॥

शारीरदुःखं यथा,—

"आध्यात्मिको वै द्विविधः शारीरो मानसस्तथा ।
शारीरो बहुभिर्भेदैर्भिद्यते श्रूयताञ्च सः ॥
शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः ।
गुल्मार्शश्वयथुश्वासच्छर्द्यादिभिरनेकधा ॥
तथाक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञकैः ।
भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ॥
कामक्रोधभयद्वेषलोभमोहविषादजः ।

प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा ॥
प्रतानवत्यः शाखासु सर्व्वसन्धिषु चाप्यथ ।
वृत्तास्तु कण्डराः सर्व्वा विज्ञेयाः कुशलैरिह ॥
आमपक्वाशयान्तेषु वस्तौ च शुषिराः खलु ।
पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ ॥
नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता ।
भारक्षमा भवेदप्सु नृयुक्ता सुसमाहिता ॥
एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः ।
स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः ॥
न ह्यस्थीनि न वा पेश्यो न शिरा न च सन्धयः ।
व्यापादितास्तथा हन्युर्यथा स्नायुः शरीरिणम् ॥
यः स्नायूः प्रविजानाति बाह्याश्चाभ्यन्तरा-
स्तथा ।
स गूढं शल्यमाहर्त्तुं देहाच्छक्नोति देहि-
नाम् ॥" * ॥

पञ्च पेशीशतानि भवन्ति तासां चत्वारि शतानि शाखासु। कोष्ठे षट्षष्टिः। ग्रीवां प्रत्यूर्द्ध्वञ्चतुस्त्रिंशत्। एकैकस्यान्तु पादाङ्गुल्यां तिस्रस्तिस्रस्ताः पञ्चदश। दश प्रपदे। पादोपरि कूर्च्चसन्निविष्टास्तावत्य एव। दश गुल्फतलयोः। गुल्फजान्वन्तरे विंशतिः। पञ्च जानुनि। विंशतिरूरौ दश वङ्क्षणे। शतमेवमेकस्मिन् सक्थ्नि भवन्ति। एते नेतरसक्थिबाहू च व्याख्यातौ। तिस्रः पायौ। एका मेढ्रे। सेवन्यां चापरा। द्वे वृषणयोः। स्फिचोः पञ्च पञ्च। द्वे वस्तिशिरसि। पञ्चोदरे। नाभ्यामेका। पृष्ठोर्द्ध्वसन्निविष्टाः पञ्च पञ्च दीर्घाः। षट् पार्श्वयोः। दश वक्षसि। अक्षकांसौ प्रति समन्तात् सप्त। द्वे हृदयामाशययोः। षट् यकृत्प्लीहोण्डुकेषु। ग्रीवायाञ्चतस्रः। अष्टौ हन्वोः। एकैका काकलकगलयोः। द्वे तालुनि। एका जिह्वायाम्। ओष्ठयोर्द्वे। घोणायां द्वे। द्वे नेत्रयोः। गण्डयोश्चतस्रः। कर्णयोर्द्वे। चतस्रो ललाटे। एका शिरसीत्येवमेतानि पञ्च पेशीशतानि ॥ * ॥

"सिरास्नाय्वस्थिपर्व्वाणि सन्धयश्च शरीरिणाम्।
पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः ॥"

स्त्रीणान्तु विंशतिरधिका। दश तासां स्तनयोरेकैकस्मिन्। पञ्च पञ्च यौवने तासां परिवृद्धिः। अपत्यपथे चतस्रस्तासां प्रसृतेऽभ्यन्तरतो द्वे मुखाश्रिते बाह्ये च प्रवृत्ते द्वे। गर्भच्छिद्रसंश्रितास्तिस्रः। शुक्रार्त्तवप्रवेशिन्यस्तिस्र एव। पित्तपक्वाशयमध्ये गर्भाशयो यत्र गर्भस्तिष्ठति। तासां बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशभावाः सन्ध्यस्थिसिरास्नायुप्रच्छादका यथादेशं स्वभावत एव भवन्ति ॥ * ॥ भवति चात्र।

"पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता लक्षणमुष्कजाः।
स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः ॥"

मर्म्मसिराधमनीस्रोतसामन्यत्र प्रविभागः ॥ * ॥

"शङ्खनाभ्याकृतिर्योनिः त्र्यावर्त्ता सा प्रकीर्त्तिता।
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ॥
यथा रोहितमत्स्यस्य मुखं भवति रूपतः।
तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः ॥
आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियाः।
स योनिं शिरसा याति स्वभावात् प्रसवं प्रति ॥
त्वक्पर्य्यन्तस्य देहस्य योऽयमङ्गविनिश्चयः।
शल्यज्ञानादृते नैष वर्ण्यतेऽङ्गेषु केषुचित् ॥
तस्मान्निःसंशयं ज्ञानं हर्त्रा शल्यस्य वाञ्छता।
शोधयित्वा मृतं सम्यग्द्रष्टव्योऽङ्गविनिश्चयः ॥
प्रत्यक्षतो हि यद्दृष्टं शास्त्रदृष्टञ्च यद्भवेत्।
समासतस्तदुभयं भूयो ज्ञानविवर्द्धनम् ॥

तस्मात् समस्तगात्रमविषोपहतं अदीर्घव्याधिपीडितमवर्षशतिकं निःसृष्टान्त्रपुरीषं पुरुषमवहन्त्यामापगायां निबद्धं पञ्जरस्थं मुञ्जवल्कलकुशशणादीनामन्यतमेनावेष्टिताङ्गं अप्रकाशे देशे कोथयेत्। सम्यक्प्रकुथितञ्चोद्धृत्य ततो देहं सप्तरात्राद्उशीरवालवेणुवल्कलकूर्च्चानामन्यतमेन शनैः शनैरवघर्षयंस्त्वगादीन् सर्व्वानेव बाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषा। श्लोकौ चात्र भवतः।

"न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः।
दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च ॥
शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः।
दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत् क्रियाः ॥"

षष्ठोऽध्यायः।

अथातः प्रत्येकमर्म्मनिर्देशं शारीरं व्याख्यास्यामः। सप्तोत्तरं मर्म्मशतम्। तानि मर्म्माणि पञ्चात्मकानि। तद्यथा। मांसमर्म्माणि। सिरामर्म्माणि स्नायुमर्म्माणि। अस्थिमर्म्माणि। सन्धिमर्म्माणि चेति। न खलु मांससिरास्नाय्वस्थिसन्धिव्यतिरेकेणान्यानि मर्म्माणि भवन्ति यस्मान्नोपलभ्यन्ते। तत्रैकादश मांसमर्म्माणि। एकचत्वारिंशत् सिरामर्म्माणि। सप्तविंशतिः स्नायुमर्म्माणि। अष्टावस्थिमर्म्माणि। विंशतिः सन्धिमर्म्माणि। तदेतत् सप्तोत्तरं मर्म्मशतम् ॥ * ॥ तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थिबाहू च व्याख्यातौ। उदरोरसोर्द्वादश। चतुर्द्दश पृष्ठे। ग्रीवां प्रत्यूर्द्ध्वं सप्तत्रिंशत्। तत्र सक्थिमर्म्माणि क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरोगुल्फेन्द्रवस्तिजान्वाण्यूर्व्वीलोहिताक्षाणि विटपञ्चेति। एतेनेतरसक्थि व्याख्यातम् ॥ * ॥ उदरोरसोस्तु। गुदवस्तिनाभिहृदयस्तनमूलस्तनरोहितापलापाव्यपस्तम्भौ चेति। पृष्ठमर्म्माणि तु कटीकतरुणकुकुन्दर-नितम्बपार्श्वसन्धिबृहत्यंसफलकान्यंसौ चेति। बाहुमर्म्माणि तु क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरोमणिबन्धेन्द्रवस्तिकूर्पराण्युर्व्वीलोहिताक्षाणि कक्षधरञ्चेति। एतेनेतरो बाहुर्व्याख्यातः। जत्रूर्द्ध्वं मर्म्माणि। चतस्रो धमन्योऽष्टौ मातृकाः। द्वे कृकाटिके। द्वे विधुरे। द्वौ फणौ। द्वावपाङ्गौ। द्वावावर्त्तौ। द्वावुत्क्षेपौ। द्वौ शङ्खावेका स्थपनी। पञ्च सीमन्ताः। चत्वारि शृङ्गाटकान्येकोऽधिपतिरिति। तत्र तलहृदयेन्द्रवस्तिगुदस्तनरोहितानि मांसमर्म्माणि। नीलधमनी-मातृकाशृङ्गाटकापाङ्गस्थपनीफणस्तनमूलापलापापस्तम्भहृदयनाभिपार्श्वसन्धिबृहतीलोहिताक्षोर्व्व्यः सिरामर्म्माणि। आणिविटपकक्षधरकूर्च्चकूर्च्चशिरोवस्तिक्षिप्रांसविधुरोत्क्षेपाः स्नायुमर्म्माणि। कटीकतरुणनितम्बांसफलकशङ्खास्त्वस्थिमर्म्माणि। जानुकूर्परसीमन्ताधिपतिगुल्फमणिबन्धकुकुन्दरावर्त्तकृकाटिकाश्चेति सन्धिमर्म्माणि। तान्येतानि पञ्चविकल्पानि मर्म्माणि भवन्ति। तद्यथा। सद्यःप्राणहराणि। कालान्तरप्राणहराणि। विशल्यघ्नानि। वैकल्यकराणि। रुजाकराणीति। तत्र सद्यःप्राणहराण्येकोनविंशतिः। कालान्तरप्राणहराणि त्रयस्त्रिंशत्। त्रीणि विशल्यघ्नानि। चतुश्चत्वारिंशद्वैकल्यकराणि। अष्टौ रुजाकराणीति ॥ * ॥ भवन्ति चात्र।

"शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरोगुदम्।
हृदयं वस्तिनाभी च घ्नन्ति सद्यो हतानि तु ॥
वक्षोमर्म्माणि सीमन्ततलक्षिप्रेन्द्रवस्तयः।
कटीकतरुणे सन्धी पार्श्वजौ बृहती च या ॥
नितम्बाविति चैतानि कालान्तरहराणि तु।
उत्क्षेपौ स्थपनी चैव विशल्यघ्नानि निर्द्दिशेत् ॥
लोहिताक्षाणि जान्वूर्व्वीकूर्च्चा विटपकूर्पराः।
कुकुन्दरे कक्षधरे विधुरे सकृकाटिके ॥
अंसांसफलकापाङ्गा नीले मन्ये फणौ तथा।
वैकल्यकरणान्याहुरावर्त्तौ द्वौ तथैव च ॥
गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्च्चशिरांसि च।
रुजाकराणि जानीयादष्टावेतानि बुद्धिमान्।
क्षिप्राणि विद्धमात्राणि घ्नन्ति कालान्तरेण च ॥"

मर्म्माणि नाम मांससिरास्नाय्वस्थिसन्धिसन्निपातास्तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति। तस्मान्मर्म्मस्वभिहतास्तांस्तान् भावानापद्यन्ते। तत्र सद्यःप्राणहराण्याग्नेयानि अग्निगुणेष्वाशु क्षीणेषु घ्नन्ति। कालान्तरप्राणहराणि सौम्याग्नेयानि अग्निगुणेष्वाशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण घ्नन्ति। विशल्यप्राणहराणि वायव्यानि शल्यमुखनिरुद्धो यावदन्तर्व्वायुस्तिष्ठति तावज्जीवत्युद्धृतमात्रे तु शल्ये मर्म्मस्थानाश्रितो वायुर्निष्क्रामति तस्मात् सशल्यो जीवत्युद्धृतशल्यो म्रियते। वैकल्यकराणि सौम्यानि सोमो हि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति। रुजाकराण्यग्निवायुगुणभूयिष्ठानि विशेषतश्च तौ रुजाकरौ। पाञ्चभौतिकीञ्च रुजामाहुरेके। केचिदाहुर्म्मांसादीनां पञ्चानामपि समस्तानां विरुद्धानाञ्च समवायात् सद्यःप्राणहराणि। एकहीनानामल्पानां वा कालान्तरप्राणहराणि। द्विहीनानां विशल्यप्राणहराणि। त्रिहीनानां वैकल्यकराणि। एकस्मिन्नेव रुजाकराणीति। यतश्चैव मतोऽस्थिमर्म्मस्वप्यभिहतेषु शोणितागमनं भवति ॥ * ॥

मर्म्माभिघातस्तु न कश्चिदस्ति
योऽल्पात्ययो वापि निरत्ययो वा।
प्रायेण मर्म्मस्वभिताड़ितास्तु
वैकल्यमृच्छन्त्यथवा म्रियन्ते॥
मर्म्माण्यधिष्ठाय हि ये विकारा
मूर्च्छन्ति काये विविधा नराणाम्।
प्रायेण ते कृच्छ्रतमा भवन्ति
नरस्य यत्नैरपि साध्यमानाः॥"४॥

सप्तमोऽध्यायः।

अथातः सिरावर्णनविभक्तिनाम शारीरं व्याख्यास्यामः। सप्त सिराशतानि भवन्ति। याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव च कुल्याभिरुपस्निह्यते अनुगृह्यते चाकुञ्चनप्रसारणादिभिर्व्विशेषैः। द्रुमपत्रसेवनीनामिव च तासां प्रतानाः तासां नाभिर्म्मूलं ततश्च प्रसरन्त्यूर्द्धमधस्तिर्य्यक् च॥३॥ भवतश्चात्र।

"यावत्यस्तु सिराः काये सम्भवन्ति शरीरिणाम्।
नाभ्यां सर्व्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः॥
नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता।
सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः॥"

तासां मूलसिराश्चत्वारिंशत्। तासां वातवाहिन्यो दश। पित्तवाहिन्यो दश। कफवाहिन्यो दश। दश रक्तवाहिन्यः। तासान्तु वातवाहिनीनां वातस्थानगतानां पञ्चसप्ततिशतं भवति। तावत्य एव पित्तवाहिन्यः। पित्तस्थाने कफवाहिन्यश्च। कफस्थाने रक्तवाहिन्यश्च। यकृत्प्लीह्नोरेवमेतानि सप्तसिराशतानि। तत्र वातवाहिन्यः सिरा एकस्मिन् सक्थ्नि पञ्चविंशतिः। एतेनेतरसक्थिबाहू च व्याख्यातौ। विशेषतस्तु कोष्ठे चतुस्त्रिंशत्तासां गुदमेढ्राश्रिताः। श्रोण्यामष्टौ। द्वे द्वे पार्श्वयोः। षट् पृष्ठे। तावत्य एव चोदरे। दश वक्षसि। एकचत्वारिंशज्जत्रुण ऊर्द्धम्। तासां चतुर्दश ग्रीवायाम्। कर्णयोश्चतस्रः। नव जिह्वायाम्। षट् नासिकायाम्। अष्टौ नेत्रयोः। एवमेतत् पञ्चसप्तत्यधिकशतं वातवहानां सिराणां व्याख्यातम्। एष एव विभागः शेषाणामपि। विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश। कर्णयोर्द्वे। एवं रक्तवहा कफवहाश्च। एवमेतानि सप्त सिराशतानि सविभागानि व्याख्यातानि॥५॥ भवन्ति चात्र।

"क्रियाणामप्रतीघातममोहं बुद्धिकर्म्मणाम्।
करोत्यन्यान् गुणांश्चापि स्वाः सिराः पवनश्चरन्॥
यदा तु कुपितो वायुः स्वाः सिराः प्रतिपद्यते।
तदास्य विविधा रोगा जायन्ते वातसम्भवाः॥
भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम्।
संसर्पत् स्वाः सिराः पित्तं कुर्य्याच्चान्यान् गुणानपि॥
यदा प्रकुपितं पित्तं सेवते स्ववहाः सिराः।
तदास्य विविधा रोगा जायन्ते पित्तसम्भवाः॥
स्नेहमङ्गेषु सन्धीनां स्थैर्य्यं बलमुदीर्णताम्।
करोत्यन्यान् गुणांश्चापि बलासः स्वाः सिराश्चरन्॥
यदा तु कुपितः श्लेष्मा स्वाः सिराः प्रतिपद्यते।
तदास्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः॥
धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम्।
स्वाः सिराः सञ्चरद्रक्तं कुर्य्याच्चान्यान् गुणानपि॥
यदा तु कुपितं रक्तं सेवते स्ववहाः सिराः।
तदास्य विविधा रोगा जायन्ते रक्तसम्भवाः॥
न हि वातं सिराः काश्चिन्न पित्तं केवलं तथा।
श्लेष्माणं वा वहन्त्येता अतः सर्व्ववहाः स्मृताः॥
प्रदुष्टानां हि दोषाणामुच्छ्रितानां प्रधावताम्।
ध्रुवमुन्मार्गगमनमतः सर्व्ववहाः स्मृताः॥
तत्रारुणा वातवहाः पूर्य्यन्ते वायुना सिराः।
पित्तादुष्णाश्च नीलाश्च शीता गौर्य्यः स्थिराः कफात्।
असृग्वहास्तु रोहिण्यः सिरा नात्युष्णशीतलाः॥
अत ऊर्द्धं प्रवक्ष्यामि न विध्येद्याः सिरा भिषक्।
वैकल्यं मरणञ्चापि व्यधात्तासां ध्रुवं भवेत्॥
सिराशतानि चत्वारि विद्याच्छाखासु बुद्धिमान्।
षट्त्रिंशच्च शतं कोष्ठे चतुःषष्टिञ्च मूर्द्धनि॥
शाखासु षोड़श सिराः कोष्ठे द्वात्रिंशदेव तु।
पञ्चाशज्जत्रुणश्चोर्द्ध्वमवेध्याः परिकीर्त्तिताः॥"

तत्र सिराशतमेकैकस्मिन् सक्थ्नि भवति तासां जालधरा त्वेका तिस्रश्चाभ्यन्तराः। तत्रोर्व्वीसंज्ञे द्वे लोहिताक्षसंज्ञा चैकैकेताश्चावेध्याः। एतेनेतरसक्थिबाहू च व्याख्यातावेवमशस्त्रकृत्याः षोड़श शाखासु। द्वात्रिंशत् श्रोण्यां तासामष्टावशस्त्रकृत्याः। द्वे द्वे विटपयोः कटीकतरुणयोश्च। अष्टावष्टावेकैकस्मिन् पार्श्वे तासामेकैकामूर्द्ध्वगां परिहरेत्। पार्श्वसन्धिगते च द्वे। चतस्रो विंशतिश्च पृष्ठवंशमुभयतस्तासामूर्द्ध्वगामिन्यौ द्वे द्वे परिहरेद्बृहती सिरे। तावत्य एवोदरे तासां मेढ्रोपरि रोमराजीमुभयतो द्वे द्वे परिहरेत्। चत्वारिंशद्वक्षसि तासां चतुर्द्दशाशस्त्रकृत्या। हृदये द्वे द्वे। द्वे स्तनमूले। स्तनरोहितापलापस्तम्भयोरुभयतोऽष्टौ। एवं द्वात्रिंशदशस्त्रकृत्याः पृष्ठोदरोरःसु भवन्ति। चतुःषष्टिशिराशतं जत्रुण ऊर्द्ध्वं भवति तत्र षट्पञ्चाशच्छिरोधरायां तासामष्टौ चतस्रश्च मर्म्मसंज्ञाः परिहरेत्। द्वे कृकाटिकयोः। द्वे विधुरयोः। एवं ग्रीवायां षोड़शावध्याः। हन्वोरुभयतोऽष्टावष्टौ तासान्तु सन्धिधमन्यौ द्वे द्वे परिहरेत्। षट्त्रिंशज्जिह्वायां तासामधः षोड़शाशस्त्रकृत्याः रसवहे द्वे वाग्वहे च द्वे। द्विर्द्वादश नासायां तासामौपनासिक्यश्चतस्रः परिहरेत्। तासामेव च तालुन्येकां मृदावुद्देशे। अष्टात्रिंशदुभयोर्नेत्रयोस्तासामेकैकामपाङ्गयोः परिहरेत्। कर्णयोर्दश तासां शब्दवाहिनीनामेकैकां परिहरेत्। नासानेत्रगतास्तु ललाटे षष्टिस्तासां केशान्तानुगताश्चतस्रः। आवर्त्तयोरेकैका स्थपन्याञ्चैका परिहर्त्तव्या। शङ्खयोर्दश तासां शङ्खसन्धिगतामेकैकां परिहरेत्। द्वादश मूर्द्धिन तासामुत्क्षेपयोर्द्वे परिहरेत्। सीमन्तेष्वेकैकामधिपतावेकामिति। एवमशस्त्रकृत्याः पञ्चाशज्जत्रुण ऊर्द्ध्वमिति। भवति चात्र।

"व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः सिराः।
प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम्॥"

अष्टमोऽध्यायः।

अथातः सिराव्यधविधिशारीरं व्याख्यास्यामः। बालस्थविररूक्षक्षतक्षीणभीरुपरिश्रान्तक्षीममद्याध्वकर्षितमत्तवान्तविरिक्तास्थापितानुवासितजागरितक्लीवकृशगर्भिणीनां कासश्वासशोषप्रवृद्धज्वराक्षेपकपक्षाघातोपवासपिपासामूर्च्छाप्रपीड़ितानाञ्च सिरां न विध्येत्। याश्चाव्यध्या व्यध्याश्चादृष्टा दृष्टाश्चायन्त्रिता यन्त्रिताश्चानुत्थिता इति। शोणितावसेकसाध्याश्च विकाराः प्रागभिहितास्तेषु चापक्वेष्वन्येषु चानुक्तेषु यथाभ्यासं यथान्यायञ्च सिरां विध्येत्। प्रतिषिद्धानामपि च विषोपसर्गे आत्ययिकेषु सिराव्यधनमप्रतिषिद्धम्। तत्र स्निग्धस्विन्नमातुरं यथादोषप्रत्यनीकमद्रवप्रायमन्नं भुक्तवन्तं यवागूं पीतवन्तं वा यथाकालमुपस्थाप्यासीनं स्थितं वा प्राणानबाधमानो वस्त्रपट्टचर्म्मान्तर्व्वल्कलतानामन्यतमेन यन्त्रयित्वा नातिगाढ़ं नातिशिथिलं शरीरप्रदेशमासाद्य यथोक्तं शस्त्रं गृहीत्वा सिरां विध्येत्॥६॥

"नैवातिशीते नात्युष्णे न प्रवाते न चाभ्रिते।
सिराणां व्यधनं कार्य्यमरोगे वा कदाचन॥"

तत्र व्यध्यसिरं पुरुषं प्रत्यादित्यमुखमरत्निमात्रोच्छ्रिते उपवेश्यासने सक्थ्नोराकुञ्चितयोर्निवेश्य कूर्परसन्धिद्वयस्योपरि हस्तावन्तर्गताङ्गुष्ठकृतमुष्टी मन्ययोः स्थापयित्वा यन्त्रशाटकं ग्रीवामुष्ट्योरुपरि परिक्षिप्यान्येन पुरुषेण पश्चात् स्थितेन वामहस्तेनोत्तानेन शाटकान्तद्वयं ग्राहयित्वा ततो वैद्यो ब्रूयाद्दक्षिणहस्तेन सिरोत्थापनार्थं नात्यायतशिथिलं यन्त्रमावेष्टयत्वत्र कृतावगाढं यन्त्रं पृष्ठमध्ये च पीड़येदिति कर्म्म पुरुषञ्च वायुपूर्णमुखं स्थापयेदेष उत्तमाङ्गगतानामन्तर्म्मुखवर्ज्यानां सिराणां व्यधने यन्त्रणविधिः। तत्र, पादव्यध्यसिरस्य पादं समे स्थाने सुस्थिरं स्थापयित्वान्यं पादमीषत्सङ्कुचितमुच्चैः कृत्वा व्यध्यपादं जानुसन्धेरधः शाटकेनावेष्ट्य हस्ताभ्यां प्रपीड्य गुल्फं व्यध्यप्रदेशस्योपरि चतुरङ्गुलं प्लोतादीनामन्यतमेन बद्ध्वा पादसिरां विध्येत्। अथोपरिष्टाद्धस्तौ गूढ़ाङ्गुष्ठकृतमुष्टी सम्यगासनं स्थापयित्वा सुखोपविष्टस्य पूर्व्ववद्यन्त्रं बद्ध्वा हस्तसिरां विध्येत्। गृध्रसीविश्वाच्योः सङ्कुचितजानुकूर्परः स्यात्। श्रोणीपृष्ठस्कन्धेषून्नामितपृष्ठस्यावाक्शिरस्कस्य उपविष्टस्य विस्फूर्जितपृष्ठस्य विध्येत्। उदरोरसोः प्रसारितोरस्कस्योन्नमितशिरस्कस्य

तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवीर्य्याण्यन्तः शरीरमभिपद्यन्ते त्वचि विपक्कानि। तैरेव स्पर्शंसुखमसुखं वा गृह्णाति। तास्त्वेताश्चतस्रो धमन्यः सर्व्वाङ्गगताः सविभागा व्याख्याताः। भवतश्चात्र।

"यथा स्वभावतः खानि मृणालेषु बिसेषु च।
धमनीनां तथा खानि रसो यैरुपचीयते॥

पञ्चाभिभूतास्त्वथ पञ्चकृत्वः
पञ्चेन्द्रियं पञ्चसु भावयन्ति।
पञ्चेन्द्रियं पञ्चसु भावयित्वा
पञ्चत्वमायान्ति विनाशकाले॥"९॥

अत ऊर्द्ध्वं स्रोतसां मूलविद्धलक्षणमुपदेक्ष्यामः। तानि तु प्राणान्नोदकरसरक्तमांसमेदोमूत्रपुरीषशुक्रार्त्तववहानि येष्वधिकार, एतेषां बहूनि। एतेषां विशेषा बहवः। तत्र प्राणवहे द्वे तयोर्म्मूलं हृदयं रसवाहिन्यश्च धमन्यः। तत्र विद्धस्य क्रोशनविनमनमोहनभ्रमणवेपनानि मरणं वा भवति। अन्नवहे द्वे तयोर्म्मूलमामाशयोऽन्नवाहिन्यश्च धमन्यस्तत्र विद्धस्याध्मानं शूलान्नद्वेषौ छर्द्दिः पिपासान्ध्यं मरणं वा। उदकवहे द्वे तयोर्म्मूलं तालुक्लोम च। तत्र विद्धस्य पिपासा सद्योमरणञ्च। रसवहे द्वे तयोर्म्मूलं हृदयं रसवाहिन्यश्च धमन्यस्तत्र विद्धस्य शोषः प्राणवहविद्धवच्च मरणं तल्लिङ्गानि च। रक्तवहे द्वे तयोर्म्मूलं यकृत्प्लीहानौ रक्तवाहिन्यश्च धमन्यस्तत्र विद्धस्य श्यावाङ्गता ज्वरो दाहः पाण्डुता शोणितातिगमनं रक्तनेत्रता चेति। मांसवहे द्वे तयोर्म्मूलं स्नायुत्वचं रक्तवहाश्च धमन्यस्तत्र विद्धस्य श्वयथुर्मांसशोषः सिराग्रन्थयो मरणम्। मेदोवहे द्वे तयोर्म्मूलं कटीवृक्कौ च तत्र विद्धस्य स्वेदागमनं स्निग्धाङ्गता तालुशोषः स्थूलशोफता पिपासा च। मूत्रवहे द्वे तयोर्म्मूलं वस्तिर्मेढ्रञ्च तत्र विद्धस्यानद्धवस्तिता मूत्रनिरोधः स्तब्धमेढ्रता च। पुरीषवहे द्वे तयोर्म्मूलं पक्वाशयो गुदश्च तत्र विद्धस्यानाहो दुर्गन्धता ग्रथितान्त्रता च। शुक्रवहे द्वे तयोर्म्मूलं स्तनौ वृषणौ च तत्र विद्धस्य क्लीवता चिरात् प्रसेको रक्तशुक्रता च। आर्त्तववहे द्वे तयोर्म्मूलं गर्भाशयः आर्त्तववाहिन्यश्च धमन्यस्तत्र विद्धायां वन्ध्यात्वं मैथुनासहिष्णुत्वमार्त्तवनाशश्च। सेवनीच्छेदाद्रुजाप्रादुर्भावः। वस्तिगुदविद्धलक्षणं प्रागुक्तमिति। स्रोतोविद्धन्तु प्रत्याख्यायोपचरेदुद्धृतशल्यन्तु क्षतविधानेनोपचरेत्।

"मूलात् खादन्तरं देहे प्रसृतन्त्वभिवाहि यत्।
स्रोतस्तदिति विज्ञेयं सिराधमनिवर्ज्जितम्॥"१३॥

दशमोऽध्यायः।

अथातो गर्भिणीव्याकरणं शारीरं व्याख्यास्यामः। गर्भिणी प्रथमदिवसात् प्रभृति नित्यं प्रहृष्टा शुच्यलङ्कृता शुक्लवसना शान्तिमङ्गलदेवताब्राह्मणगुरुपरा च भवेन्मलिनविकृतहीनगात्राणि न स्पृशेद्दुर्गन्धदुर्दर्शनानि परिहरेदुद्वेजनीयाश्च कथाः शुष्कं पर्य्युषितं क्कथितं क्लिन्नं चान्नं नोपभुञ्जीत। बहिर्निष्क्रमणं शून्यागारचैत्यश्मशानवृक्षाश्रयान् क्रोधभयसङ्कटांश्च भारानुच्चैर्भाष्यादिकं परिहरेद्यानि च गर्भं व्यापादयन्ति। न चाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि निषेवेत। न चायासयेच्छरीरं पूर्व्वोक्तानि च परिहरेत्। शयनासनं मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसम्बाधं विदध्यात्। हृद्यं द्रवं मधुरप्रायं स्निग्धं दीपनीयसंस्कृतञ्च भोजनं भोजयेत् सामान्यमेतदाप्रसवात्॥३॥ विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमुपसेवेत। विशेषतस्तु तृतीये षष्टिकौदनं पयसा भोजयेच्चतुर्थे दध्ना पञ्चमे पयसा षष्ठे सर्पिषा चेत्येके। चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांससहितं हृद्यमन्नं भोजयेत्। पञ्चमे क्षीरसर्पिःसंसृष्टम्। षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषो मात्रां पाययेद्यवागूं वा। सप्तमे सर्पिः पृथक्पर्ण्यादिसिद्धमेवमाप्यायते गर्भः। अष्टमे बदरोदकेन बलातिबलाशतपुष्पपललपयोदधिमस्तुतैललवणमदनफलमधुघृतमिश्रेणास्थापयेत्। पुराणपुरीषशुद्ध्यर्थमनुलोमनार्थञ्च वायोः। ततः पयोमधुरकषायसिद्धेन तैलेनानुवासयेदनुलोमे हि वायौ सुखं प्रसूयते निरुपद्रवा च भवति। अत ऊर्द्ध्वं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चोपक्रमेदाप्रसवकालादेवमुपक्रान्ता स्निग्धा बलवती सुखमनुपद्रवा प्रसूयते। नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ततिथ्यादौ। तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु बिल्वन्यग्रोधतिन्दुकभल्लातकनिर्म्मितं सर्व्वागारं यथासंख्यं तन्मयपर्य्यङ्कमुपलिप्तभित्तिं सुविभक्तपरिच्छदं प्राग्द्वारमुदग्द्वारं दक्षिणद्वारं वाष्टहस्तायतं चतुर्हस्तविस्तृतं रक्षामङ्गलसम्पन्नं विधेयम्॥७॥

"जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने।
सशूले जघने नारी ज्ञेया सा तु प्रजायिनी॥"

तत्रोपस्थितप्रसवायाः कटीपृष्ठं प्रति समन्ततो वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्म्मूत्रं प्रसिच्यते योनिमुखात् श्लेष्मा च। प्रजनयिष्यमाणां कृतमङ्गलस्वस्तिवाचनां कुमारपरिवृतां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तामथैनां सम्भृतां यवागूमाकण्ठात् पाययेत्। ततः कृतोपधाने मृदुविस्तीर्णे शयने स्थितामाभुग्नसक्थीमुत्तानामशङ्कनीयाश्चतस्रः स्त्रियः परिणतवयसः प्रजननकुशलाः कर्त्तितनखाः परिचरेयुरिति॥८॥ अथास्या विशिखान्तरमनुलोममनुसुखमभ्यज्यात् तथाचैनामेका सुभगे प्रवाहस्वेति न चाप्राप्तावी प्रवाहस्व विशिखान्तरमपत्यमार्गम्। ततो विमुक्ते गर्भनाडीप्रबन्धे सशूलेषु श्रोणिवङ्क्षणवस्तिशिरःसु प्रवाहेथाः शनैः शनैः। ततो गर्भनिर्गमे प्रगाढं ततो गर्भे योनिमुखं प्रपन्ने गाढतरमाविशल्यभावात्॥१०॥ अकालप्रवाहणात् बधिरं मूकं व्यस्तहनुं मूर्द्धाभिघातिनं कासश्वासशोषोपद्रुतं कुब्जं विकटं वा जनयति। तत्र प्रतिलोममनुलोमयेत्। गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्म्मोकेण पिण्डीतकेन वा। बध्नीयाद्धिरण्यपुष्पीमूलं हस्तपादयोर्धारयेत् सुवर्च्चलां विशल्यां वा॥११॥ अथ जातस्योल्वं मुखञ्च सैन्धवसर्पिषा विशोध्य घृताक्तं मूर्द्ध्नि पिचुं दद्यात् ततो नाभिनाडीमष्टाङ्गुलमायम्य सूत्रेण बद्ध्वा छेदयेत् तत्सूत्रैकदेशञ्च कुमारस्य ग्रीवायां सम्यग्बध्नीयात्॥१२॥ अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्म्मणि कृते मधुसर्पिरनन्ताब्राह्मीरसेन सुवर्णचूर्णमङ्गुल्यानामिकया लेहयेत्ततो बलातैलेनाभ्यज्य क्षीरवृक्षकषायेण सर्व्वगन्धोदकेन वा रूप्यहेमप्रतप्तेन वा वारिणा स्नापयेदेनं कपित्थपत्रकषायेण वा कोष्णेन यथाकालं यथादोषं यथाविभवं च।

"धमनीनां हृदिस्थानां विवृतत्वादनन्तरम्।
चतूरात्रात्त्रिरात्राद्वा स्त्रीणां स्तन्यं प्रवर्त्तते॥"

तस्मात् प्रथमेऽह्नि मधुसर्पिरनन्तामिश्रं मन्त्रपूतं त्रिकालं पाययेद्द्वितीये लक्ष्मणासिद्धं सर्पिस्तृतीये च। ततः प्राङ्निवारितस्तन्यं मधुसर्पिः स्वपाणितलसम्मितं द्विकालं पाययेत्॥१५॥ अथ सूतिकां बलातैलाभ्यक्तां वातहरौषधनिःक्वाथेनोपचरेत् सशेषदोषान्तु तदहः पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेरचव्यचूर्णं गुडोदकेनोष्णेन पाययेत्। एवं द्विरात्रं त्रिरात्रं वा कुर्य्यादादुष्टशोणितात्। विशुद्धे ततो विदारिगन्धादिसिद्धां स्नेहयवागूं क्षीरयवागूं वा पाययेत् त्रिरात्रम्। ततो यवकोलकुलत्थसिद्धेन जाङ्गलरसेन शाल्योदनं भोजयेद्बलमग्निबलञ्चावेक्ष्य। अनेन विधिना अध्यर्द्धमासमुपसंस्कृता विमुक्ताहाराचारा विगतसूतिकाभिधाना स्यात्। पुनरार्त्तवदर्शनादित्येके। धन्वभूमिजातां सूतिकां घृततैलयोरन्यतरस्य मात्रां पाययेत्। पिप्पल्यादिकषायानुपाना स्नेहनित्या च स्यात्त्रिरात्रं पञ्चरात्रं वा बलवती। अबलां यवागूं पाययेत्त्रिरात्रं पञ्चरात्रं वा। अत ऊर्द्ध्वं स्निग्धेनान्नसंसर्गेणोपचरेत्। प्रायशश्चैनां प्रभूतेनोष्णोदकेन परिषिञ्चेत्। क्रोधायासमैथुनादीन् परिहरेत्॥१७॥ भवतश्चात्र।

"मिथ्याचारात् सूतिकाया यो व्याधिरुपजायते।
स कृच्छ्रसाध्योऽसाध्यो वा भवेदत्यपतर्पणात्॥
तस्मात्तां देशकालौ च व्याधिसात्म्येन कर्म्मणा।
परीक्ष्योपचरेदेवं नैयमत्ययमाप्नुयात्॥"१८॥

जरायुपातनप्रधानाध्मानौ कुरुते तस्मात् कण्ठमस्याः केशवेष्टितयाङ्गुल्या प्रमृजेत्। कटुकालाबुकृतवेधनसर्षपसर्पनिर्म्मोकैर्वा कटुतैलविमिश्रैर्योनिमुखं धूपयेत्। लाङ्गलीमूलकल्केन वास्याः पाणिपादतलमालिम्पेत्। मूर्द्ध्नि वास्या

शारीरं
शारीरं

भद्रदारुचीरमनुपिबेत्। कुष्ठलाङ्गलीमूलकल्कं वा मद्यमूत्रयोरन्यतरेण पाययेत्। शालिमूलकल्कं वा पिप्पल्यादिं वा मद्येन सिद्धार्थककुष्ठलाङ्गलीभद्रदारुचीरमिश्रेण सुरामण्डेन वा स्नापयेत्। एतैरेव सिद्धेन सिद्धार्थकतैलेनोत्तरवस्तिं दद्यात्। स्निग्धेन वा कल्कनखेन हस्तेनापहरेत्। प्रजातायाश्च नार्या रूक्षशरीरायास्तीक्ष्णैरविशोधितं रक्तं वायुना तद्देशगेनातिसंरुद्धं नाभेरधः पार्श्वयोर्बस्तौ वा बस्तिशिरसि वा ग्रन्थिं करोति। ततश्च नाभिबस्त्युदरशूलानि भवन्ति। सूचीभिरिव निस्तुद्यते भिद्यते दीर्य्यत इव च पक्वाशयः। समन्तादाध्मानमुदरे मूत्रसङ्गश्च भवतीति मक्कल्लक्षणम्। तत्र वीरतर्व्वादिसिद्धं जलमूषकादिप्रतीवापं पाययेत्। यवक्षारचूर्णं वा सर्पिषा सुखोदकेन वा लवणचूर्णं वा पिप्पल्यादिकषायेण पिप्पल्यादिचूर्णं वा सुरामण्डेन वरुणाद्यरिष्टं वा पञ्चकोलैलाप्रतीवापं पृथक् पर्ण्यादिकषायं वा भद्रदार्वमरिचसंसृष्टं पुराणगुडं वा त्रिकटुकचतुर्जातककुस्तुम्बुरुमिश्रं खादेदच्छं वा पिबेदरिष्टमिति ॥ ॥ अथ बालं क्षौमपरिवृतं क्षौमवस्त्रास्तृतायां शय्यायां शाययेत्। पीलुबदरीनिम्बपरूषकशाखाभिश्चैनं वीजयेत्। मूर्ध्नि चास्याहरहस्तैलपिचुमवचारयेत् धूपयेच्चैनं रक्षोघ्नैर्धूपैः। रक्षोघ्नानि चास्य पाणिपाददशिरोग्रीवास्ववसृजेत्। तिलातसीसर्षपकणांश्चात्र प्रकिरेत्। अधिष्ठाने चाग्निं प्रज्वालयेत्। व्रणितोपासनीयं चावेक्षेत। ततो दशमेऽहनि मातापितरौ कृतमङ्गलकौतुकौ स्वस्तिवाचनं कृत्वा नाम कुर्यातां यदभिप्रेतं नक्षत्रनाम वा ॥ ॥ ततो यथावर्णं धात्रीमुपेयान्मध्यमप्रमाणां मध्यमवयसमरोगां शीलवतीमचपलामलोलुपामकृशामस्थूलां प्रसन्नक्षीरामलम्बौष्ठीमलम्बोर्ध्वस्तनीमव्यङ्गामव्यसनिनीं जीवद्वत्सां दोग्ध्रीं वत्सलामक्षुद्रकर्मिणीं कुले जातामतो भूयिष्ठैश्च गुणैरन्वितां श्यामामारोग्यबलवृद्धये बालस्य। तत्रोर्ध्वस्तनी करालं कुर्यात्। लम्बस्तनी नासिकामुखं छादयित्वा मरणमापादयेत्। ततः प्रशस्तायां तिथौ शिरःस्नातमहतवाससमुदङ्मुखं शिशुमुपवेश्य धात्रीं प्राङ्मुखीमुपवेश्य दक्षिणं स्तनं धौतमीषत्परिस्रुतमभिमन्त्र्य मन्त्रेणानेन पाययेत् ॥ ॥

"चत्वारः सागरास्तुभ्यं स्तनयोः क्षीरवाहिणः।
भवन्तु सुभगे नित्यं बालस्य बलवृद्धये ॥
पयोऽमृतरसं पीत्वा कुमारस्ते शुभानने।
दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा ॥"

अतोऽन्यथा नानाधात्रीपयोऽभ्यासादसात्म्याद्व्याधिजन्म भवति। अपरिस्रुतेऽप्यतिस्तब्धस्तन्यपूर्णस्तनपानादुत्क्लुशितस्तन्यस्य शिशोः कासश्वासवमीप्रादुर्भावः। तस्मादेवंविधानां स्तन्यं न पाययेत्।

भवति ॥ ॥ अथास्याः क्षीरजननार्थं सौमनस्यमुत्पाद्य यवगोधूमशालिषष्टिकमांसरससुरासौवीरकपिण्याकलशुनमत्स्यकशेरुकशृङ्गाटकबिसविदारिकन्दमधुकशतावरीनालिकालाबूकालशाकप्रभृतीनि विदध्यात् ॥ ॥ अथास्याः स्तन्यमप्सु परीक्षेत। तच्चेच्छीतलममलं तनु शङ्खावभासमप्सु न्यस्तमेकीभावं गच्छत्यफेनिलमतन्तुमन्नोत्प्लवते न सीदति वा तच्छुद्धमिति विद्यात्तेन कुमारस्यारोग्यं शरीरोपचयो बलवृद्धिश्च भवति। न च क्षुधितशोकार्त्तश्रान्तप्रदुष्टधातुगर्भिणीज्वरितातिक्षीणातिस्थूलविदग्धभक्तविरुद्धाहारतर्पितायाः स्तन्यं पाययेन्नाजीर्णौषधं च बालं दोषौषधमलानां तीव्रवेगोत्पत्तिभयात् ॥ ॥ भवन्ति चात्र।

"धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा।
दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति ॥
मिथ्याहारविहारिण्या दुष्टा वातादयः स्त्रियाः।
दूषयन्ति पयस्तेन शारीरा व्याधयः शिशोः ॥
भवन्ति कुशलस्तांश्च भिषक् सम्यग्विभावयेत्।
अङ्गप्रत्यङ्गदेशे तु रुजा यत्रास्य जायते ॥
मुहुर्मुहुः स्पृशति तं स्पृश्यमाने च रोदिति।
निमीलिताक्षो मूर्द्धस्थे शिरोरोगे न धारयेत् ॥
बस्तिस्थे मूत्रसङ्गार्तो रुजा तृष्यति मूर्च्छति।
विण्मूत्रसङ्गवैवर्ण्यच्छर्द्याध्मानान्त्रकूजनैः ॥
कोष्ठे दोषान् विजानीयात् सर्वत्रस्थांश्च
रोदनैः ॥"

तेषु च यथाभिहितं मृदु च्छेदनीयमौषधमात्रया क्षीरपस्य क्षीरसर्पिषा धात्र्याश्च कवलमेव विदध्यात्। क्षीरान्नादस्यात्मनि धात्र्याश्चान्नादस्य कषायादीनात्मन्येव न धात्र्याः। तत्र मासादूर्द्ध्वं क्षीरपायाङ्गुलिपर्वद्वयग्रहणसम्मितामौषधमात्रां विदध्यात् कोलास्थिसम्मितां कल्कमात्रां क्षीरान्नादाय कोलसम्मितामन्नादायेति ॥ ॥

'येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः।
तेषु तत्कल्कसंलिप्तौ पाययेत शिशुं स्तनौ ॥
एकं द्वे त्रीणि चाहानि वातपित्तकफज्वरे।
स्तन्यपायाहितं सर्पिरितराभ्यां यथार्थतः ॥
न च तृष्णाभयादस्य पाययेत शिशुं स्तनौ।
विरेकवस्तिवमनान्यृते कुर्याच्च नात्ययात् ॥
मस्तुलुङ्गक्षयाद्यस्य वायुस्तालु विनामयेत्।
तस्य तृड्दैन्ययुक्तस्य सर्पिर्मधुरकैः शृतम् ॥
पानाभ्यञ्जनयोर्योज्यं शीताम्बदेशेन तथा।
पाकेनाभ्यापिता नाभिः सवर्णा तुण्डिसंज्ञिताम् ॥
मारुतघ्नं प्रशमयेत् स्वेदस्नेहोपनाहनैः।
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् ॥
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥"

क्षीरान्नादाय सर्पिः पाययेत् सिद्धार्थकवचामांसीपयस्यापामार्गशतावरीसारिवाब्राह्मीपिप्पलीहरिद्राकुष्ठसैन्धवसिद्धम्। क्षीराशनाय

दाय द्विपञ्चमूलीक्षीरतगरभद्रदारुमरिचमधुविडङ्गद्राक्षाद्विब्राह्मीसिद्धम्। तेनारोग्यबलमेधायूंषि शिशोर्भवन्ति ॥ ॥ बालं पुनर्गात्रसुखं गृह्णीयान्न चैनं तर्जयेत् सहसा न प्रतिबोधयेद्वित्रासभयात्। सहसा नापहरेदुत्क्षिपेद्वा वातादिविघातभयात्। नोपवेशयेत् कौब्ज्यभयात्। नित्यं चैनमनुवर्त्तेत प्रियशतैरजिघांसुः। एवमनभिहतमनास्त्वभिवर्द्धते नित्यमुदग्रसत्त्वसम्पन्नो नीरोगः सुप्रसन्नमनाश्च भवति। वातातपविद्युत्प्रभापादपलताशून्यागारनिम्नस्थानगृहच्छायादिभ्यो दुर्ग्रहोपसर्गतश्च बालं रक्षेत् ॥ ॥

"नाशुचौ विसृजेद्बालं नाकाशे विषमे न च।
नोष्णमारुतवर्षेषु रजोधूमोदकेषु च ॥
क्षीरसात्म्यतया क्षीरमाजं गव्यमथापि वा।
दद्यादास्तन्यपर्य्याप्तेर्बालानां वीक्ष्य मात्रया ॥"

षण्मासं चैनमन्नं प्राशयेल्लघु हितं च। नित्यमवरोधरतश्च स्यात् कृतरक्षश्च उपसर्गभयात्। प्रयत्नतश्च ग्रहोपसर्गेभ्यो रक्ष्या बाला भवन्ति ॥ अथ कुमार उद्विजते त्रस्यति रोदिति नष्टसंज्ञो भवति नखदशनैर्धात्रीमात्मानं च परिणुदति दन्तान् खादति कूजति जृम्भते भ्रुवौ विक्षिपत्यूर्ध्वं निरीक्षते फेनमुद्वमति सन्दष्टौष्ठः क्रूरो भिन्नामवर्चा दीनार्त्तस्वरो निशि जागर्त्ति दुर्बलो म्लानाङ्गो मत्स्यच्छुच्छुन्दरीमत्कुणगन्धो यथा पुरा धात्र्याः स्तन्यमभिलषति तथा नाभिलषतीति सामान्येन ग्रहोपसृष्टलक्षणमुक्तं विस्तरेणोत्तरे वक्ष्यामः ॥ ॥ प्रतिमन्त्रेण मात्रां यथावर्णं विद्यां ग्राहयेत्। अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत् पित्र्यधर्म्मार्थकामप्रजाः प्राप्स्यतीति ॥ ॥

"ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम्।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥
जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥"

अतिवृद्धायां दीर्घरोगिण्यामन्येन वा विकारेणोपसृष्टायां गर्भाधानं नैव कुर्वीत। पुरुषस्याप्येवंविधस्य त एव दोषाः सम्भवन्ति। तत्र पूर्वोक्तैः कारणैः पतिष्यति गर्भे गर्भाशयकटीवङ्क्षणबस्तिशूलानि रक्तदर्शनं च। तत्र शीतैः परिषेकावगाहप्रदेहादिभिरुपचरेज्जीवनीयशृतक्षीरपानैश्च। गर्भस्फुरणे मुहुर्मुहुस्तदन्वारयेच्च क्षीरमुत्पलादिसिद्धं पाययेत् प्रसच्यमाने सदाहपार्श्वपृष्ठशूलासृग्दरानाहमूत्रसङ्गाः। स्थानात् स्थानं चोपक्रामति गर्भे कोष्ठे संरम्भश्च स्निग्धाः शीताः क्रिया हितास्तु नार्या महाबलासहदेवामधुकश्वदंष्ट्राकण्टकारिकासिद्धं पयः शर्कराक्षौद्रमिश्रं पाययेत्। मूत्रसङ्गे दर्भादिसिद्धम्। आनाहे हिङ्गुसौवर्चललशुनवचासिद्धम्। अत्यर्थं स्रवति रक्ते कोशाम्रादिकाश्मरीफलक्षौमभस्मपद्मकोत्पलकुसुम [illegible] मधुना

पलिखात्। यथालाभं न्यग्रोधादित्वक् प्रवालकल्कं वा पयसा पाययेदुत्पलादिकल्कं वा कशेरुशृङ्गाटकशालूककल्कं वा शृतेन पयसोऽम्बरफलोदककन्दकाथेन वा शर्करामधुमधुरेण शालिपिष्टं न्यग्रोधादिस्वरसपरिपीतं वा वस्त्रावयवं योन्यां धारयेत्॥ ॥ अथाहारशोणितवेदनायां मधुकदेवदारुपयस्यासिद्धं पयः पाययेत् तद्वत् आमलकशतावरीपयस्यासिद्धं विदारिगन्धादिसिद्धं वा बृहतीद्वयोत्पलशतावरीसारिवापयस्यामधुकसिद्धं पयस्यार्कपुष्पीसिद्धं वा पयः पाययेदिति। एवं क्षिप्रमुपक्रान्ताया उपावर्त्तन्ते रुजो गर्भश्चाप्यायते। अवस्थिते च गर्भे गर्भेणोदुम्बरफलात्सिद्धेन पयसा भोजयेत्। अतीते लवणस्नेहवर्ज्यैर्यवागूभिर्यवागूभिरुद्दालकादीनां पाचनीयोपसंस्कृताभिरुपक्रमेत यावन्तो मासा गर्भस्य तावन्त्यहानि। अस्युदरमूलेषु पुराणगुडं दीपनीयसंयुक्तं पाययेदरिष्टं वा वातोपद्रवसंभवात्। सोनसां लीयते गर्भः सोऽतिकालमवतिष्ठमानो व्यापद्यते तं मृदुना स्नेहादिक्रमेणोपचरेत्। उत्क्रोशरसकृसिद्धामनल्पस्नेहां यवागूं पाययेत्। माषतिलबिल्वशलाटुसिद्धान् वा कुल्माषान् भक्षयेन्मधुमार्द्वीकं चानुपिबेत् सप्तरात्रम्। कालातीतस्थायिनि गर्भे विशेषतः सधान्यमुदूखलं मुसलेनाभिहन्यात् विषमे वा यानासने सेवेत। वाताभिपन्न एव शुष्यति गर्भः। स मातुः कुक्षिं न पूरयति मन्दं स्पन्दते च तं बृंहणीयैः पयोभिर्मांसरसैश्चोपचरेत्। शुक्रशोणितं वायुनाभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरम्। तत् कदाचित् यदृच्छयोपशान्तं नैगमेयापहृतमिति भाषन्ते। तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुस्तत्रापि लीनवत् प्रतीकारः॥ ॥ अत ऊर्द्ध्वं मासानुमासिकं वक्ष्यामः।

"मधुकं शाकबीजञ्च पयस्या सुरदारु च।
अश्मन्तकस्तिलाः कृष्णास्ताम्रवल्ली शतावरी॥
वृक्षादनी पयस्या च लता चोत्पलसारिवा।
अनन्ता सारिवा रास्ना पद्मा मधुकमेव च॥
बृहत्यौ काश्मरी चापि क्षीरिशुङ्गास्त्वचो घृतम्।
पृश्निपर्णी बला शिग्रु श्वदंष्ट्रा मधुपर्णिका॥
शृङ्गाटकं बिसं द्राक्षा कशेरु मधुकं सिताः।
वत्सैते सप्त योगाः स्युरर्द्धश्लोकसमापनाः॥
यथासंख्यं प्रयोक्तव्या गर्भस्रावे पयोयुताः।
कपित्थबृहतीबिल्वपटोलेक्षुनिदिग्धिकाः॥
मूलानि क्षीरसिद्धानि पाययेद्भिषगष्टमे।
नवमे मधुकानन्तापयस्यासारिवाः पिबेत्॥
क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितम्।
सक्षीरा वा हिता शुण्ठी मधुकं सुरदारु च।
एवमाप्यायते गर्भस्तीव्रा रुक् चोपशाम्यति॥"

निवृत्तप्रसवायास्तु पुनः षड्भ्यो वर्षेभ्य ऊर्द्ध्वं प्रसवमानाया नार्य्याः कुमारोऽल्पायुर्भवति॥ अथ गर्भिणीं व्याधुत्पत्तावद्ये शुद्धैर्मधुरास्निग्धशीतैर्गर्भानुलोमनैश्च संशमनीयैश्च मृदु विदध्यादन्नपानयोर्वीर्य्यं मृदुवीर्य्यं मधुरप्रायं गर्भाविरुद्धञ्च गर्भाविरुद्धाश्च क्रिया यथायोगं विदधीत मृदुप्रायाः॥ ॥ भवन्ति चात्र।

"सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतञ्च वा।
मत्स्याक्षकः शङ्खपुष्पी मधु सर्पिः सकाञ्चनम्॥
अर्कपुष्पी मधु घृतं चूर्णितं कनकं वचा।
हेमचूर्णानि कैटर्य्यः श्वेता दूर्व्वा घृतं मधु॥
चत्वारोऽभिहिता प्राशाः श्लोकार्द्धेषु चतुर्ष्वपि।
कुमाराणां वपुर्मेधाबलबुद्धिविवर्द्धनाः॥"

इति सुश्रुते आयुर्वेदशास्त्रे दशमं शारीरस्थानं समाप्तम्॥ इङ्गरेजीभाषायां एनाटोमी इत्युक्तमेतत्॥ ॥ शारीरं तपो यथा,—

"देवद्विजगुरुप्राज्ञपूजनं शौचमार्ज्जवम्।
ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते॥"

इति भगवद्गीतायाम् १७ अध्यायः॥

शारीरकं, क्ली, (शरीरमेव शारीरं कुत्सितत्वात् तत्रिवासी शारीरको जीवस्तमधिकृत्य कृतो ग्रन्थः। शारीरक+अण्।) वेदव्यासकृतवेदान्तमीमांसासूत्रम्। यथा। तथा च वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः। वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम्। अथातो ब्रह्मजिज्ञासेति। इति शङ्करभाष्यम्॥ (शरीरमेव शारीरकं तत्र भवम्। शारीरक+अण्। शरीरभवे, त्रि। यथा, भागवते। ३। ३१। १९।

"पञ्चात्मकं धिषणया नष्टसत्त्वधिः
शारीरके दमशरीर्य्यपरः स्वदेहे॥")

शारीरिकः, त्रि, (शरीर+ठक्।) शरीरसम्बन्धि। तत्पर्य्यायः। कालेवरिकः २ गात्रिकः ३ वापुषिकः ४ सांहननिकः ५ वार्ष्मिकः ६ वैग्रहिकः ७ कायिकः ८ दैहिकः ९ मौर्त्तिकः १० तानविकः ११। इति अमरोक्तशरीरपर्य्यायशब्दात् ष्णिकप्रत्ययेन निष्पन्नमिदम्॥

शारुकः, त्रि, (शृणातीति। शॄ+"लषपतपदस्थेति।" ३। २। १५४। इति उकञ्।) हिंसकः। शॄस्याभूकञ गमेल्यादिना उकप्रत्ययेन निष्पन्नमिदम्। इति मुग्धबोधव्याकरणम्॥ (यथा, मुग्धबोधे कारकप्रकरणे।

"दृष्ट्वा दधिं शारुकमेतदर्षकान्
उन्मीलवन्तं यतिभिः सुदर्शनम्॥")

शार्कः, पुं, शर्करा। इति शब्दरत्नावली॥

शार्ककः, पुं, दुग्धफेनः। शर्करापिण्डम्। इति मेदिनी॥

शार्करः, पुं, दुग्धफेनः। (शर्करास्त्यत्रेति। शर्करा+"देशे लुबिलचौ च।" ५। २। १०५। इति अण्।) शर्करान्वितदेशः। इति मेदिनी॥ शर्करासम्बन्धिनि, त्रि॥ (शर्करैव। "शर्करादिभ्योऽण्।" ५। ३। १०७। इत्यण्। शर्करासदृशम्॥ इति काशिका॥ ४॥ "सिकताशर्कराभ्यां च।" ५।२।१०४। इति अणि शर्करा-विशिष्टः॥ यथा, शार्करं मधु।" इति च काशिका॥)

शार्करकः, शार्करिकः } त्रि, शर्करावहुलदेशः। शर्कराशब्दात् कुञ्प्रत्ययेन ष्णिकप्रत्ययेन च निष्पन्नः॥

शार्करीयः, त्रि, शर्करायुक्तदेशः। शर्कराशब्दात् छीयप्रत्ययेन निष्पन्नमिदम्॥

शार्ङ्गं, क्ली, आर्द्रकम्। इति राजनिर्घण्टः॥ (शृङ्गस्य विकारः। शृङ्ग+अण्।) विष्णुधनुः। धनुर्मात्रम्। इति मेदिनी। गे, २६॥ (यथा, रघुः। ४। ६२।

"शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत्॥")

शृङ्गसम्बन्धिनि, त्रि॥

शार्ङ्गेष्टा, स्त्री, मत्स्याकरञ्जः। इति राजनिर्घण्टः॥ पुस्तकान्तरे शार्ङ्गेष्ठा इति च पाठः॥

शार्ङ्गी, [न्] पुं, (शार्ङ्गमस्यास्तीति। शार्ङ्ग+इनिः।) विष्णुः। इत्यमरः॥ (यथा, रघुः। १२। ७०।

"स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि।
रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः॥")

धन्विमात्रम्। इति शार्ङ्गशब्दार्थदर्शनात्॥

शार्दूलः, पुं, (शॄ हिंसायाम्+"शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च।" उणा० ४। ९०। इति ऊलच् प्रत्ययेन साधुः।) व्याघ्रः। उत्तरपदे श्रेष्ठार्थवाचकः। इत्यमरः॥ राक्षसः। पशुभेदः। स तु सरभः। इति मेदिनी॥ पक्षिविशेषः। इति धरणिः॥ चित्रकः। इति राजनिर्घण्टः॥

शार्दूलललितं, क्ली, धृतिवृत्तौ अष्टादशाक्षरपादच्छन्दोविशेषः। यथा,—

"मः सो जः स-त-सा दिनेश ऋतुभिः शार्दूलललितम्।
हत्वा कंसमगे पराक्रमविधिं शार्दूलललितं
यश्चक्रे क्षितिभारकारिषु सुराराति‌ष्वतिद्रवम्।
सन्तोषं परमं तु देवनिवहे त्रैलोक्यशरणं
श्रेयो वः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः॥"

इति छन्दोमञ्जरी २ स्तवकः॥

शार्दूलवाहनः, पुं, पञ्चविंशतिपूर्वजिनान्तर्गतजिनविशेषः। इति त्रिकाण्डशेषः॥

शार्दूलविक्रीडितं, क्ली, अतिधृतिवृत्तौ ऊनविंशतिपादच्छन्दोविशेषः। यथा,—

"सूर्य्याश्वैर्म-स-ज-स-ता: सगुरवः शार्दूलविक्रीडितम्।
गोविन्दं प्रणमोत्तमाङ्ग रसने त्वं घोषयाहर्निशं
पाणी पूजयतं मनः स्मर पदे तस्यालयं गच्छतम्।
एवञ्चेत् कुरुताखिलं मम हितं शार्दूलमद्भुतं
न प्रेक्षे भवतां कृते भवमहाशार्दूलविक्रीडितम्॥"

इति छन्दोमञ्जरी २ स्तवकः॥

शार्व्वर, क्ली, अन्धतमसम्। घातुके, त्रि। इति मेदिनी॥ (शर्व्वर्य्या इदम्। शर्व्वरी+अण्।) शर्व्वरीसम्बन्धिनि त्रि।

शार्व्वरी स्त्री रात्रि। इत्यमरटीकायां भरत धृतवाचस्पति॥

शाल, ऋ कत्थने। इति कविकल्पद्रुम॥ (भ्वा०-आत्म०-सक०-सेट।) कत्थने प्रशंसायाम्। ऋ, शालते गुणिनं गुणी। ऋ, अशशालत। इति दुर्गादास॥

शाल, पुं (शल्यते प्रशस्यते इति। शाल+घञ्।) मत्स्यभेद। शजाड इति ख्यात। प्राकार। वृक्षविशेष। तत्पर्य्याय। सर्ज्ज १ कार्श्य २ अश्वकर्णक ३ शस्यसम्बर ४। इत्यमर। शकुरुच ६। इति रत्नमाला॥ नद भेद। इति शब्दरत्नावली। शालभूप। स तु शालिवाहनराज। इति विश्व॥ वृषमात्रम्। इति राजनिर्घण्ट॥॥ शालो झस धीवर एव दाश इत्युभभेदात्तालव्यादि॥ दन्त्यादिश्च। कैवर्त्त इव बहुराजीवोत्पलशालो वसन्तकाल आजगाम। इति वासवदत्ताश्लेषात। कैवर्त्त पक्षे शालो मत्स्यविशेष। वसन्तपक्षे शालस्य पुष्पं शालम्। इति भरत॥

शालग्राम पुं विष्णुमूर्त्तिविशेष। स च गण्ड क्युद्भववज्रकीटकृतचक्रयुक्तशिला द्वारकोद्भव ताद्दशशिला च। तस्य माहात्म्यलक्षणादि यथा,—

'प्रसङ्गात् कथयिष्यामि शालग्रामशिलार्च्चनम्। निष्कामो मुक्तिमाप्नोति मूर्त्तिं ध्यायन् स्तुवन् जपन्॥

शङ्खचक्रगदापद्म केशवाख्यो गदाधर। शार्ङ्गकौमोदकीचक्रशङ्खी नारायणो विभु॥ स च शङ्खाब्जपन्नो माधव श्रीगदाधर। गदाब्जशङ्खचक्री वा गोविन्दाख्यो गदाधर॥ पद्मशङ्खादिगादिने विष्णुरूपाय वै नम। सशङ्खाब्जगदाचक्रमधुसूदनमूर्त्तये॥ नमो गदादिचक्राब्जयुक्तत्रैविक्रमाय च। सारिकौमोदकीपद्मशङ्खवामनमूर्त्तये॥ शङ्खाब्जचक्रगादिने नम श्रीधरमूर्त्तये। हृषीकेश सारिगदाशङ्खपद्मिन्नमोऽस्तु ते॥ साब्जशङ्खगदाचक्रपद्मनाभस्वरूपिणे। दामोदर शङ्खगदाचक्रपद्मिन्नमोऽस्तु ते॥ सारिशङ्खगदाब्जाय वासुदेव नमो नम। शङ्खाब्जचक्रगदिने हम सङ्कर्षणाय च॥ शङ्खचक्रगदाब्जाय धृतप्रद्युम्नमूर्त्तये। नमोऽनिरुद्धाय गदाशङ्खाब्जवरधारिणे॥ साब्जशङ्खगदाचक्रपुरुषोत्तममूर्त्तये। नमोऽधोक्षजरूपाय गदाशङ्खारिधारिणे॥ नृसिंहमूर्त्तये पद्मगदाशङ्खविधारिणे। पद्मारिशङ्खगादिने नमोऽच्युतमूर्त्तये॥ सशङ्खचक्राब्जगदं जनार्दनसिद्धो नम। उपेन्द्र गदिन सारिपद्मशङ्ख नमोऽस्तु ते॥ सचक्राब्जगदाशङ्खयुक्ताय हरिमूर्त्तये। सगदाब्जारिशङ्खाय नम श्रीकृष्णमूर्त्तये॥

शालग्रामशिलाद्वारगतलग्नद्विचक्रधृक्। शुक्लाभा वासुदेवोऽयाद्यः सदैव श्रीगदाधर॥ लग्नद्विचक्रो रक्ताभ पूर्व्वभागस्तु पुष्कल। सङ्कर्षणोऽथ प्रद्युम्न सूक्ष्मचक्रस्तु पीतक॥ स दीर्घ स शिरश्छिद्रा योऽनिरुद्धस्तु वर्त्तुल। नानाद्वाररहितश्च अथ नारायणोऽसित॥ मध्ये गदाकृता रेखा नाभिपद्ममहोन्नत। पृथुचक्रो नृसिंहो वै कपिलोऽथ त्रिबिन्दुक॥ अथवा पञ्चबिन्दुस्तत्पूजनं ब्रह्मचारिण। वराहशक्तिलिङ्गोऽथ विषमद्वयचक्रक॥ नीलस्त्रिरेख स्थूलोऽथ कूर्म्ममूर्त्ति सबिन्दुमान्। कृष्ण सवर्त्तुलावर्त्तं पातुरामनपृष्ठक॥ श्रीधर पञ्चरेखोऽथ वनमालागदाङ्कित। वामनो वर्त्तुलो नाम वामचक्र सुरेश्वर॥ नानावर्णोऽनेकमूर्त्तिर्नागभोगी त्वनन्तक। स्थूलो दामोदरो नीलो मध्ये चक्र सुनीलक॥ सङ्कीर्णद्वारको योऽथ ब्रह्मा सुमाङ्कित। सदीर्घरेखा शुषिर एकचक्राम्बुज पृथु॥ पृथुच्छिद्र स्थूलचक्र कृष्णोऽबिन्दुश्च बिन्दुमत। हयग्रीवोऽङ्कुशाकार पञ्चरेख समन्तत॥ वैकुण्ठोऽमलवद्भाति एकचक्राब्जकोऽसित। मत्स्यो दीर्घाम्बुजाकारो द्वाररेखस्तु पाण्डुर॥ वामचक्रो दक्षरेख श्यामो वोऽथ त्रिविक्रम। शालग्रामे द्वारकायां स्थिताय गदिने नम॥ एकेन लक्षितो योऽथ पद्माधारी सुदर्शन। लक्ष्मीनारायणो द्वाभ्यां त्रिभिस्त्विह त्रिविक्रम॥ चतुर्भिश्च चतुर्व्यूहो वासुदेवश्च पञ्चभि। प्रद्युम्न षड्भिरथाथान् सङ्कर्षण इत स्तुत॥ पुरुषोत्तमोऽष्टभि स्याच नवव्यूहो नवाङ्कित। दशावतारो दशभिरनिरुद्धोऽवतादय। द्वादशात्मा द्वादशभिरत ऊर्द्ध्वं त्वनन्तक॥"

इति पाद्मे पातालखण्डे १० अध्याय॥

अपि च।

ईश्वर उवाच।

"शालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु च। नित्यन्तु श्रीहरे पूजा कर्त्तव्येव जनेन तु॥ गण्डक्यामेकदेशे तु शालग्राममस्थलं महत्। पाषाणस्तद्भवं यत्तत् शालग्राममिति स्थितम्॥ शालग्रामशिलास्पर्शात् कोटिजन्माघनाशनम्। किं पुनर्य्यजनं तत्र हरेः साम्निध्यकारणम्॥ शालग्रामैकयजनात् शतलिङ्गफलं लभेत्। बहुभिर्जन्मभि पुण्यैर्यदि कृष्णशिला लभेत्॥ गोष्पदेन च चिह्नेन तेन वै जायते नर। आदौ शिलां परीक्षेत स्निग्धां श्रेष्ठाञ्च मेचकाम्॥ अकृष्णा मध्यमा प्रोक्ता मिश्रा मिश्रफलप्रदा। सर्व्वकामप्रदा सौम्या कराला भयदु सदा॥ स्निग्धा च श्रीकरी नित्यं रूक्षा दारिद्र्यदायिका। सूक्ष्मा सूक्ष्मफला प्रोक्ता स्थूला स्थूलफलप्रदा॥ यदा काष्ठे स्थितो वह्निर्म्मन्थनेन प्रकाशते। यथा तथा हरिर्व्यापी शालग्रामे प्रकाशते॥ प्रत्यहं द्वादश शिला शालग्रामस्य योऽर्च्चयेत्। द्वारवत्या शिलायुक्ता स वैकुण्ठे महीयते॥ शालग्रामशिलायान्तु गह्वरं लक्षयेत नर। पितरस्तस्य तिष्ठन्ति तृप्ता कल्पान्तरं दिवि॥ शालग्रामशिला यत्र यत्र द्वारवतीशिला। स्वर्ते विष्णुपुरं याति कृतार्थो योजनत्रयम्॥ जपपूजा च होमश्च सर्व्वं कोटिगुणं भवेत्। मनस्काम सदाभीष्ट क्रोशमात्रं समन्तत॥ कोकटेऽपि मृतो याति वैकुण्ठभवनं नर। शालग्रामशिलायां यो मूल्यमुत्पादयन्नर॥ विक्रेता चानुमन्ता च य परीक्षानुमोदक। सर्व्वे ते नरकं यान्ति यावदाभूतसम्प्लवम्। अतस्तद्वर्ज्जयेद्विप्र। हरिविक्रयणक्रयम्। शालग्रामोद्भवो देवो यो देवो द्वारकोद्भव। उभयो सङ्गमो यत्र मुक्तिस्तत्र न संशय॥ द्वारकोद्भव शुभ्रश्च बहुचक्रैश्च चिह्नित। चक्रमात्रेण शिवाकारश्चितस्वरूपनिरञ्जनम्॥ नमोऽस्त्वोङ्काररूपाय सदानन्दस्वरूपिणे। शालग्रामे महाभाग भक्तस्यानुग्रहं कुरु। त्वया युतस्य धर्म्मस्य कर्तृत्वस्य मे प्रभो॥'

इति तत्रैव ११ अध्याय

अपरञ्च।

ब्राह्मण उवाच।

"गण्डकीव नदी राजन्। सुरासुरनिषेविता। पुण्योदकपरीवाहैर्हतपातकसञ्चया॥ दर्शनाम्नानपाप अशनात् कर्म्मज दहेत्। वाचिकं तोयतोयस्य पानत मानसञ्चयम्॥ पुरा कृता प्रजानाथ प्रजा सर्व्वा विपाप्मन। स्वगण्डाङ्कितुषाऽनेकपापघ्नी प्रहवानिमाम्॥ एतां गत्वा य पुण्यार्दां स्पृशन्ति सुनराङ्गणीम्। ते गर्भभाजो नैव स्युरपि पापकृतो नरा॥ तस्यां भवा य पाषाणाश्चक्रचिह्नैरलङ्कृता। ते साक्षाद्भगवन्तो हि स्वस्वरूपधरा परा॥ शिला सपूजयेद्यस्तु नित्यं चक्रयुता सदा। न जातुचित्स जन्या वै जठरं सम्प्रविश्यत॥ पूजयेद् यो नरो धीमान् शालग्रामशिलां वराम्। तेनाचारवता भाव्यं दम्भलोभविवर्ज्जिना॥ परदारपरद्रव्यविमुखेन नरेण च। पूजनीय प्रयत्नेन शालग्राम सचक्रक॥ द्वारवत्या भव चक्र शिला वै गण्डकीभवा। पुंसां क्षणाद्धरन्त्येव पाप जन्मशताज्जितम्॥ अपि पापसहस्राणां कर्त्ता तावन्नरो भवेत्। शालग्रामशिलातोय पीत्वा पूयेत तत्क्षणात्॥ ब्राह्मण क्षत्रियो वैश्य शूद्रा वेदपथे स्थित। शालग्राम पूजयित्वा सद्भक्तो मोक्षमाप्नुयात्॥ न कदाचित् स्त्रिया कार्य्यं शालग्रामस्य पूजनम्। भर्त्तृहीनाथ सुभगा सर्व्वलोकहितैषया॥ मोहात स्पृशेत महिला जन्मशीलगुणान्विता। हित्वा पुण्यसमूहन्तु सत्वरं नरकं व्रजेत्॥ स्त्रीपाणिमुक्तपुष्पाणि शालग्रामशिलोपरि।

परैरधिकपापानि वदन्ति ब्राह्मणोत्तमाः ॥
चन्दनं विषपङ्काभं कुङ्कुमं वज्रसन्निभम् ।
नैवेद्यं कालकूटाभं भवेद्भगवतः सतम् ॥
तस्मात् सर्व्वात्मना त्याज्यः स्त्रियाः स्पर्शः
शिलोपरि ।
कुर्व्वती याति नरकं यावदिन्द्राश्चतुर्दश ॥ * ॥
अपि पापसमाचारो ब्रह्महत्यायुतोऽपि वा ।
शालग्रामशिलातोयं पीत्वा याति परां गतिम् ॥
तुलसी चन्दनं चक्रं शङ्खो घण्टाथ चक्रकम् ।
शिला ताम्रस्य पात्रन्तु विष्णोर्नाम पदामृतम् ॥
पदामृतन्तु नवभिः पापराशिप्रदाहकम् ।
वदन्ति मुनयः शान्ताः सर्व्वशास्त्रार्थकोविदाः ॥
सर्व्वतीर्थपरिस्नानात् सर्व्वक्रतुसमर्च्चनात् ।
पुण्यं भवति यद्राजन् विन्दौ विन्दौ तदद्भुतम् ॥
शालग्रामशिला यत्र पूज्यते पुरुषोत्तमैः ।
तत्र योजनमात्रन्तु तीर्थकोटिसमन्वितम् ॥ * ॥
शालग्रामाः समाः पूज्याः समेषु द्वितयं न हि ।
विषमा एव पूज्या वै विषमेषु त्रयं न हि ॥
द्वारवतीभवं चक्रं तथा वै गण्डकीभवम् ।
उभयोः सङ्गमो यत्र तत्र गङ्गा समुद्रगा ॥
रूक्षाः कुर्व्वन्ति पुरुषान् आयुःश्रीभिर्विवर्ज्जि-
तान् ।
तस्मात् स्निग्धा मनोहारिरूपेण ददति श्रियम् ॥
आयुष्कामो नरो यस्तु धनकामोऽपि यः पुमान् ।
पूजयन् सर्व्वमाप्नोति पापं लौकिकमैहिकम् ॥
प्राणान्तकाले तु यस्य भवेद्भाग्यवशान्नृप ।
वाचि नाम हरेः पुण्यं शिलाकृतिस्तदन्तिके ॥
गच्छतस्तु प्राणमार्गेषु यस्य विश्रमतोऽपि चेत् ।
शालग्रामशिलास्पर्शस्तदा मुक्तिर्न संशयः ॥
पुरा भगवता प्रोक्तमम्बरीषाय धीमते ।
ब्राह्मणो न्यासिनो भक्ताः शालग्रामशिला
मम ॥
स्वरूपत्रितयं मह्यमेतद्धि क्षितिमण्डले ।
पापिनां पापनिर्व्वारं कर्त्तुं धृतमदश्वताम् ॥
निन्दन्ति पापिनो ये वा शालग्रामशिलां सकृत् ।
कुम्भीपाके पचन्त्याशु यावदाहूतसंप्लवम् ॥
पूजां समुद्यतं कर्त्तुं यो वारयति मूढधीः ।
तस्य माता पिता बन्धुः सर्व्वे नरकगामिनः ॥
यो वै कथयति श्रेष्ठं शालग्रामार्च्चनं कुरु ।
स कृतार्थो नयत्याशु वैकुण्ठं स्वन्तु पूर्व्वजैः ॥”
इति च तत्रैव २० अध्यायः ॥ * ॥

अन्यच्च ।

श्रीईश्वर उवाच ।

“शालग्रामशिलायान्तु त्रैलोक्यं सचराचरम् ।
सदा वसति तेनात्र विष्णुस्तिष्ठति सर्व्वदा ॥
शालग्रामशिलापूजां प्रकुरुष्व षडानन ।
गङ्गामिव महापुण्यां चतुर्व्वर्गफलप्रदाम् ॥
हर्षेण मनसा येन स्नापिता पूजिता तथा ।
यज्ञकोटिसमं पुण्यं आशु तस्मै प्रयच्छति ॥
छिन्नस्तेन महासेन गर्भवासः सुदारुणः ।
पीतं येन सदा विष्णोः शालग्रामशिलाजलम् ॥
कामासक्तोऽपि यो नित्यं भक्तिभावविवर्ज्जितः ।
शालग्रामशिलां पश्येत् तस्य पापक्षयो भवेत् ॥
शालग्रामशिला विप्र हत्याकोटिविनाशिनी ।
स्मृता संकीर्त्तिता ध्याता पूजिता च नमस्कृता ॥
शालग्रामशिलां दृष्ट्वा यान्ति पापानि देहि-
नाम् ।
सिंहं दृष्ट्वा यथा यान्ति वने मृगगणा भयात् ॥
नमस्कृत्वा तु यः कुर्य्यात् शालग्रामशिलार्च्चनम् ।
भक्त्या वा यदि वाभक्त्या स मुक्तिं समवाप्नुयात् ॥
यः सेवां कुरुते नित्यं शालग्रामशिलाग्रतः ।
वैवस्वताद्भयं तस्य न स्याज्जरणजन्मनी ॥
शालग्रामशिलाचक्रं पयोदधिघृतादिकैः ।
यः स्नापयति नूनं स कल्पकोटिं वसेद्दिवि ॥
शालग्रामे नमस्कारो भावेनापि च यैः कृतः ।
मानवाः किं करिष्यन्ति मद्भक्त्या ते महीतले ॥
मद्भक्तिरगर्द्दपिष्टा मत्पुरं न नमन्ति ये ।
वैष्णवास्ते न विज्ञेया मद्भक्ताः पापमोहिताः ।
शालग्रामशिला यत्र तत्र पुत्र वसाम्यहम् ॥
पूजितोऽहं न तैर्मर्त्यैः स्थापितस्य न तैर्नरैः ।
न कृतं मर्त्यलोके यैः शालग्रामशिलार्च्चनम् ॥
किमर्च्चितैर्लिङ्गशतैर्विष्णुभक्तिवहिष्कृतैः ।
शालग्रामशिलाचक्रं नार्च्चितं यदि पुत्रक ॥
जन्मकोटिसहस्रेण पूजिते मयि यत् फलम् ।
तत् फलं समवाप्नोति शालग्रामशिलार्च्चनात् ॥
अनर्प्यं मम नैवेद्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलादृष्टं सर्व्वं याति पवित्रताम् ॥
नैवेद्यं मे न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ।
भुक्त्वा केशवनैवेद्यं कोटिभक्तिफलं लभेत् ॥
सकृदभ्यर्च्चितो विष्णुः शालग्रामशिलास्थितः ।
ददाति विपुलां मुक्तिं सर्व्वसङ्गविवर्ज्जिताम् ॥
महलिङ्गकोटिभिर्दृष्टैर्यत् फलं पूजितैः स्तुतैः ।
तत्फलं समवाप्नोति शालग्रामैकपूजनात् ॥
शालग्रामशिलाचक्रं यो विद्वान् पश्यति ध्रुवम् ।
अर्च्चयेद्यो मुनो नित्यं तस्य पुण्यं निबोध मे ॥
कोटिलिङ्गसहस्रैर्यत् पूजितैर्जाह्नवीतटे ।
काशीवासाद्युगान्यष्टौ दिनेनैकेन तद्भवेत् ॥
तस्माद्भक्त्यैव मद्भक्तैः प्रीत्यर्थं मम पुत्रक ।
कर्त्तव्यं सर्व्वदा मर्त्यैः शालग्रामशिलार्च्चनम् ॥
शालग्रामशिलारूपी यत्र तिष्ठति केशवः ।
तत्र देवाः सुरा यक्षा भुवनानि चतुर्द्दश ॥
शालग्रामशिलाग्रे यैः सकृच्छ्राद्धं कृतं भवेत् ।
वसन्ति पितरस्तेषां विष्णुलोके न संशयः ॥
ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् ।
पञ्चगव्यसहस्रैस्तु प्राशितैः किं प्रयोजनम् ॥
प्रायश्चित्ते समुत्पन्ने किं दानैः किमुपोषणैः ।
चान्द्रायणैः किं हि तादृक् पीत्वा पादोदकं
शुचिः ॥”

इति पाद्मे उत्तरखण्डे १२० अध्यायः ॥ * ॥

कलेर्दशसहस्रवर्षानन्तरं स च भारतं त्यक्त्वा यास्यति । यथा,—

“शालग्रामो हरेर्म्मूर्त्तिर्जगन्नाथश्च भारतम् ।
कलेर्दशसहस्रान्ते ययौ त्यक्त्वा हरेः पदम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६ अध्यायः ॥ * ॥

तस्योत्पत्तिलक्षणादि यथा,—

“शालग्रामसमुत्पत्तिं शृणुष्व परमाद्भुताम् ।
गण्डक्या प्राक् तपस्तप्तं भवन्तु मम देवताः ॥
सर्व्वाः पुत्त्राः सुखं दातुं जनानामिति ते सुराः ।
तस्यास्तु तपसा तुष्टा ब्रह्मविष्णुमहेश्वराः ॥
वरं दातुं समुद्युक्ता वव्रे सा स्वस्य पुत्त्रताम् ।
अशक्तास्तं वरं दातुं तदा शप्ताश्रया क्रुधा ॥
प्रतारणं मम सुराः कृतं यस्मात् पुनः पुनः ।
कीटयोनिं प्रपद्येयाः क्रुद्धासि शशपेऽस्य ताम् ॥
अविचार्य्य वयं शप्ताश्रया यत्तपसोद्धताः ।
तेन कर्म्मविपाकेन जड़ा त्वय्या नदी भव ॥
अन्योन्यशापं श्रुत्वेत्थं महान् कोलाहलोऽभवत् ।
प्रकम्पिताः सुराः सा च ब्रह्माण्डे व्यजित्रपत् ॥
ब्रह्मन् त्राहि महाशापादन्योन्यपतितान् क्रुधा ।
इति देववचः श्रुत्वा ब्रह्मा शङ्करमब्रवीत् ॥
शिवः प्रोवाच धातारमहं संहारकारकः ।
त्वं सृष्टिकर्त्ता विष्णुस्तु पालको बुद्धिमत्तरः ॥
स प्रष्टव्यो यथाऽस्माकमुभयोः सम्भवेदिति ।
इति माहेश्वरं श्रुत्वा वचनं विष्णुरब्रवीत् ॥
शृणु ब्रह्मन् महादेव शृणु देव गजानन ।
सङ्गमो ब्राह्मणो ब्राह्मणातङ्गो शापतोऽत्र तु ॥
भविष्यतस्तयोर्म्मोक्षं भविष्यामि कलेवरम् ।
शीर्णे भविष्यति यदा तस्मिन् देमष्टसम्भवाः ॥
पाषाणान्तर्गता कीटा यूयाश्च प्रभविष्यथ ।
अद्यैव गण्डकी पुण्या गङ्गातुल्या महानदी ॥
गण्डक्यां गिरिराजस्य दक्षिणे दशयोजनम् ।
विस्तीर्णं तन्मध्ये चक्रं पुण्यचैत्रं महीतले ।
चक्रतीर्थमिति ख्यातं त्रिषु लोकेषु विश्रुतम् ॥
शालग्रामगता देवा देवोद्वारावतीगतः ।
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥
सर्व्वदेवप्रीतिकरा भुक्तिमुक्तिप्रदायिनी ।
भवन्तश्चापि पाषाणा ये तदन्तर्गता सुराः ॥
प्रार्थितं स्वं विना सर्व्वे वज्रकीटा भवन्त्विति ।
अनेनैव तु गण्डक्याः पुत्त्रत्वं भवतामपि ॥
भविष्यति तदन्तश्च शिवं तद्देवतोद्भवम् ।
विज्ञाय येऽर्च्चयिष्यन्ति सा प्रीता तस्य देवता ॥
न यत्नस्य न मूर्त्तेश्च न वृक्षस्यापि पूजनात् ।
सन्तोषो जायते तेषां गण्डक्यां मार्ज्जनाद्यथा ॥
इति विष्णुवचः श्रुत्वा ब्रह्मा वचनमब्रवीत् ॥ ९ ॥
कीदृक् पूज्या शिला विष्णोः किंच्छिद्रा कस्य
वल्लभा ।
किं फलं चाधिकारी च केन मार्गेण तद्वद ॥
इति ब्रह्मवचः श्रुत्वा विष्णुर्व्वचनमब्रवीत् ।
स्नीयवर्णा शिला पूज्या ब्राह्मणाद्यैः सुखाप्तये ॥
स्निग्धा शिला मन्त्रसिद्धिं रूक्षा सिद्धिं करोति
च ।
मेचका कीर्त्तिदा धौताङ्गारवत् सा यशोहरा ॥
पाण्डुरूपार्थशमनी मलिना पापधीकरा ।
पीता पुत्त्रफलं दद्यादारवर्णा सुतान् हरेत् ॥
नीला संदिशते लक्ष्मीं धूम्राभा हरते मतिम् ।
रोगप्रदा रक्तवर्णा सिन्दूराभा महाकलिम् ॥
दारिद्र्यकारिणी वक्रा समा सर्व्वार्थसाधिका ।

सा शिला तस्य दिवसस्य सेया सद्विधि-
राज्यदा ॥ ७ ॥
अर्द्धचन्द्राकृतिर्यत्र दृश्यते शकलद्वयम् ।
सा तु चन्द्रशिला चाग्रयुक्ता भौमशिला
मता ॥ ० ॥
बाणाकारेण चिह्नेन ज्ञेया बुधशिला सुरा: ।
दीर्घेण चतुरस्रेण युक्ता गुरुशिला मता ॥ ७ ॥
पञ्चकोणा तु शुक्रस्य चापाकारा शनेर्म्मता ।
सर्पाकारा तु राहोः स्यात् केतोस्तु ध्वज-
रूपिणी ॥ ० ॥
प्राप्ते कलियुगे घोरे वामाचारविमिश्रिते ।
भक्ष्याभक्ष्यविचारादिरहिते म्लेच्छसङ्कुले ॥
कामक्रोधादिभिर्व्याप्ते जने स्त्रीभिर्विनिर्ज्जिते ।
क्व शिष्यः क्व गुरुर्म्मन्त्रः क्व जपः क्व च सिद्धयः ॥
अयुताब्दे कलेर्यातेे त्यजेद्विष्णुशिला महीम् ।
तदर्द्धाज्जाह्नवीतोयं तदर्द्धाद्देवताशिला ॥
जप एव कलौ श्रेयान् शालग्रामार्च्चनं यथा ॥”
इति मेरुतन्त्रे ५ पटलः ॥
अपि च ।
तुलस्युवाच ।
“हे नाथ ते दया नास्ति पाषाणसदृशस्य च
छलेन धर्म्मभङ्गेन मम स्वामी त्वया हतः ॥
पाषाणहृदयस्त्वञ्च दयाहीनो यतः प्रभो ।
तस्मात् पाषाणरूपस्त्वं भवेह हरेऽधुना ॥
श्रीभगवानुवाच ।
अहञ्च शैलरूपी च गण्डकीतीरसन्निधौ ।
अधिष्ठानं करिष्यामि भारते तव शापतः ॥
वज्रकीटाश्च कृमयो वज्रदंष्ट्राश्च तत्र वै ।
तच्छिलाकुहरे चक्रं करिष्यन्ति मदीयकम् ॥
एकद्वारे चतुश्चक्रं वनमालाविभूषितम् ।
नवीननीरदाकारं लक्ष्मीनारायणाभिधम् ॥
एकद्वारे चतुश्चक्रं नवीननीरदोपमम् ।
लक्ष्मीजनार्द्दनं ज्ञेयं रहितं वनमालया ॥
द्वारद्वये चतुश्चक्रं गोष्पदेन समन्वितम् ।
रघुनाथाभिधं ज्ञेयं वेष्टितं वनमालया ॥
अतिक्षुद्रं द्विचक्रन्तु नवीननीरदप्रभम् ।
दधिवामनं विज्ञेयं गृहिणाञ्च सुखप्रदम् ॥
अतिक्षुद्रं द्विचक्रञ्च वनमालाविभूषितम् ।
श्रीधरं देवि विज्ञेयं श्रीप्रदं गृहिणां सदा ॥
स्थूलञ्च वर्त्तुलाकारं रहितं वनमालया ।
द्विचक्रं स्फुटमत्यन्तं ज्ञेयं दामोदराभिधम् ॥
मध्यमं वर्त्तुलाकारं द्विचक्रं वाणविक्षतम् ।
रणरामाभिधं ज्ञेयं शरतूणसमन्वितम् ॥
चतुर्द्दशचक्रं स्थूलञ्च नवीनजलदप्रभम् ।
अनन्ताख्यञ्च विज्ञेयं चतुर्व्वर्गफलप्रदम् ॥
मध्यमं सप्तचक्रञ्च छत्रतूणसमन्वितम् ।
राजराजेश्वरं ज्ञेयं राजसम्पत्करं नृणाम् ॥
चक्राकारं द्विचक्रञ्च सश्रीकं जलदप्रभम् ।
सगोष्पदं मध्यमञ्च विज्ञेयं मधुसूदनम् ॥
सुदर्शनञ्चैकचक्रं गुप्तचक्रं गदाधरम् ।
द्विचक्रं हयवक्त्राभं हयग्रीवं प्रकीर्त्तितम् ॥
अतीवविस्तृतास्यञ्च द्विचक्रं विकटं सति ।
नरसिंहाभिधं ज्ञेयं सद्यो वैराग्यदं नृणाम् ॥
द्विचक्रं विस्तृतास्यञ्च वनमालासमन्वितम् ।
लक्ष्मीनृसिंहं विज्ञेयं गृहिणां सुखदं सदा ॥
द्वारदेशे द्विचक्रञ्च सश्रीकञ्च समं स्फुटम् ।
वासुदेवञ्च विज्ञेयं सर्व्वकामफलप्रदम् ॥
प्रद्युम्नं सूक्ष्मचक्रञ्च नवीननीरदप्रभम् ।
सुषिरे छिद्रबहुलं गृहिणाञ्च सुखप्रदम् ॥
द्वे चक्रे चैकलग्ने तु पृष्ठे यत्र तु पुष्कलम् ।
सङ्कर्षणन्तु विज्ञेयं सुखदं गृहिणां सदा ॥
अनिरुद्धञ्च पीताभं वर्त्तुलञ्चातिशोभनम् ।
सुखप्रदं गृहस्थानां प्रवदन्ति मनीषिणः ॥ ७ ॥
शालग्रामशिला यत्र तत्र सन्निहितो हरिः ।
तत्रैव लक्ष्मीर्व्वसति सर्व्वतीर्थसमन्विता ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
तानि सर्व्वाणि नश्यन्ति शालग्रामशिलार्च्चनात् ॥
छत्राकारे भवेद्राज्यं वर्त्तुले च भवेत् श्रियः ।
दुःखञ्च शकटाकारे शूलाग्रे मरणं ध्रुवम् ॥
विकृतास्ये च दारिद्र्यं पिङ्गले हानिरेव च ।
लग्नचक्रे भवेद्व्याधिर्व्विदीर्णे मरणं ध्रुवम् ॥
व्रतं दानं प्रतिष्ठा च श्राद्धञ्च देवपूजनम् ।
शालग्रामशिलायाश्चैवाधिष्ठानात् प्रशस्तकम् ॥
स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ।
सर्व्वदाने च यत् पुण्यं प्रादक्षिण्ये भुवस्तथा ॥
सर्व्वयज्ञेषु तीर्थेषु व्रतेष्वनशनेषु च ।
पाठे चतुर्णां वेदानां तपसां करणे सति ।
तत् पुण्यं लभते नूनं शालग्रामशिलार्च्चनात् ॥
शालग्रामशिलातोयं नित्यं भुङ्क्ते च यो नरः ।
सुरेप्सितं प्रसादञ्च जन्मम्टत्युजराहरम् ॥
तस्य स्पर्शञ्च वाञ्छन्ति तीर्थानि निखिलानि च ।
जीवन्मुक्तो महापूतोऽप्यन्ते याति हरेः पदम् ॥
तत्रैव हरिणा सार्द्धमसंख्यं प्राकृतं लयम् ।
पश्यत्येव हि दास्येव नियुक्तो दास्यकर्म्मणि ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
तं दृष्ट्वा च भिया यान्ति वैनतेयमिवोरगाः ॥
तत्पादपद्मरजसा सद्यः पूता वसुन्धरा ।
पुंसां लक्षं तत्पितृणां निस्तरेत्तस्य जन्मनि ॥
शालग्रामशिलातोयं मृत्युकाले च यो लभेत् ।
सर्व्वपापविनिर्म्मुक्तो विष्णुलोकं स गच्छति ॥
निर्व्वाणमुक्तिं लभते कर्म्मभोगाद्विमुच्यते ।
विष्णुपादप्रलीनश्च भविष्यति न संशयः ॥
शालग्रामशिलां धृत्वा मिथ्यावाक्यं वदेत्तु यः ।
स याति कूर्म्मदंष्ट्रञ्च यावद्वै ब्रह्मणो वयः ॥
शालग्रामशिलां धृत्वा स्वीकारं यो न पालयेत् ।
स प्रयात्यसिपत्रञ्च लक्षमन्वन्तरावधि ॥
तुलसीपत्रविच्छेदं शालग्रामे करोति यः ।
तस्य जन्मान्तरे कान्ते स्त्रीविच्छेदो भविष्यति ॥
तुलसीपत्रविच्छेदं शङ्खे यो हि करोति च ।
भार्य्याहीनो भवेत् सोऽपि रोगी च सप्तजन्मसु ॥
शालग्रामञ्च तुलसीं शङ्खञ्चैकत्र एव च ।
यो रक्षति महाज्ञानी स भवेत् श्रीहरिप्रियः ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १८ अध्यायः ॥ ७ ॥
शूद्राणां तत्पूजनेऽनधिकारो यथा,—
“विप्रक्षत्त्रियवैश्यानां शालग्रामशिलार्च्चने ।
अधिकारो न शूद्राणां हरेरर्च्चार्च्चने तथा ॥”
इति तत्रैव जन्मखण्डे २१ अध्यायः ॥ ७ ॥
शालग्रामे सदा विष्णोः स्थितिस्तत्पूजने विशेषश्च
यथा,—
भूमिरुवाच ।
“उक्ता याः प्रतिमाः सर्व्वाः सुवर्णादिविनि-
र्म्मिताः ।
तासु तिष्ठसि सर्व्वासु शालग्रामे च सर्व्वदा ॥
कति पूज्या गृहादौ च अविशेषस्तु पूजने ।
विशेषो वा भवेत्तस्मिन् रहस्यं वद माधव ॥
वराह उवाच ।
गृहे लिङ्गद्वयं नार्च्चं शालग्रामद्वयं तथा ।
द्वे चक्रे द्वारकायास्तु नार्च्यं सूर्य्यद्वयं तथा ॥
शालग्रामशिला भद्या पूजनीया सचक्रका ।
खण्डिता स्फुटिता वापि शालग्रामशिला शुभा ॥
शिला द्वादश वै देवि शालग्रामसमुद्भवाः ।
विधिवत् पूजिता येन तस्य पुण्यं वदामि ते ॥
कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः ।
यत् स्यात् द्वादशकल्पेस्तु दिनेनैकेन तद्भवेत् ॥
यः पुनः पूजयेद्भक्त्या शालग्रामशिलाशतम् ।
तत्फलं नैव शक्तोऽहं वक्तुं वर्षशतैरपि ॥
शालग्रामो न स्प्रष्टव्यो हीनवर्णैर्व्वसुन्धरे ।
स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः ॥
मोहाद्‌यः संस्पृशेत् शूद्रो योषिद्वापि कदाचन ।
स पतेन्नरके घोरे यावदाभूतसंप्लवम् ॥
यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुन्धरे ।
दूरादेवास्पृशन् पूजां कारयेत् सुसमाहितः ॥
चरणामृतपानेन सर्व्वपापक्षयो भवेत् ॥
अभक्ष्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलायोगात् पावनं तद्भवेत् सदा ॥
दद्याद्ब्राह्मणाय यो देवि शालग्रामशिलां नरः ।
सुवर्णसहितां तेन सपर्व्वतवनाकरा ।
ससमुद्रा भवेद्दत्ता सत्पात्राय वसुन्धरा ॥
शालग्रामशिलायास्तु मौल्यमुद्घाटयेत् क्वचित् ।
विक्रेता क्रयकर्त्ता वा नरके वै पतेत् ध्रुवम् ॥
पूजाफलं न शक्येत वक्तुं वर्षशतैरपि ।
एतत्ते कथितं गुह्यं प्रतिमास्थापनं प्रति ॥
शालग्रामे विशेषश्च लिङ्गादीनाञ्च यो भवेत् ।
पूजनादौ विधिश्चापि किमन्यच्छ्रोतुमिच्छसि ॥”
इत्यादि वाराहे रौप्यसौवर्णार्च्चास्थापननामा-
ध्यायः ॥ ७ ॥ अथ शालग्रामशिलामूर्त्तिनिरू-
पणम् ।
“चतुर्व्विंशतिमूर्त्तिः स शालग्रामशिलास्थितिः ।
द्वारकादिशिलासंस्थो ध्येयः पूज्योऽपि वा हरिः ॥
सकामोऽभीप्सितं प्राप्य देवो वैमानिको भवेत् ।
निष्कामो मुक्तिमाप्नोति मूर्त्तीर्ध्यायन् स्तुवन्
जपन् ॥”
इत्यादि गारुडे मूर्त्तिमूर्त्तिध्यानं ४४ अध्यायः ॥
अपि च ।
“शङ्खचक्रगदापद्मी केशवाख्यो गदाधरः ।
सालकौमोदकीचक्रशङ्खी नारायणो विभुः ॥

हरिष्यति महापापं वाङ्मनःकायसम्भवम् ॥”
इति वाराहे सोमेश्वरादिलिङ्गमहिमावसूक्ति-क्षेत्रविदेशादिमहिमानामाध्यायः ॥

शालङ्कटङ्कटः, पुं, सुकेशीराक्षसः। स विद्युत्-केशिभार्याशालङ्कटङ्कटायाः पुत्रः। इति वामनपुराणम् ॥

शालङ्कायनः, पुं, (शलङ्कस्यापत्यम्। “नडादिभ्यः फक्।” ४।१।९९। इति फक्।) मुनिविशेषः। नन्दी। इति मेदिनी ॥

शालङ्कायनजीवसुः, स्त्री, व्यासमाता। यथा,—
“व्यासस्वामा सत्यवती वासवी गन्धकालिका।
योजनगन्धा दाशेयी शालङ्कायनजीवसुः ॥”
इति हेमचन्द्रः ॥

शालङ्किः, पुं, मुनिभेदः। यथा,—
“वशिष्ठोऽरुन्धतीनाथो मैत्रावरुणिरित्यपि।
शालातुरीयः शालङ्किर्दाक्षीपुत्रस्तु पाणिनिः ॥”
इति जटाधरः ॥

शालजः, पुं, (शालाज्जायते इति। जन्+डः।) शालमत्स्यः। यथा। शालः शालजगर्गकौ। इति शब्दरत्नावली ॥

शालनिर्यासः, पुं, (शालस्य निर्यासः।) सर्ज्ज-रसः। धूना इति भाषा। तत्पर्य्यायः। शालजः २ सर्ज्जः ३ सर्ज्जरसः ४। इति रत्नमाला ॥ धूनकः ५ यक्षधूपः ६ सर्ज्जमणिः ७। इति त्रिकाण्डशेषः ॥

शालपर्णी, स्त्री, (शालस्य पर्णवत् पर्णमस्याः। ङीष्।) वृक्षविशेषः। शालपानी इति भाषा। तत्पर्य्यायः। सुदला२ सुपर्णी३ स्थिरा४ सौम्या५ कुहरा६ गुहा७ ध्रुवा८ विदारिगन्धा ९ अंशुमती १० सुपर्णिका ११ दीर्घमूला १२ दीर्घपत्रिका १३ वातघ्नी १४ पीतिनी १५ तन्वी १६ सुधा १७ सर्व्वानुकारिणी १८ शोफघ्नी १९ सुभगा २० देवी २१ निश्चला २२ शीघ्रमर्निका २३ मृदुला २४ सुरूपा २५ त्रिपत्रिका २६ सुपर्णी २७ शालिपत्री २८ शालिदला २९। इति राजनिर्घण्टः। विदारी ३० सालपर्णी ३१। इत्यमरटीकायां भरतः ॥ अस्या गुणाः। त्रिदोषघ्नत्वम्। कफपित्तनाशि-त्वञ्च। इति राजवल्लभः ॥ तिक्तत्वम्। गुरु-त्वम्। उष्णत्वम्। वातदोषविषमज्वरमेहार्शः-शोफसन्तापनाशित्वञ्च। इति राजनिर्घण्टः ॥ अपि च।
“शालपर्णी स्थिरा सौम्या त्रिपर्णी पीवरा गुहा।
विदारिगन्धा दीर्घाङ्घ्रिर्दीर्घपत्रांशुमत्यपि ॥
शालपर्णी गरच्छर्द्दिज्वरश्वासातिसारजित्।
शोषदोषत्रयहरी बृंहण्युक्ता रसायनी।
तिक्ता विषहरी स्वादुः क्षतकासक्रिमिप्रणुत् ॥”
इति भावप्रकाशः ॥

शालभञ्जिका, स्त्री, (शालेन भज्यते निर्म्मीयते इति। भञ्ज+“क्वुन् शिल्पिसंज्ञयोरपूर्व्वस्यापि।” उणा० २।३२। इति क्वुन्। टापि अत इत्वम्।) काष्ठादिनिर्म्मितपुत्तलिका। (यथा, राजतरङ्गि-ण्याम्। २। ९९।
“चलोलकीर्त्तिकल्लोलदुकूलवसनोज्ज्वलाम्।
बभार यद्भुजस्तम्भो जयश्रीशालभञ्जिकाम् ॥”)
वेश्या। इति जटाधरः ॥

शालभञ्जी, स्त्री, काष्ठादिनिर्म्मितपुत्तिका। इति हेमचन्द्रः ॥

शालवः, पुं, लोध्रः। इति शब्दरत्नावली ॥

शालवेष्टः, पुं, (शालस्य वेष्टो निर्यासः।) शाल-निर्यासः। इति त्रिकाण्डशेषः ॥

शालसारः, पुं, (शालस्य सारः।) द्रुमः। हिङ्गुः। इति विश्वः ॥

शाला, स्त्री, (शो+“बहुलमन्यत्रापि संज्ञा-छन्दसोः।” इत्युणादिसूत्रेण कालन्।१।११७।) गृहम्। इत्यमरः ॥ (यथा, भागवते।५।८।२६।
“धूपामोदितशालायां जुष्टायां माल्यदीपकैः ॥”)
वृक्षस्य स्कन्धशाखा। गृहैकदेशः। इति मेदिनी ॥

शालाकी, [न्] पुं, अस्त्रवैद्यः। नापितः। शैल-धारी। इति केचित् ॥

शालाङ्गी, स्त्री, पुत्तलिका। इति शब्दरत्नावली ॥

शालाजिरः, पुं, क्ली, शरावः। इति हेमचन्द्रः शब्दरत्नावली च ॥

शालाविः, स्त्री, शाकभेदः। इति शब्दरत्नावली ॥

शालानी, स्त्री, विदारी। इति शब्दरत्नावली ॥

शालामृगः, पुं, (शालाया मृगः।) शृगालः। इति हारावली ॥

शालारं, क्ली, (शालां ऋच्छतीति। ऋ+अण्।) हस्तिनखः। सोपानम्। पक्षिपञ्जरः। इति मेदिनी ॥

शालावृकः, पुं, (शालायां गृहे शाखायां वा वृक इव।) वानरः। कुक्कुरः। शृगालः। इत्यमरः ॥ मृगः। इति शब्दरत्नावली। विडालः। इति राजनिर्घण्टः ॥

शालिः, पुं, (शालते शोभते इति। शल्+बाहुलकात् इञ्। दश्च शलम्।) गन्धमार्ज्जारः। इति मेदिनी ॥ कलमादिधान्यम् (षष्टिकादिधान्यम्। इत्य-मरः।) तत्पर्य्यायः। मधुरः २ रुच्यः ३ व्रीहि-श्रेष्ठः ४ नृपप्रियः ५ धान्योत्तमः ६ केदारः ७ सुकुमारकः ८। पुस्तकान्तरे मधुरस्थाने कलम इति पाठः। स तु दशविधः। यथा,—
“राजान्नषष्टिकसितेतररक्तमहा-
स्थूलाख्यगन्धतिरियादिकशालिसंज्ञाः।
व्रीहिस्तथेति दशधा भुवि शालयः स्यु-
स्तेषां क्रमेण गुणनामगणं ब्रवीमि ॥”
इति राजनिर्घण्टः ॥

अस्य गुणाः।
“शालयो मधुराः शीता लघुपाका बलावहाः।
पित्तघ्नाश्चानिलकफाः स्निग्धा बद्धाल्पवर्च्चसः ॥”
इति राजवल्लभः ॥

अथ शालिधान्यलक्षणम्।
“कण्डनेन विना शुक्ला हैमन्ताः शालयः स्मृताः ॥”

शालीनां नामानि यथा,—
“रक्तशालिः सकलमः पाण्डुकः शकुनाहृतः।
सुगन्धकः कर्द्दमको महाशालिश्च दूषकः ॥
पुष्पाण्डकः पुण्डरीकस्तथा महिषमस्तकः।
दीर्घशूकः काञ्चनको हायनो लोध्रपुष्पकः।
इत्याद्याः शालयः सन्ति बहवो बहुदेशजाः ॥”
अथ तेषां गुणाः।
“शालयो मधुराः स्निग्धा बल्या बद्धाल्पवर्च्चसः।
कषाया लघवो रुच्याः स्वर्य्या वृष्याश्च बृंहणाः ॥
अल्पानिलकफाः शीताः पित्तघ्ना मूत्रलास्तथा।
शालयो दग्धभूजाताः कषाया लघुपाकिनः ॥
सृष्टमूत्रपुरीषाश्च रूक्षाः श्लेष्मापकर्षणाः।
कैदाराः वातपित्तघ्ना गुरवः कफशुक्रलाः ॥
कषाया अल्पवर्च्चस्का मधुराश्च बलावहाः ॥”
कैदाराः क्षेत्रोद्भवा उक्ताः।
“स्थलजाः स्वादवः पित्तकफघ्ना वातवह्निदाः।
किञ्चित्तिक्ताः कषायाश्च विपाके कटुका अपि ॥”
स्थलजा जाङ्गलभूमिजाः स्वयंजाताः।
“वापिता मधुरा वृष्या बल्याः पित्तप्रणाशनाः ॥
श्लेष्मलाश्चाल्पवर्च्चस्काः कषाया गुरवो हिमाः ॥”
वापिताः क्षेत्रोप्ते एकक्षेत्रोप्ते च।
“वापितेभ्यो गुणैः किञ्चिद्धीना मोक्ता अवा-पिताः ॥”
अक्षेत्रोप्ते वाटक्षेत्रोप्ते च।
“रोपितास्तु नवाः वृष्याः पुराणा लघवः स्मृताः।
रोपितारोपिता भूयः शीघ्रपाका गुणाधिकाः ॥
छिन्नरूढ़ा हिमा रूक्षा बल्याः पित्तकफा-पहाः।
बद्धविट्काः कषायाश्च लघवश्चाल्पतिक्तकाः ॥”
अथ रक्तशालेर्गुणाः ॥
“रक्तशालिर्वरस्तेषु बल्यो वर्ण्यस्त्रिदोषजित्।
चक्षुष्यो मूत्रलः स्वर्य्यः शुक्रलस्तृड्ज्वरापहः।
विषव्रणश्वासकासदाहनुद्वह्निपुष्टिदः।
तस्मादल्पान्तरगुणाः शालयो महदादयः ॥”
रक्तशालिः दाउदखानी इति मगधदेशे प्रसिद्धः।
इति भावप्रकाशः ॥ (पक्षी। इत्युणादिवृत्तौ उज्ज्वलः। ४।१२७ ॥)

शालिका, स्त्री, (शालिरेव। स्वार्थे कन्।) विदा-रिका। इति शब्दरत्नावली ॥

शालिचः, पुं, शाकविशेषः। शालिचा इति भाषा। तत्पर्य्यायः। शालचः २ शितसारः ३ मत्स्येष्टः४ लोहसारकः ५। अस्य गुणाः। दीपनत्वम्। तिक्तत्वम्। शीतार्शःकफवातनाशित्वञ्च। इति राजनिर्घण्टः ॥

शालिञ्ची, स्त्री, (शालिच+स्त्रियां ङीष्।) शाकभेदः। शाञ्चे इति भाषा। अस्य प्रमाणं शौलफशब्दे द्रष्टव्यम् ॥

शालिनीकरणं, क्ली, न्यग्भावनम्। इति त्रिकाण्ड-शेषः ॥ तिरस्कार इति यावत् ॥

शालिपर्णी, स्त्री, (शालेरिव पर्णानि यस्याः। ङीष्।) माषपर्णी। इति राजनिर्घण्टः ॥

शाल्मलीकन्दः, पुं, (शाल्मल्याः कन्दः।) शाल्मलिवृक्षमूलम्। तत्पर्य्यायः। चिकुलः २ वनवासकः ३ वनवासी ४ मलघः ५ मलहन्ता ६। अस्य गुणाः। मधुरत्वम्। मलसंग्रहरोधकारित्वम्। शिशिरत्वम्। पित्तदाहार्त्तिशोषसन्तापनाशित्वञ्च। इति राजनिर्घण्टः॥

शाल्मलीफलः, पुं, (शाल्मल्याः फलमिव फलं यस्य।) तेजःफलवृक्षः। इति राजनिर्घण्टः॥

शाल्मलीवेष्टः, पुं, (शाल्मल्या वेष्टः।) शाल्मलिनिर्यासः। शिमुल आठा इति भाषा॥ तत्पर्य्यायः। पिच्छा २। इत्यमरः॥ मोचरसः ३ शाल्मलः ४ शाल्मलीवेष्टकः ५। इति रत्नमाला॥ मोचसारः ६ मोचनिर्यासः ७। अस्य गुणाः।

"मोचस्रावो हिमो ग्राही स्निग्धो वृष्यः कषायकः।

प्रवाहिकातिसारामकफपित्तास्रदाहनुत्॥"

इति भावप्रकाशः॥

शाल्मलीवेष्टकः, पुं, (शाल्मलीवेष्ट+स्वार्थे कन्।) शाल्मलीवेष्टः। इति रत्नमाला॥

शाल्वः, पुं, देशविशेषः। यथा,—

"शाल्वास्तु कारकुक्षीया मरवस्तु दशेरकाः॥"

इति हेमचन्द्रः॥

राजविशेषः। इति महाभारतम्॥ (भीष्मेण सहास्य युद्धवृत्तान्तो महाभारते आदिपर्व्वणि १०२ अध्याये तथा कृष्णेन सहास्य युद्धवृत्तान्तस्तत्रैव वनपर्व्वणि १५ अध्यायमारभ्य द्रष्टव्यः॥)

शाल्वणः, पुं, वातघ्नौषधगणविशेषः। यथा,—

'काकोल्यादिः स वातघ्नः सर्व्वाम्लद्रव्यसंयुतः।
सानूपौदकमांसस्तु सर्व्वस्नेहसमन्वितः॥
सुखोष्णः स्पष्टलवणः शाल्वणः परिकीर्त्तितः।
तेनोपनाहं कुर्व्वीत सर्व्वदा वातरोगिणाम्॥"

इति सुश्रुते चिकित्सितस्थाने ५ अध्यायः॥

शावः, पुं, (शवति शाप्यते इति। शव गतौ+घञ्।) शिशुः। इति शब्दरत्नावली॥ (यथा, रघुवंशे। ६। ३।

"शिलाविभङ्गैर्मृगराजशावः
तुङ्गं नगोत्सङ्गमिवारुरोह॥"

शवस्यायम्। शव+अण्।) शवसम्बन्धिनि, त्रि॥ यथा,—

"अहनी शावमाशौचं विसृष्टौ सौतिकं स्मृतम्।
तयोः सम्पत्तिमात्रेण उपस्पृश्य क्रियाक्रमः॥"

इति तिथ्यादितत्त्वे ब्रह्माण्डपुराणम्॥

शावकः, पुं, (शाव एव। स्वार्थे कन्।) शिशुः। इत्यमरः॥ (यथा, बृहत्संहितायाम्। ४८। १३।

"दन्ताभयहृगमृगशावकेषु सेव्याश्रमेष्वथवा॥")

शावरः, पुं, (शवराणामयम्। शवर+अण्।) पापम्। अपराधः। लोध्रवृक्षः। इति मेदिनी॥ शवरस्वामिकृतभाष्यविशेषः। शिवकृततन्त्रविशेषश्च। शवरसम्बन्धिनि, त्रि। यथा,—

"संपूज्य प्रेषणं कुर्य्यात् दशम्यां शावरोत्सवैः॥"

इति तिथ्यादितत्त्वम्॥

शावरभेदाख्यं, क्ली, ताम्रम्। इति हेमचन्द्रः॥

शावरी, स्त्री, शूकशिम्बी। इति मेदिनी॥

शावरोत्सवः, पुं, (शावराणामुत्सवः।) म्लेच्छकृतोत्सवः। यथा,—

"पूजयित्वा महाष्टम्यां नवम्यां बलिभिस्तथा।
विसर्ज्जयेत् दशम्यां तु श्रवणे शावरोत्सवैः॥
अन्त्यपादो दिवाभागे श्रवणस्य यदा भवेत्।
तदा संप्रेषणं देव्या दशम्यां शावरोत्सवैः॥
रागिणीभिः कुमारीभिर्वेश्याभिर्नर्त्तकैस्तथा।
शङ्खतूर्य्यनिनादैश्च मृदङ्गैः पटहैस्तथा॥
ध्वजैर्वस्त्रैर्बहुविधैर्लाजपुष्पप्रकीर्णकैः।
धूलीकर्द्दमविक्षेपैः क्रीडाकौतुकमङ्गलैः॥
भगलिङ्गविधानैश्च भगलिङ्गप्रगीतकैः।
भगलिङ्गादिशब्दैश्च क्रीडयेयुरलं जनाः॥
परैर्नाक्षिप्यते यस्तु यः परं नाक्षिपत्यपि।
क्रुद्धा भगवती तस्य शापं दद्यात् सुदारुणम्॥"

इति कालिकापुराणे उत्तरतन्त्रे ६० अध्यायः॥

शाश्वतं, त्रि, (शश्वद्भवम्। शश्वत्+अण्।) नित्यम्। इत्यमरः॥ (यथा, रामायणे। १। २। १५।

"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥")

पारिभाषिकशाश्वतं यथा,—

"शाश्वतं देवपूजादि विप्रदानञ्च शाश्वतम्।
शाश्वतं सगुणा विद्याः सुहृन्मित्रञ्च शाश्वतम्॥"

इति गारुडे नीतिसारे १०९ अध्यायः॥

शाश्वतः, पुं, वेदव्यासः। इति शब्दरत्नावली॥ (शिवः। यथा महाभारते। १३। १७। ३२।

"प्रवृत्तिश्च निवृत्तिश्च नियतः शाश्वतो ध्रुवः॥")

शाष्कुलः, त्रि, मांसाशी। इति हेमचन्द्रः॥

शाष्कुलिकं, क्ली, (शष्कुल+समूहार्थे ठक्।) शष्कुलिसमूहः। इत्यमरः॥

शास, उ ष लु शासने। इति कविकल्पद्रुमः॥ (अदा०-पर०-सक०-सेट्। क्त्वावेट्।) उ, शासित्वा शिष्ट्वा। ष, शासति। लु, शास्ति। शास्ति यच्छाज्ञया राज्ञः स सम्राडित्यमरः। इति दुर्गादासः॥

शास ङ उ } आशिषि। इति कविकल्पद्रुमः॥
शास ल ङ } (भ्वा०-अदा० च-आत्म०-सक०-सेट्।) आङ्पूर्व्वो इति केवलानामन्यपूर्व्वाणाञ्च प्रयोगनिरासार्थम्। किन्तु इदं गुरुभ्यः पूर्व्वेभ्यो नमो वाकं प्रशास्महे। इत्युत्तरचरितं प्रपूर्व्वोऽपि दृश्यते। ङ, आशासते। उ, आशासित्वा आशास्त्वा। पञ्चमस्वरानुबन्धसामर्थ्यात् क्त्वाप्रत्ययस्य न यप् समासाभावादिति गोविन्दभट्टः। किन्तु अस्य उदनुबन्धफलं छन्दस्येवेति धातुप्रदीपः। ल ङ, आशास्ते शास डिहस टि इत्यत्र ञ्यादीयशास्तेरेव ग्रहणादस्योपधाया इकारो न स्यात्। आशीरिष्टार्थाशंसनम्। इच्छायामित्यन्ये। इति दुर्गादासः॥

शासनं, क्ली, (शास+ल्युट्।) आज्ञा। (यथा, मनौ। ९। २३२।

"कुर्व्वीत शासनं राजा सम्यक् सारापराधतः॥")

तत्पर्य्यायः। अववादः २ निर्द्देशः ३ निदेशः ४ शिष्टिः ५। इत्यमरः॥ शास्तिः ६। इति भरतः॥ आदेशः ७ आदेशनम् ८। इति शब्दरत्नावली॥ शास्त्रम् ९। इति जटाधरः॥ राजदत्तभूमिः। लेखा। शास्त्रम्। शास्तिः। इति मेदिनी॥ (दानलिखितताम्रफलकादिः। यथा, कथासरित्सागरे। १२४। ६२-६३।

"शासनं लेखयित्वा च तमेवं स समादिशत्।
ॐकारपीठमार्गेण भद्र गच्छोत्तरां दिशम्॥
तत्रानुगं शासनेन ग्रामं युष्मन्मदर्पितम्।
नाम्ना तं खण्डवटकं दृष्ट्वा गच्छमयाचमि॥"

यथाच मार्कण्डेये। ३६। ८।

"वाच्यं ते शासनं पत्रे चुडाधरनिवेशितम्॥"

त्रियां धर्म्मोपदेशकर्त्री। यथा, ऋग्वेदे। १। ३१। ११।

"इलामकृण्वन्मनुषस्य शासनीम्॥")

शासनहरः, पुं, (हरतीति। हृ+अच्। शासनस्य हरः।) राजदूतः। आज्ञावाहकः। इति केचित्॥

शासितः, त्रि, (शास+क्तः।) कृतशासनः। यथा,

"सुनीतिमार्गं सुविचक्षणः सुतः
सुशासिता स्त्री नृपतिः सुसेवितः।
सुचिन्त्य चोक्तं सुविचार्य्य यत् कृतं
सुदीर्घकालेऽपि न याति विक्रियाम्॥"

इति पञ्चरत्नम्॥

शासिता, [ऋ] त्रि, (शास+तृच्।) शास्ता। इति त्रिकाण्डशेषः॥ (यथा, मनौ। ७। १७।

"स राजा पुरुषो दण्डः स नेता शासिता च सः॥"

आज्ञाता। यथा, तत्रैव। २। १५०।

"ब्राह्मस्य जन्मनः कर्त्ता स्वधर्म्मस्य च शासिता॥")

शास्ता, [ऋ] त्रि, (शास+"तृन्तृचौ शंसीति।" उणा० २। ९४। इति असंज्ञायामपि तृन्। स च अनिट्।) शासनकर्त्ता। तत्पर्य्यायः। देशकः २ शासिता ३। इति त्रिकाण्डशेषः॥ यथा,—

"द्वौ धाता च विधाता च पौराणौ जगतः पती।
द्वौ शास्तारौ त्रिलोकेऽस्मिन् धर्म्माधर्म्मौ प्रकीर्त्तितौ॥"

इति वह्निपुराणे गणभेदनामाध्यायः॥ (यथा च भागवते। १। १२। २६।

"राजर्षीणां जनयिता शास्ता चोत्पथगामिनाम्॥")

शास्ता, [ऋ] पुं, (शास+"तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ।" उणा० २। ९४। इति तृन्। स च अनिट्।) बुद्धः। इत्यमरः॥ उपाध्यायः। राजा। पिता। इति संक्षिप्तसारोणादिवृत्तिः॥

शिलाभवं, क्ली, ( शिलाया भवः उत्पत्तिर्यस्य । ) शैलेयम् । इति जटाधरः ॥

शिलाभेदः, पुं, (शिलां भिनत्तीति । भिद् + अच् ।), पाषाणभेदी वृक्षः । इति रत्नमाला ॥ प्रस्तरभेदकास्त्रे, क्ली ॥

शिलारम्भा, स्त्री, ( शिलेव दृढ़ा रम्भा । ) काष्ठकदली । इति राजनिर्घण्टः ॥

शिलावल्का, स्त्री, ( शिलेव कठिनो वल्को यस्याः ।) ओषधद्रव्यविशेषः । शिलावाक् इति हिन्दी भाषा । तत्पर्य्यायः । शिलजा २ शैलवल्कला ३ वल्कला ४ शैलगर्भाह्वा ५ शिलात्वक् ५ श्वेता ७ । अस्या गुणाः । हिमत्वम् । स्वादुत्वम् । कृच्छ्रमेहमूत्ररोधाश्मरीशूलज्वरपित्तनाशित्वञ्च । इति राजनिर्घण्टः ॥

शिलाव्याधिः, पुं, (शिलाया व्याधिरिव । ) शिलाजतु । इति त्रिकाण्डशेषः ॥

शिलासनं, क्ली, (शिला आसनं यस्य ।) शैलेयम् । इति शब्दरत्नावली ॥ प्रस्तरनिर्म्मितासनञ्च ॥

शिलासारं, क्ली, ( शिलावत् सारो यत्र । ) लौहम् । इति हेमचन्द्रः ॥

शिलाह्वं, क्ली, ( शिला इत्याह्वा यस्य । ) शिलाजतु । इति भावप्रकाशः ॥

शिलिः, पुं, भूर्ज्जपत्रवृक्षः । इति शब्दमाला ॥

शिलिः, स्त्री, द्वाराधःस्थितकाष्ठम् । इति शब्दरत्नावली ॥ गोवराट् इति भाषा ॥

शिलिन्दः, पुं, मत्स्यविशेषः । यथा,—

"शिलिन्दः श्लेष्मलो वल्यो विपाके मधुरो गुरुः ।
आमवातकरो हृद्यो वातपित्तहरो मतः ॥"
इति राजवल्लभः ॥

शिली, स्त्री, ( शिलि + कृदिकारादिति ङीष् । ) द्वाराधःस्थितकाष्ठम् । ) इति शब्दरत्नावली ॥ गण्डूपदी । स्तम्भशीर्षम् । इति मेदिनी ॥

शिलीन्ध्रं, क्ली, कदलीपुष्पम् । ( यथा, माघे । ६ । ३२ ।

"नवकदम्बरजोरुणिताम्बरै-
रधिपुरन्ध्रिशिलीन्ध्रसुगन्धिभिः ॥")

करका । इति मेदिनी ॥ त्रिपुटा । इति विश्वः ॥

शिलीन्ध्रः, पुं, वृक्षविशेषः । इति मेदिनी ॥ मत्स्यविशेषः । स तु चित्रफलकमत्स्यः । इति जटाधरः ॥

शिलीन्ध्रकं, क्ली, गोमयच्छत्रिका । यथा,—

"गोमयच्छत्रिकामाहुर्द्दिलीरञ्च शिलीन्ध्रकम् ।"
इति हारावली ॥

शिलीन्ध्री, स्त्री, विहगीभेदः । गण्डूपदी । मृत्तिका । इति मेदिनी ॥

शिलीपदः, पुं, ( शिलीव स्थूलं पदमस्मात् ।) पादरोगविशेषः । गोद इति भाषा । तत्पर्य्यायः । महागलोरः २ श्लीपदः ३ । इति शब्दरत्नावली ॥ पादवल्मीकः ४ । इति हेमचन्द्रः ॥ श्लीपदस्य विप्रकृष्टं निदानमाह ।

"पुराणोदकभूयिष्ठाः सर्व्वर्त्तुषु च शीतलाः ।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥"

विशेषत इति वचनेनान्यत्रापि श्लीपदानि भवन्ति इति बोध्यते ॥ * ॥ सामान्यं लक्षणमाह ।

"यः सज्वरो वंक्षणजो भृशार्त्तिः
शोथो नृणां पादगतः क्रमेण ।
तत् श्लीपदं स्यात् करकर्णनेत्र-
शिश्नौष्ठनासास्वपि केचिदाहुः ॥"

तत्त्रिविधम् । वातिकं पैत्तिकं श्लैष्मिकञ्चेति । तेषां लक्षणमाह ।

"वातजं कृष्णरूक्षं हि स्फुटितं तीव्रवेदनम् ।
अनिमित्तरुजञ्चास्य बहुशो ज्वर एव च ॥ * ॥
पित्तजं पीतसङ्काशं दाहज्वरयुतं भृशम् ॥ * ॥
श्लैष्मिकन्तु भवेत् स्निग्धं तथा पाण्डु गुरु स्थिरम् ॥
त्रीण्यप्येतानि जानीयात् श्लीपदानि कफो-
च्छ्रयात् ।
गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना कफात् ॥"

असाध्यमाह ।

"वल्मीकमिव संजातं कण्टकैरुपचीयते ।
सर्व्वात्मकं महत्तच्च वर्ज्जनीयं विशेषतः ॥
यत् श्लेष्मलाहारविहारजाते-
र्जातं तथा भूरिकफस्य पुंसः ।
सास्रावमत्युन्नतसर्व्वलिङ्गं
सकण्टकं वापि विवर्ज्जनीयम् ॥"

अस्य चिकित्सा ।

"लङ्घनालेपनस्वेदरेचनै रक्तमोक्षणैः ।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥
सिद्धार्थशोभाञ्जनदेवदारु-
विश्वौषधैर्मूत्रयुतैः प्रलिम्पेत् ।
पुनर्नवा नागरसर्षपाणां
कल्केन वा काञ्जिकमिश्रितेन ॥"

श्लीपदमिति शेषः ।

"धत्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् ॥
असाध्यमपि यात्यन्तं श्लीपदं चिरकालजम् ।
मूलेन सहचरायाः तालमिश्रेण लेपनात् ॥"

तालस्य फलरसो ग्राह्यः ।

"सप्तलास्नुक्पत्राणां कल्कं तक्रेण वारिणा ।
संसृष्टं लवणोपेतं सेवितं श्लीपदं हरेत् ॥
शाखोटवल्कलक्वाथं गोमूत्रेण युतं पिबेत् ।
श्लीपदानां विनाशाय मेदोदोषनिवृत्तये ॥
रजनीं गुडसंयुक्तां गोमूत्रेण पिबेन्नरः ।
वर्षोत्थं श्लीपदं हन्ति दद्रुकुष्ठं विशेषतः ॥
वर्षाभूत्रिफलाचूर्णं पिप्पल्या सह योजितम् ।
सर्व्वाङ्गं श्लीपदं लिङ्गाश्चिरोत्थं श्लीपदं जयेत् ॥
गन्धर्व्वतैलसिद्धां हरीतकीं गोऽम्बुना पिबति ।
श्लीपदविबन्धमुक्तो भवत्यसौ सप्तरात्रेण ॥"

गन्धर्व्वतैलं एरण्डतैलम् । गोऽम्बुना गोमूत्रेण । इति भावप्रकाशः ॥

शिलीमुखः, पुं, ( शिलीव मुखं यस्य । ) भ्रमरः । ( यथा, रघुः । ४ । ५७ ।

"कटेषु करिणां पेतुः पुन्नागेभ्यः शिली-
मुखाः ॥")

वाणः । इत्यमरः ॥ ( यथा, महाभारते । ४ । ४० । ११ ।

"कस्यायं शायको दीर्घः शिलीपृष्ठः शिलीमुखः ॥")

मूढम् । जड़ीभूतः । इति शब्दरत्नावली ॥

शिलेयं, क्ली, ( शिलायां भवम् । शिला + ढः । ) शैलजम् । इति शब्दरत्नावली ॥ शिलाकल्पिनि, त्रि ॥ ( शिलेव + "शिलाया ढः ।" ५ । ३ । १०२ । इति ढः । शिलासदृशे च त्रि ॥ यथा, शिलेयं दधि । इति काशिका ॥ )

शिलोच्चयः, पुं, (शिलाया उच्चयो यत्र ।) पर्व्वतः । इत्यमरः ॥ ( यथा, रघुवंशे । २ । २७ ।

"न पादपोन्मूलनशक्तिरंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥")

शिलोञ्छः, पुं, उञ्छशिलम् । उपात्तशस्यात् क्षेत्रात् शेषावचयनम् । उञ्छेन परित्यक्तादानवदुग्रहणेन शिल्यते सञ्चीयते उञ्छशिलम् । उछि शुञ्छे शिल शुञ्छे कृद्योरित्युक्ते इगु ग ञेति इगुपधत्वात् कः उञ्छशिलं संघातविगृहीतं विपर्य्यस्तम् ।

"शक्यं न चेदुञ्छशिलेन वृत्तिः
फलेन मूलेन च वारिणा च ।"

इति समाहारद्वन्द्वे । उञ्छं शिलञ्च ।

"उञ्छमेतच्च यथान्यत् तत् परिग्रहणं त्विदम् ;"

इति निगमाभिधाने क्लीवं पुमानुञ्छ ऋतं शिलं इति श्रीपालिते पुंस्युञ्छः ।

"रघुकाराद्भुतसारे
परिणतवाक् कल्पकेदारे ।
भवभूतिकृतशिलोञ्छे
वयमपतितं वयं चिनुमः ॥"

इति गोवर्द्धनः । केचिदुञ्छशिलयोर्भेदमाहुः । प्रतिग्रहात् शिलं श्रेयस्ततोऽप्युञ्छः प्रशस्यते इति । तत्र शाल्यादेर्निपातितपरित्यक्तमञ्जरीणां आदानं शिलम् । शिलं धान्यमञ्जरीसंग्रह इति स्वामी च । एकैकशः कपोतवद्धान्यकणोद्ग्रहणमुञ्छः । तदुक्तं उञ्छो धान्यकणोच्चयः इति । शिलं तालव्यादि दन्त्यादि च । इत्यमरटीकायां भरतः ॥ (यथा, मनौ । ७ । ३३ ।

"एवं वृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः ।
विस्तीर्य्यते यशो लोके तैलविन्दुरिवाम्भसि ॥")

शिलोत्थं, क्ली, ( शिलाया उत्तिष्ठतीति । उत् + स्था + कः । ) शैलेयम् । इति राजनिर्घण्टः ॥

शिलोद्भवं, क्ली, ( शिलाया उद्भवो यस्य । ) शैलेयम् । इति राजनिर्घण्टः ॥ चन्दनविशेषः । यथा,—

"सुशीतलं चन्दनं यत् तैलपर्णिकमुच्यते ।
उभौ च तस्य पर्य्यायौ सोमयोनि शिलोद्भवम् ॥"
इति शब्दचन्द्रिका ॥

शिलौकाः, [स्] पुं, ( शिला पर्व्वतः ओकः आस्थानं यस्य । ) गरुड़ः । इति त्रिकाण्डशेषः ॥

शिल्पं, क्ली, ( शील समाधौ + "खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः ।" उणा० । ३ । २८ । इति

शिल्पशा

ईशानभागे चरकी द्वितीये
विदारिका पूतनिका तृतीये ।
पापाभिधा मारुतकोणके तु
पूज्या सुरा उक्तविधानतस्तु ॥ * ॥
ब्रह्मा वेदपदस्तु तेन समका देवार्यमाद्यास्तमी
कोणाद्यौ द्विपदास्तथाष्टमरुत कोणोऽर्द्धभागाद्
बहि ।
ष्ट्रेषा एकपदा सुरास्तु कथिता वेदर्तुके ६४
ऽन्यो नव
ब्रह्मा षट्पदिनोऽर्यमादिविबुधा ईशादयश्चै-
कश ॥
ब्रह्मा कलांशो वसुनोऽर्यमाद्या
कोणेऽष्ट चान्येऽपि च सार्द्धभागा ।
त्रिधात्मकोणे द्विपदास्तथान्ये
यथा सुरा एकपदा प्रमाणे ॥*॥
ब्रह्माजिनांश२४ उदित शिवतोऽर्यमाद्या
कोणेषु सार्द्धपदतोऽपि तथैव चान्ये ।
श्लेषा द्विभागसमका रविभागकोऽथ
पूज्यो दशाश्वगजवाहनकेऽपुयक्ते ।
यत्ते त्रयोऽन्यपदेऽपि पूजनीय
कृत पञ्चविंशतिरजो दशतोऽर्यमाद्या ।
कोणेऽथयोऽमरगणा बहिके कलांशा
भद्रेऽब्धिक रविविभागपरे द्विभागा ॥*॥
दाक्षिणत कमलासनोऽर्यमसुखा स्यु सूर्य
भागा क्रमात
कोणेऽन्येऽष्टसुरा द्विभागसहिता वाह्येषु
सार्द्धाशका ।
अन्ये रामपदा पुनर्द्विपदका षड् भागिनोऽन्ये
सुरा
चेत्ते षण्वचन्द्रभागसहिते १९६ स्यादुदेवतानां
क्रम ॥ * ॥
वन्यांशो त्रिशिरधर्मप्रभृतयस्तथा नवस्वष्टक
कोणेऽन्येऽष्टपदार्द्धगा परसुरा षड्भागहीने
पदे ।
वास्तोनन्दयुगांश ४९ एवमधुनाद्यैश्चैवतु
मण्डिके
सर्वे एवमितान् सुधी परिहरेद्वित्तीस्तुला
स्तम्भकान् ॥ * ॥
रेखाद्वय कोणगत विधेय
मध्यान्तरेणैव तु कथयस्थान ।
यन्त्रसंस्थे कथित तु पद्म
तस्मोत्पात स्वामिधनप्रणाश ।
प्रोक्त चतुर्विंशतिसाङ्गुल यत
पादार्द्धग द्वारिकर प्रमाथा ।
वंशभिस्तु स्तम्भैरथाय यत्र
कोणे त्रिशूलश्च रिपोर्भयाय ।
परीक्ष्य भूमीमतस्थपतिना
सुपथ्याथेन ततो विलेख्या ।
रेखा सुवर्णेन मणिप्रवाले
पिष्टाक्षतैश्चापि पुनरुद्धृत्य ।
द्वात्रिंशदशा एषुखे च दैर्घ्ये
कोणाद् वर्ण्या जिनपंक्य२४भागा ।

शिल्पशा

एतत्पदानां कथित सवस्त्र
चैतच्च सर्वेतमभेव वास्तो ॥ * ॥
मध्ये ब्रह्मा पूजनीय शतांशै-
श्चत्वारिंशद्भि पदैर्न्याह्यवीथ्यो ।
प्रोक्ता देवा अर्यमाद्या अशीत्या
मध्ये कोणेऽन्ये शत चाष्टषष्ठ्या ।
कोणेऽष्टयो नन्दपदे सुराश्च
पैशाच्च वाह्ये वसुभागिनश्च ।
वीथ्यौ च वाह्ये रविभागयुक्त
शत पदानां कथित सुधीन्द्रै ।
दुर्गप्रतिष्ठाविषय नियम्य
तथा महाचैत्य च कोटिहोमे ।
मेरौ च राष्ट्रेष्वपि ज्योतिर्लिङ्गे
वास्तु सहस्रेण पदै प्रपूज्य ॥*॥
त्रिमेखल श्रद्धरत्निभाग
कुण्ड प्रकुर्यात करतो गुणाष्टम ।
होम सुराणां पानसहस्रयुक्त
प्रत्येकमष्टाधिकविंशति वा ।
सध्वाज्यदध्नैदधिपकराद्यो
लाजोत्तिलैरोहिथवैर्नवाने ।
पलाशदूर्वाकुरदुग्धवृक्षै
होम तन्त्रे सुरपूजनञ्च ।
ईशे घृताक्षमपरे घृतान्नञ्च
दद्यात्पयाथ चरिताम्बरमेव कुम्भम ।
हव्यानि पिष्टकमय कृशिष सुरेन्द्रे
धूम्र वितानमुग्नञ्च दिवाकरस्य ।
गोधमयुक्त घृतमेव मध्ये
सत्यान् भृशं प्रक्षालिमशरीष्टे ।
वहौ स्रुव पूषि तथैव लाजा
दद्याद्धर्म चणकौदनञ्च ।
मध्वन्नञ्च गृहक्षताय यमतो मांसौदन दापयेत
गन्धर्वे शतपत्रमोदकयुत भृङ्गेऽथवास्त्री तथा ।
प्रोक्ता नीलपदा मृगाय पितृभ्यो दद्याञ्च सक्तो
दका
पैष्ट लपार्थकि तथैव विधिवद्दद्याच्च दौवारिके ।
सुग्रीवाय च धूपका गणवरे श्वेतप्रसून पद
पद्म वारुणके सुराप्यसुरके तैल तिला शोषके ।
पापाक्षेऽपि च पक्कमांसमुदित रोगाय सर्व्वौ
षधी
गोश्चीरं फणिने च मुख्यविबुधे क्षीरक्षमश्चैव
तथा ।
भल्लाटाय सुवर्णक धनपतौ सकलाश्च दुग्धं तथा
शक्रून् पर्वतकेऽदितेस्तु लपिका दद्याद्दितौ
पूरिकाम् ।
सक्षीर दधिक क्रमेण विहित त्वापापवत्से तथा
घृतमूलोऽदमणश्चन्दनञ्च पयसा युक्ता तथा
शर्करा ।
सावित्रेऽपि च लड्डुकाश्च सवितु पूपा गुडा
सद्घृता
एव वाथ विवस्वते घृतयुत दुग्ध तथा मोदका ।
इन्द्राख्ये कुसुमसगन्धलयके देय तथा चम्पक
मैत्रे दग्धघृतञ्च गुग्गुलुयुतो गन्धस्तथा रुद्रके ।

शिल्पशा

तत्सिद्धमन्नञ्चपि रुद्रदासे
सन्नत्रमालो पृथिवीधराय ।
पयश्चर्णा शाकमन्तं घटञ्च
दद्याद्विधौ सर्वमतोऽखिलेभ्य ।
सुराञ्च मांस विहित चरक्यै
तथैव पैतौऽन्यको विदार्यै ।
रक्तौदनै पूतनिकार्चनीया
सन्धारमचेनापि तथैव पापा ।
मांस दत्त पिलिपिञ्जाय सजम्भाथै विहित
मद्य ।
स्कन्दाय तन्दिशायुक्त चाथमयी दिशि
पूर्व्वाह्णे ।
य पूजयेद्वास्तुमन्त्रयुक्ता
। तस्य दु ख भवतीह किञ्चित ।
सौख्यमौ नवैभ्यश्च सुखेन
स्वर्ग गच्छत्युनि कल्पमेकम् ।”
इति श्रीधनधारमण्डनविरचिते वास्तुशास्त्रे
राजवल्लभ वास्तुलक्षणम् ०[ध्या याय ॥ * ॥
“आयर्क्षव्ययतारकांशकविधु राशि एवाद्य
तथा
धाम्नं सौख्यप्रदोऽभिहितादिप्रिका यत्नादत
कथ्यत ।
आयास्तु ध्वजधूमसिंहशुनका गोराषभभा
क्रमात
ध्वाङ्क्षान्तम आयमेषु विषमा श्रेष्ठा सुराणां
गृहे ।
मान देवगृहादिभूपसदने प्राक्रोक्तहस्तेन तत
गेहे कर्मकरस्य नायकरत प्राखेण देय गृह ।
मध्यो दशकराङ्गुलादिमपि ते हस्ताङ्गुलैरग्रत
शेषस्याङ्गुमानतोऽपि नगर दत्तेन मान पुर ।
आय कल्प्यो हस्तमेये करैश्च
वेश्मे मानान्निर्मिते मात्रकाभि ।
मध्ये पद्मकामने मन्दिर च
देवागारे मण्डप भित्तिबाह्ये ।
ऊर्ध्वे देवगृह द्विजस्य भवने स्याद्वेदिकायां जले
विस्तारोच्छ्रयवस्त्रभूषणमठागारेषु शस्तो ध्वज ।
धूमो वह्न्युपजीविनामपि गृहे कुण्डे च होमो
ऽग्न
सिंहद्वारनृपालयेऽस्त्रनिचये छत्रञ्च सिंहा
सने ।
चण्डाले शुनको विशास्तु वृषभो हर्म्ये दयान्वि
हिता
वाणिज्ये वणभोजनस्य भवनेऽथो वान्यगेहे
खर ।
वादित्रे खरजीविनामपि गृहे श्रोहे गजो
योगिनो
याने स्त्रीगृहवाहन च शयने शस्तो गृहे हस्ति
नाम ।
ध्वाङ्क्ष शिल्पितपस्विनो द्विजवरस्तेषां मुख
नामवन्
ध्वाङ्क्ष काकमुखो विडालवदनो धूमो ध्वजो
मानुष ।

सर्व्वे पक्षिपदा हरेरिव गजो हस्तौ नरस्यैव तु
श्वाद्या: खद्दिगता: क्रमेण पतयो ध्वस्रौ च ते सम्मुखा: ॥७॥
देया: सिंहगजध्वजादिवृषभे सिंहध्वजौ कुञ्जरे
सिंहो वै ध्वज इष्यते न वृषभोऽन्यत्रापि देयो बुधै: ।
सिंहो हस्तिदृपालये न्टतिकरस्त्वायस्य वाह्यं गृहं
तस्मिन्नेव च वामदक्षिणदिशाद्वारे स च्याय: शुभ: ॥
च्यासे दैर्घ्यगुणेऽष्टभिर्विभजिते शेषो ध्वजाद्याय को-
ऽष्टघ्ने तद्गुणिते च धिष्ण्यभजिते स्यादृक्षमश्व्यादिकम् ।
नक्षत्रे वसुभिर्व्ययोऽपि भजिते हीनस्तु लक्ष्मीप्रद-
स्तुल्यायश्च पिशाचको ध्वजगृहे संवर्द्धितो राक्षस: ॥
नक्षत्रे व्ययदृक्मांशनामसहिते भक्ते त्रिभिस्त्वंशक:
स्यादिन्द्रोपमभूपतिक्रमवशाद्देवे सुरेन्द्रो हित: ।
वैश्यामेव यमस्तु पुण्यभवने नागे तथा भैरवे
राजांशो गजवाजियाननगरे राजालये मन्दिरे ॥८॥

यावद्गृहर्क्षं गणयेत् स्वधिष्ण्या-
त्ताराविभक्ते नवभिश्च शेषा: ।
बुधैस्तृतीया सकले विवर्ज्या
या पञ्चमी सप्तमिका न शस्ता ॥

धिष्ण्यानीह च सप्तशः क्रमतया वह्नेस्तु पूर्व्वादित:
स्पष्टा तानि भवन्ति यत्र गृहभं तत्रैव चन्द्रो भवेत् ।
हानिं पृष्ठगत: करोति पुरतस्त्वायु:क्षयं चन्द्रमा:
पार्श्वे दक्षिणवामके शुभकरोऽग्रे देवभूपालये ॥
प्रीति: स्यात् समसप्तमी च दशमी चैकादशी शोभना
दारिद्र्यं युगला करोति मरणं षष्ठी कलि: पञ्चमी ।
मेषोऽश्विन्नित्रये हरिस्तु पितृभाच्चापश्चये मूलत:
शेषै: स्युर्नव राशय: परमते नन्दांशकैस्ते पृथक् ॥
भौमो वृश्चिकमेषयो:र्वृषतुले शुक्रस्य राशिद्वयं
कन्या युग्मबुधस्य कर्कसदनं चन्द्रस्य सिंहो रवे: ।
जीवो मीनधनु:पतिर्म्मृगघटौ मन्दस्य गेहं स्मृतं
मित्राण्यर्कशशीन्दुदेवगुरवोऽन्ये चारयस्ते मिथ: ॥
दैवर्क्षं श्रुतिपुष्यभेऽश्विभमृगं मैत्रानिलं पौष्णभं
हस्तादित्यमघोऽनुरन्तकविधी पूर्व्वोत्तरा रुद्रभम् ।
रक्षोमूलविशाखिकाग्निपितृभं चित्रा धनिष्ठाद्वयं
ज्येष्ठाश्लेषमपीह दैत्यमनुजे न्टत्युस्तु देवे कलि: ॥
वैरं चोत्तरफल्गुनीयुगलयो: स्वातीभरण्योर्द्वयो
रोहिण्युत्तरषाढयो: श्रुतिपुनर्व्वस्वोर्विरोधं तथा ।
चित्राहस्तभयोश्च पुष्यफणिनोर्ज्येष्ठाविशाखाख्ययो:
प्रासादे भवनासने च शयने नक्षत्रवैरं त्यजेत् ॥
विप्रा: कर्कझषालिनो निगदिता: सिंहाजचापा नृपा
विट्कन्या मकरो वृषोऽथ वृषला युग्मश्च कुम्भस्तुला ।
वर्णेनोत्तमकामिनी च भवनं वर्ण्यं बुधैर्यत्नत:
श्रेष्ठा द्वादश नन्दराशियुगतो विप्रक्रमाद्राशय: ॥
अश्वोऽश्विनीशतभयोर्यमपुष्ययोश्च
छागोऽग्निपुष्य उरगोऽपि विधात्रसौम्ये ।
मूलार्द्रयो: शुनक ओतुरथादितिश्च
पूर्व्वा मघासु मत उन्दुरकैव योनि: ॥
गौर्भद्रोत्तरफल्गुनीत उदिता स्वातौ करे माहिषी
व्याघ्रस्त्वाष्ट्रविशाखयोश्च हरिणो ज्येष्ठानुराधाभयो: ।
पूषाढत्रवके कपिर्निगदितो वैश्वाभिजिन्नाकुलं
पूभाद्रां नसुभे न्टगेन्द्र उदितो वैरं त्यजेल्लोकत: ॥
आयर्क्षतारा व्ययमंशकञ्च
लोकत्र हत्वा विभजेत् क्रमेण ।
तिथ्या च वारेण तथैव लग्नै:
शेषैस्तु भान्येव भवेयुरङ्कै: ॥
दैर्घ्यं पृथुत्वेन च ताडनीयं
तयोर्यदैक्यं पुनरङ्कयेण ।
शेषेऽधिनाथो वसुभाजितेऽस्मिन्
सम: प्रशस्तो विषमस्तु नैव ॥ ७ ॥
वर्गाष्टकस्य पतयो गरुडो विडाल:
सिंहस्तथैव शुनकोरगमूषकैणा: ।
मेढ़ाककारच-ट-ता: प-य-शाश्च वर्गा
य: पञ्चम: स रिपुरेव बुधैर्निवर्ण्य: ॥
अश्विन्यादिकभत्रयं फणिनिभं चक्रं त्रिनाड्यु-द्भवं
लेकस्यां वरकन्ययोश्च यदि भं तन्मृत्युदं चांशत: ॥
नाड़ीसैवकमित्रगेहपुरतस्त्वेका शुभा सर्व्वथा
व्यायादित्रिकपञ्चसप्तनवभिस्त्वङ्गैर्गृहं सौख्यदम् ॥
गुणगणं लघुदोषसमन्वितं
भवनदेवगृहादिकमिष्यते ।
जललवेन शिखी बहुनापवा-
न्न शममेति गुणैरधिको यत: ॥"

इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे राजवल्लभे व्यायादिलक्षणं ३ अध्याय: ॥

"वापीकूपतड़ागदेवभवनान्यारामयागादिकं
तीर्थानामवगाहनञ्च विधिवत् कन्याप्रदानादिकम् ।
सर्व्वं पुण्यमिदं नृप: स लभते य: कारयेत् पर्व्वते
दुर्गं सर्व्वजनाय शर्म्मजननं विश्राममेकं परम् ॥
सिंहो वैरिपराभवं प्रकुरुते तिष्ठन् गिरौ गह्वरे
दुर्गस्थो नृपति: प्रभूतकटकं शत्रुं जयेत् सङ्गरे ।
कैलासे नगरं शिवेन रचितं गौर्य्यादिसंरक्षणे
दुर्गं पश्चिमसागरे च हरिणाप्येषां किमत्रोच्यते ॥
भूदुर्गं जलदुर्गमद्रिविषये दुर्गं भवेद्गह्वरे
तेषामुत्तममद्रिमूर्द्धि रचितं तद्वैरिणां दुर्गमम् ।
अन्नाद्यैर्घृततोयतैलवर्गे: काष्ठैस्तृणाद्यैस्तथा
यन्त्रोपस्करबाणशस्त्रसुभटै: संपूरयेद्भूमिप: ॥
माहेन्द्रं चतुरस्रमायतपुरं तत् सर्व्वतोभद्रकं
वृत्तं सिंहविलोकनं सुवृत्तमायत्तं तथा वारुणम् ।
नन्दाख्यञ्च विरुक्तकोणमथ नन्द्यावर्त्तसंस्थाकृति
प्रोक्तं तद्यववज्जयन्तमपि तद्द्वियं गिरेर्मस्तके ॥
पुष्यं चाष्टदलोपमञ्च पुरुषाकारं पुरं पौरुषं
दीर्घं कुक्षिषु भूधरस्य कथितं दण्डाभिधं दैर्घ्यकम् ।
शान्तं प्राक् सरिता परत्र कमलं याम्ये नदी धार्म्मिकं
द्वाभ्यां चैव महाजयञ्च धनदाशायां नदी सौम्यकम् ॥
दुर्गैकेन युतं श्रियाख्यनगरं द्वाभ्यां रिपुघ्नं पुरं
त्वष्टास्ं नयवन्ति स्वस्तिकमिति प्रोक्ता गुणा विंशति: ।
भूपानां सुखदा यशोऽर्थफलदा: कीर्त्तिप्रतापोद्भवा
लोकानाञ्च निवासतो विरचिता: प्राक्शम्भुने ते गुणा: ॥"

इति पुराणां विंशतिगुणा: ॥८॥

"वह्नेर्भीतिकरं त्रिकोणनगरं षट्कोणकं क्लेशदं
वज्रे वज्रभयञ्च शाकटपुरे रोगस्त्रिशूले कलि: ।
प्रोक्तं तस्करभीतये द्विशकटं कर्णाधिकेऽर्थक्षयो
दोषा: सप्त भयावहा: प्रकटिता ये विश्वकर्म्मोदिता: ॥"

इति पुराणां सप्त दोषा: ॥ ९ ॥

"वक्ष्येऽथो विविधं पुरं स्वनिमतं मध्योत्तमं कन्यसं
तेषां हस्तसहस्रमन्तिमपुरं मध्यं तत: सार्द्धकम् ।
ज्येष्ठं युग्मसहस्रमेषु चरमं भागाष्टकेनाचितं
मध्यं द्वादशभागत: शशिकलं ज्येष्ठं विदध्यात् सुधी: ॥
मार्गा: सप्तदशैव चादिमपुरे हीनं चतुर्भि: पुरं
प्रोक्तं कन्यसमेव मार्गनवभिर्दैर्घ्ये तथा विस्तरे ।
ग्रामस्यैव पुरार्द्धतो हि तदनु ग्रामार्द्धत: खेटकं
खेटार्द्धेन तु कूटमेव विबुधै: प्रोक्तं तत: खर्व्वटम् ॥
हस्तानाञ्च युगाष्टषोड़शसहस्रं भूपतीनां पुरं
तन्मध्ये दशधा वदन्ति मुनयो दृष्ट्वा सहस्रैश्च तत् ।

काचं गोकर्णियुतं न हि शुभं शुक्रो च पूर्व्वापरम् ॥

सामान्यतः सन्ततशान्तिदञ्च
स्याद्वर्द्धमानं त्वथ कुक्कुटाख्यम् ।
इत्यादितो नाम चतुष्टयञ्च
हर्म्म्यं द्विशालं प्रथमं तथैव ॥
यत् स्वस्तिकं तद्रसदारुमध्ये-
ऽलिन्दस्तथाग्रे कथितं द्विशालम् ।
हंसाख्यकं स्यादथ वर्द्धमानं
कीर्त्तिर्विनाशं भवनं चतुर्थम् ॥
अलिन्दयुग्मं पुरतो विदध्यात्
षड्दारु मध्येऽपि च शान्तसंज्ञम् ।
तस्माद्गृहे हर्षणवैपुले च
तथा चतुर्थं कथितं करालम् ॥
तस्मिन् गृहे दक्षिणतो ह्यलिन्दे
वित्तञ्च चित्तं धनकालदण्डे ।
वामे पुनर्बन्धुदपुत्रदं स्यात्
सर्व्वन्तु तस्मिन्नपि कालचक्रम् ॥
लघुश्च पश्चात् पुरतोऽपि युग्मं
स्याद्दक्षिणैको रसदारुमध्ये ।
तस्मैपुरं सुन्दरमेव नीलं
स्यात् कौटिलञ्चैव यथा क्रमेण ॥
प्रदक्षिणैकः पुरतोऽपि युग्मं
षट्कं गृहान्तः किल शाश्वदाख्यम् ।
ततो द्वितीयं खलु शास्त्रदं स्या-
च्छीलं तथा कोटरमेव संज्ञम् ॥
सौम्यं गृहं मण्डपसंयुतञ्च
तत्तुल्यरूपं विबुधैर्व्विधेयम् ।
सुभद्रमस्मादपि वर्द्धमानं
क्रूरञ्च सर्व्वेष्वशुभं चतुर्थम् ॥
मुखे त्रयं दक्षिणपार्श्वमेकः
षड्दारुकं श्रीधरनामधेयम् ।
प्रोक्ते गृहे कामदपुष्टिदे च
चतुर्थकं कीर्त्तिविनाशमेव ॥
वामे तथा दक्षिणपश्चिमैकौ
युग्मं मुखे मण्डपमग्रतश्च ।
श्रीभूषणं श्रीवसनं ततश्च
श्रीशोभकीर्त्तिक्षयमेव तद्वत् ॥
एकोऽपरे दक्षिणवामतश्च
सम्मध्यगं श्रीधरयुग्मपूर्व्वम् ।
सर्व्वार्थदं स्यान्मुखतस्त्रयश्चेत्
लक्ष्मीनिवासं कुपितञ्च नाम्ना ।
युग्मं मुखे मण्डपमेव चाग्रे
युग्मं तथा दक्षिणतोऽन्तभित्तिः ।
पृष्ठे तु उद्योतकबाहुतेजः
सुतेज एवं कलहावहं स्यात् ॥
उद्योतके पश्चिमभागतो द्वौ
कुर्य्यात् द्विशालञ्च वह्निनिवासम् ।
तत् पुष्टिदं कोपसमानमन्य-
मशुलापटकं क्रमतो विधेयम् ॥
लघुत्रिकं पूर्व्वदिशाविभागे
एको भवेद्दक्षिणवामपश्चात् ।





महान्तमेतन्महितञ्च दत्तं
कुलत्रयं मण्डपसंयुतं स्यात् ॥
भ्रमद्वयं दिक्त्रितये विभागे
मुखे त्रिकं मण्डपमग्रतस्तु ।
प्रतापवर्द्धन्यमिदञ्च दिव्यं
सुखाधिकं सौख्यहरं चतुर्थम् ॥
तस्यैव रूपं रसदारुयुग्मं
पुनस्त्वलिन्दोऽजगगन्तस्य ।
स्यात् सिंहनादं त्वथ हस्तियानं
ज्ञेयं तथा कण्टकमेतदन्त्यम् ॥
शान्तादिगेहानि च षोडशैव
द्विशालकानीह यथाक्रमेण ।
नामानि चत्वार्य्यपि रूपमेकं
हस्तादिभेदैः क्रमतो विधेयम् ॥”

इति सूत्रधारमण्डनविरचिते वास्तुशास्त्रे राजवल्लभे एकद्विशालगृहलक्षणं ६ अध्यायः ॥

“द्विशालगेहानि तु षोडशैव
वास्तुदधेः सारतरं पुनश्च ।
वक्ष्याम्यलिन्दोऽपि मध्यो लघुश्च
द्वौ निन्दकाख्यौ कथितावलिन्दौ ॥
सर्व्वं द्विशालं लघुरस्य वामे
मुखे त्रिकं दक्षिणतस्तथैकः ।
मुखे तथा वासवमेव गेहं
वामेऽपसव्ये लघुरेक एव ॥
प्रासादसंज्ञं मुखतस्त्रयश्चेत्
प्रदक्षिणं निन्दकवेष्टितं स्यात् ।
अलिन्दयुक्तं विमलं द्विशालं
तद्दीर्घवत्तं सह मण्डपेन ॥
अथ द्विशालेषु समस्तकेषु
मध्ये विदध्याद्रसदारु चैकम् ।
तदा भवेद्भासुरमग्रयुग्म-
मेको लघुर्दक्षिणदिग्विभागे ॥
एको लघुर्दक्षिणपूर्व्वगः स्यात्
तदिन्दुभाङ्गं सुखमण्डपेन ।
द्वौ पूर्व्वतो दक्षिणतस्तथैको
युग्मं भवेन्मण्डपगं सुतेजः ॥
मुखे गुणा दक्षिणतस्तथैको
द्वौ मण्डपेऽस्मिन् इयजाभिधानम् ।
महान्तगेहं सुखजे त्रिके तु
युग्मान्वितं मण्डपमेतदेव ॥
मुखे तथा मण्डपके च युग्मं
वामेऽपसव्ये युगलं लघोश्च ।
लोकत्रयाडम्बरमस्य नाम
षड्दारं शम्भुगणेशयोश्च ॥
युग्मं मुखे मण्डपगं द्वयं स्या-
त्तथा द्वयं दक्षिणवामतश्च ।
एको हि पश्चाद्वरदाभिधानं
श्रीविश्वकर्म्मोक्तमताद्द्विशालम् ॥
मालीनसंज्ञं मुखगैश्चतुर्भि-
र्युग्मं भवेद्दक्षिणवामभागे ।
युग्मं तथा पश्चिमदिग्विभागे
तस्याग्रतो मण्डप एक एव ॥



प्राग्रामा लघवो विलासभवने वामे लघुर्दक्षिणे
तद्वैमण्डलसंयुतञ्च कमलं स्याद्दृहिदं सौख्यदम् ।
वेदास्तूरके मुखे च सततं वामेतरे दक्षिणे
तस्याग्रे सुखमण्डपस्य फलदानेवं गृहान् षोडश ॥”

इति सूर्य्यादिषोडशगृहाणि ॥

“अथ त्रिशालं त्रिदशैर्हर्षणोक्तं
स्यात्तैदशावासमरूपसंज्ञम् ।
तथा चतुर्थं कुमुदाभिधानं
हस्त्यादिभेदैः क्रमतो विधेयम् ॥
छत्रं त्वलिन्दश्च तथैव पुत्रं
हरञ्च कामन्त्वथ इन्द्रभद्रम् ।
षट्कञ्च मध्ये सधनं कुबेरं
पद्मं तथा कामदमेतदेव ॥
अलिन्दयुग्मं त्वथ भद्रयुक्तं
मध्ये कपाटं गजजाभिधानम् ।
स्यान्निवनं चैव गजं तपञ्च
षड्दारु मध्ये सकवे यथातः ॥
स्याद्वैजयं मण्डपहस्तभद्रं
जयं निनादं त्वथ कौशिकञ्च ।
भद्रोनहस्ताधिककाकलाङ्गं
निर्लोभकं वासदकौशले च ॥
त्रैरकं क्रमादीश्वरवारदाख्यं
भौमञ्च कौशल्यमतः क्रमेण ।
तदेव बुद्धस्वजनं तृतीयं
स्यात् कौशलं नीलमिदं चतुर्थम् ॥
मुखयुगललघुदामे दक्षिणे चैक एत-
द्धरदशरदसुक्तं दण्डकं काकपक्षम् ।
इदमिह हि निनादं मण्डपेनाधिकं स्या-
त्तदनु च गजनादं वाहुलं कीर्त्तिदाङ्कम् ॥
इत्यादिरूपसुखमण्डपमेव सिंहं
ज्ञेये गृहे इषगजे अपि कोशसंज्ञम् ।
वामेऽधिकञ्च लघुना कथितं सुभद्रं
स्यात्साग्निभद्रमपि रत्नकाञ्चनाख्ये ॥
युगसुखमपरैको भैरवं दक्षिणे च
भरत तरलमेतत् स्याच्चतुर्थं कुबेरम् ।
पुनरपि लघु वामे हस्तियानं वियानं
इयजक्रपजगेहं तच्चतुर्थं क्रमेण ॥
वर्णानां शुभदञ्च सागरगृहं पश्चैव हस्ता मुखे
प्रोक्तं चौरदरत्नदाढ्यमिदं कोलाहलञ्चापरम् ।
षड्दारुद्वयभद्रसप्तलघवस्तिर्य्यक् युतं शालया
गान्धर्व्वं क्षितिभूषणञ्च कथितं सर्व्वत्रकं दर्पकम् ॥
धान्यं वृद्धिकरं त्रिशालमुदितं शाला विना पावनी
प्राक्शाला रहितं शुभं निगदितं सुक्षेत्रमर्थप्रदम् ।
चुल्लीसंज्ञमिदं करोति मरणं हीनं तथा याम्यया
पक्षघ्नं महिषीन्द्रिते च भवनं तत्पुत्रवन्धुक्षयम् ॥”

इति त्रिदशादिषोडशगृहाणि ॥

"गृहा वास्तुशास्त्रोदधौ राजयोग्या
अनन्ता हि सन्त्यत्र तेभ्यः कियन्तः ।
मयोक्ताश्च योग्या नृपाणां समृद्ध्यै
सुशोभान्वितास्ते च कल्याणदाश्च ॥
त्रिशालं गृहं दिक्त्रये हस्तयुग्मं
मुखे वीथिकाग्रे च षड्दारुमध्यम् ।
शुभालिन्दचातुर्दिशं चैकवक्त्रं
गवाक्षश्च कोणे च भद्रे विधेयम् ॥
मुखे भद्रके श्रीधरं माण्डयुक्तं
तथा भूमिका पञ्चसप्तैकभूम्याम् ।
विनाच्छादनं मण्डपं वेदवक्त्रे
रिपुघ्नं गृहं राज्यवर्द्धन्यमेतत् ॥
मध्ये निम्नत्वङ्गणाग्रे तथोच्चैः
शस्तं नैवं पुत्रनाशाय गेहम् ।
स्तम्भश्रेणी मध्यमानेन कार्या
न्यूनाधिक्ये नैव पूज्या न च श्रीः ॥
हीनस्तम्भे शालयोर्व्वाथ पट्टे
नो वेधः स्यादन्यतो वेध एव ।
भूमेर्दैर्घ्यं रुद्रसंख्याप्रमाणं
तुल्या नेष्टा वर्द्धमानाः शुभाः स्युः ॥
सार्द्धत्रयेण विभजेत् करतत्त्वसंख्य-
मध्ये नवांशमुदितश्च करार्द्धभित्तिः ।
स्तम्भाश्च षोड़शशतेऽपि च भद्रकेषु
दन्तैर्मिताश्च सकलासु चतुर्मुखं स्यात् ॥
भद्रे च भूमिद्वयमूर्द्ध्वमाण्डं
सार्द्धत्रिभूमं कथितञ्च गेहम् ।
प्रतापवर्द्धन्यमिदं नृपाणां
लक्ष्मीविलासञ्च वदामि तस्मात् ॥
स्तम्भा दश दश भद्रकैकं
षोड़शमध्ये तत्समरूपम् ।
मदनशरावनिमाण्डसमेतं
लक्ष्मीः कर्म्म करोति च नित्यम् ॥
भागाः पञ्चगुणाश्च पञ्च भवनं षड्विंशता स्तम्भकैः
कुर्य्यं चार्द्धपदे च नन्दपदकैर्भद्रं चतुर्द्दारकैः ।
भद्रे वै गुणभद्रकाणि सकलेऽष्टाशीतिका स्तम्भका
माण्डं भूत्रितये च सार्द्धशरभूः स्याच्छ्रीनिवासं गृहम् ॥
मध्ये स्तम्भशतञ्च भागसमकं भित्तिश्चतुर्द्दारकं
सप्तांशादिशरांशरामसहितं भद्रं चतुस्त्रिंशता ।
षट्त्रिंशत् द्विशती च ते तु सकलाः स्तम्भाः क्षितौ पूर्व्वतो
नाम्ना तत् कमलोद्भवञ्च कथितं भूम्यर्द्धसप्तान्वितम् ॥
हर्म्म्यस्योदयकं विभज्य नवधा कुम्भी भवेद्भागतः
पादोनं भरणं शिरश्च कथितं पट्टः सपादो भवेत् ।
स्तम्भः पञ्चपदोनभाग उदितः कीणाष्टवृत्तस्तथा
भागार्द्धेन जयन्तिका निगदिता सा दन्तकस्योपरि ॥
गृहस्योदयं दश विभागैर्विभाज्यं
द्विभागेन कक्षासनं वेदिका स्यात् ।
त्रिभागेन तत्कण्ठतो निम्नमेवं
गृहस्योदयार्द्धेन पीठं नृपाणाम् ॥
उत्तानपट्टो नृपमन्दिरेऽसौ
हस्ते च हस्ते द्वियवोन्नतः स्यात् ।
पाषाणतः सौख्यकरी नृपाणां
धनक्षयं सोऽपि करोति गेहे ॥
सुधेष्टके शर्करया वियुक्ते
सकर्करैस्तैः सुदृढ़ा गृहे भूः ।
शस्ता न शस्तं भवनेषु चित्रं
कपोतगृध्राः कपिकाकरौद्रम् ॥
शुद्धोऽलिन्दविशेषतश्च सकला भूम्यौघरन्ध्रान्विता
छाद्येनाप्यथ मत्तवारणयुतं माण्डं तथार्द्धोदयम् ।
मौड़ो भद्रचतुष्किकाभिरुदितो माण्डेन युक्तस्तथा
मत्तैस्तुल्यसपादकैस्तु सकृशो वा शीर्षकैः शेखरः ॥
राज्ञो गृहं छन्दचतुष्टयं स्यात्
तथैव घण्टाकलसेन युक्तम् ।
तुङ्गारसंज्ञस्तथ सिंहकर्णः
प्रासादके तेऽपि षड़ेव शस्ताः ॥
षड़्जातिगेहं त्वगपर्णपट्टै-
र्व्वंशैः कटैर्व्वापि मृदा शिलाभिः ।
इत्थं प्रकारैः कथितञ्च षड़्भि-
र्लोकप्रसिद्ध्या च परीक्षणीयम् ॥"
इति राजगृहादि ॥*॥
"वामे भागे दक्षिणे वा नृपाणां
त्रेधा कार्य्या वाटिका क्रीड़नार्थम् ।
एकद्वित्रिर्द्दण्डसंख्या शतं स्या-
न्मध्ये धारामण्डपं तोययन्त्रैः ॥
चैत्रं सप्तविभागभाजितमतो भद्रञ्च भागत्रयं
तन्मध्ये जलवापिकाजिनपदैरेकांशतो वेदिका ।
स्तम्भैर्द्वादशभिश्च मध्यरचितः कोणेषु कूपान्वितः
कर्त्तव्यो जलयन्त्र एष विधिवत् भोगाय भूमीभुजाम् ॥
तस्यां चम्पककुन्दजातिसुमनोवल्ल्यः सुनिर्व्वालुका
जातीहैमवमानकेतकिरपि श्वेता तथा पाटला ।
नारङ्गः करुणा वसन्तलतिका चारुस्तपुष्पाश्रिकं
जम्बीरो वदरी च पूगमधुका जम्बूश्च चूतद्रुमाः ॥
मालूरः कदली च चन्दनवटावश्वत्थपथ्याशिवा-
चिञ्चाशोककदम्बनिम्बतरवः खर्ज्जूरिका दाड़िमी ।
कर्पूरागुरुकिंशुका हयरिपुः पुन्नागको निम्बुकी
प्रोक्ता नागलता च बीजनिम्बता स्यात् तिन्दुकी लाङ्गली ॥
द्राक्षैला शतपत्रिका च बकुला धत्तूरकंकोलकौ
शाल्मलाखतमालकौ मुनिवरो मन्दारपारिद्रुमौ ।
अन्ये भोग्यविचित्रखाद्यसुफलास्ते रोपणीया बुधैः
यत्नाप्नोति न भूतले शुभतरं तच्चम्पकान् वापयेत् ।
आस्थानं प्रतिषेचनाय च घटीयन्त्रस्तुषारोद्भवे
दोला स्त्रीजनखेलनाय रुचिरे वर्षावसन्तोत्सवे ।
वालाप्रौढ़वधूसमध्यवनितागानैर्मनोहारिभि-
र्ग्रीष्मे शारदकेऽथ शीतलजलक्रीड़ा शुभे मण्डपे ॥
इति वाटिका ॥*॥
"तुरङ्गमाणां गृहवामभागे
शाला चतुःषष्टिकरा विधेया ।
शतार्द्धतो मध्यमिका च दैर्घ्ये
कनीयसी तद्दशभिर्विहीना ॥
व्यासे च ज्येष्ठा तिथिहस्तमाना
त्रयोदशैकादशकैः क्रमेण ।
तद्वाह्यभित्तिश्च करप्रमाणा
पञ्चार्द्धपञ्चाब्धिकरोदया स्यात् ॥
तेजोहानिमपीहया विदधते पूर्व्वापरास्या नृणां
ते याम्योत्तरतो सुखादि सततं कीर्त्तियशो धान्यकम् ।
कर्णेशो धिषणं प्रतीह कलसस्थानं द्विहस्तोदयं
तस्यास्तोरणमुच्छ्रितञ्च मुनिभिर्हस्तैः सुशोभान्वितम् ॥
षष्ठ्या साधुहयाङ्गुलैर्निगदितो वेदाङ्गुलेनाधिकः
श्रीवत्सश्च हिताव एव च मनोहारी द्विसप्ताङ्गुलः ।
रागाद्यङ्गुलकैस्तु वाजिविजयोऽशीत्या तथा भैरवः
शान्ताख्यस्तु युगाष्टमात्र उदये मानं हरेः सप्तधा ॥"
इत्यश्वशाला ॥*॥
"सिंहद्वारं पूर्व्वमानेन कार्य्यं
त्रिद्वारका वा मालिका स्तम्भशीर्षे ॥
स्यातां मध्ये तान्वकौ रत्नयार्थं
तुल्यौ भागेनाधिकौ वापि सार्द्धौ ॥
भागे दक्षिणवामके च करिणां शाला हरेर्द्वारतः
कर्त्तव्या सुदृढ़ोन्नता च कलसैर्घण्टादिभिर्भूषिता ।
संकीर्णो रसनो नगैर्निगदितो मन्द्रा मृगाश्चाष्टतः
सर्व्वेभूत्तमभ जातिरुदितो नन्दैः करैरुन्नतः ॥"
इति गजशाला ॥*॥
"अष्टोत्तरहस्तशतं पृथुत्वे
नृपालयं चोत्तममेव तस्मात् ।
अष्टाभिरष्टाभिरतो विहीनं
पञ्चैव भागाधिकतोऽपि दैर्घ्ये ॥
अशीतितो रागकरैश्च हीनाः
पञ्चालया भूपसुतप्रियाश्च ।

त्रिभागदैर्घ्योऽधिकतो विधेया
मुख्या क्रमेणैव यथोन्निताश्च ।
प्रोक्तं चतु र्थहिकर पृथुत्वे
क्रमेण षड्भिश्च करैर्विहीनम् ।
षड्भागतो दैर्घ्यमतोऽधिकं स्या
द्भूलाधिपस्यैव च पञ्चहर्म्ये ।
षष्ठ्या हस्तैर्मन्त्रिगेह पृथुत्वे
हीनं हीनं पञ्चकं वेदवह्नेः ।
कुर्य्याद्धस्तैरष्टमांशोऽधिकोऽसौ
आयामोऽपि वह्निसो दैर्घ्यं एव ।
सामन्तादिकभूपतेश्च भवनं विंशच्छिवस्ते सम
हस्तैर्वेदविहीनकै क्रमतया भागाधिकं
दैर्घ्यत ।
देवज्ञस्य सभाधरस्य गुरुत पौरोधस भेषज
त्रिंशत्यष्टकरं दिहस्तरहितं दैर्घ्यं द्विधा तद्
भवेत् ।
वैश्याकर्षकिशिल्पिनामपि गृहे षट्राधिका
विंशति
र्मानं हस्तचतस्रयैर्विरहितं दैर्घ्योऽधिका
यामत ।
हर्म्यं दतकराम्बिकस्य रचितो हस्ते षम
विस्तरे
हीनं त्वर्द्धकरेण पञ्चकमिदं तुर्य्यांशदैर्घ्याधि
कम् ।
द्वात्रिंशता मानमिदं द्विजादेः
हीनं चतुर्भिः क्रमतो विधेयम् ।
षोडशरागाश्रिविभागतश्च
क्रमेण सदर्द्धचतुष्टयेऽपि ।
कर्याधिक विस्तरतोऽधिकञ्च
शीघ्रं विनाशं समुपैति गेहम् ।
द्वारं गत मूर्द्धि यदायतञ्च
तत सन्ततहानिकरं प्रदिष्टम् ।
व्यासं सप्तनिहस्तवियुक्ते
शालामानमिदं मनुभुक्ते ।
पञ्चत्रिंशत् पुनरपि तस्मिन्
मानसुधान्ति लघीरिव हद्दा ।
एकं द्वारं प्राङ्मुखं शोभनं स्यात्
चातुर्श्चक्र धाटभूपेशजेन ।
युग्मं प्राच्या पश्चिमं स्याच्चिरेषु
मूल द्वारं दक्षिण ‥वर्जनीयम् ।
इति वास्तुशास्त्र राज　　　हर्ने राजगृहादि
लक्षण नाम नवमोऽध्या　　॥ * ॥

शिल्पिका, स्त्री तृणविशेष । लहानसिपी इति
हिन्दीभाषा । तत्पर्य्याय । शिल्पिनी २ पौता
३ चैत्रला ४ मृदुस्कन्दा ५ । अस्या गुणा ।
मूत्ररोगाश्मरीमूलज्वरपित्तापहारकत्वम् । इति
राजनिर्घण्ट ॥

शिल्पिनी, स्त्री, कोलदलौषधि । इति मेदिनी ॥

शिल्पिशाला, स्त्री, क्ली (शिल्पिनां शाला ।)
शिल्पशाला । इत्यमरटीकायां स्वामी ॥

शिल्पी [न्] त्रि, (शिल्प क्रियाकौशलमस्यास्तीति ।
इनि ।) शिल्पकर्त्ता । (यथा मनौ । ७ । ७५ ।
"ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ।")
तत्पर्य्याय । कारु २ । इत्यमर । अस्य विव
रण शिल्पकारशब्दे द्रष्टव्यम् । शिल्पसम्बन्धी
च ॥

शिव, क्ली (शी + "सर्व्वनिघृष्वरिष्वलष्वशिव
पद्वप्रह्वेष्वा अतन्त्रे ।" उणा० १ । १५३ । वन्
प्रत्ययेन साधु ।) मङ्गलम् । इत्यमर ॥ (यथा,
रघु । १ । ६० ।
"उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणाञ्च प्रतिहर्त्ता त्वमापदाम् ॥")
सुखम् । जलम् । इत्युणादिकोष ॥ सैन्धवम् ।
समुद्रलवणम् । श्वेतटङ्कणम् । इति राज
निर्घण्ट ॥ (मङ्गलवति त्रि । यथा महा
भारते । १ । २०८ । ३६ ।
"तत्र रम्ये शिवे देशे कौरवस्य निवेशनम् ।")

शिव, पुं (शी + 'सर्व्वनिघृष्वेति । उणा० १ । १५३ ।
इति वन्प्रत्ययेन साधु ।) अष्टत्व संज्ञाविशेष ।
तस्य व्युत्पत्तिर्यथा । शिव कल्याणं विद्यतेऽस्य
शिव । शेते अशुभमिति वा । शेरतेऽवतिष्ठन्ते
अणिमादयोऽष्टौ गुणा अस्मिन् इति वा शिव ।
इत्यमरटीकायां भरत ॥ तत्पर्य्याय । शम्भु २
ईश ३ पशुपति ४ शूली ५ महेश्वर ६ ईश्वर
७ सर्व्व ८ ईशान ९ शङ्कर १० चन्द्रशेखर
११ भूतेश १२ खण्डपरशु १३ गिरीश १४
गिरिश १५ मृड १६ मृत्युञ्जय १७ कृत्ति
वासा १८ पिनाकी १९ प्रमथाधिप २० उग्र २१
कपर्द्दी २२ श्रीकण्ठ २३ शितिकण्ठ २४
कपालभृत् २५ वामदेव २६ महादेव २७
विरूपाक्ष २८ त्रिलोचन २९ कृशानुरेता ३०
सर्व्वज्ञ ३१ धूर्ज्जटि ३२ नीललोहित ३३
हर ३४ स्मरहर ३५ भर्ग ३६ त्र्यम्बक ३७
त्रिपुरान्तक ३८ गङ्गाधर ३९ अन्धकरिपु ४०
क्रतुध्वंसी ४१ वृषध्वज ४२ व्योमकेश ४३
भव ४४ भीम ४५ स्थाणु ४६ रुद्र ४७
उमापति ४८ । इत्यमर ॥ वृषपर्व्वा ४९
रेरिहाण ५० भगाली ५१ पांशुचन्दन ५२
दिगम्बर ५३ अट्टहास ५४ कालञ्जर ५५
पुरहिट ५६ वृषाकपि ५७ महाकाल ५८
वराक ५९ नन्दिवर्द्धन ६० हीर ६१ वीर ६२
खर ६३ भूरि ६४ कटप्रू ६५ भैरव ६६
ध्रुव ६७ शिपिविष्ट ६८ गुडाकेश ६९ देव
देव ७० महानट ७१ । इति जटाधर ॥
तीव्र ७२ खण्डपर्शु ७३ पञ्चानन ७४ कण्ठे
काल ७५ भव ७६ भीम ७७ भीषण ७८
कङ्कालमाली ७९ जटाधर ८० व्योमदेव ८१
सिद्धदेव ८२ धरणीश्वर ८३ विश्वेश ८४
जयन्त ८५ हररूप ८६ सन्ध्यानाटी ८७
सुप्रसाद ८८ चन्द्रापीड ८९ शूलधर ९०
वृषाङ्क ९१ वृषभध्वज ९२ भूतनाथ ९३
शिपिविष्ट ९४ वरेश्वर ९५ विश्वेश्वर ९६
विश्वनाथ ९७ काशीनाथ ९८ कुलेश्वर ९९
अस्थिमाली १०० विशालाक्ष १०१ हिण्डी १०२
प्रियतम १०३ विषमाक्ष १०४ भद्र १०५
ऊर्द्ध्वरेता १०६ यमान्तक १०७ नन्दीश्वर १०८
अष्टमूर्त्ति १०९ अर्घीश ११० खेचर १११
भृङ्गीश ११२ अर्द्धनारीश ११३ रसनायक ११४ ।
इति शब्दरत्नावली ॥ उ ११५ पिनाक
पाणि ११६ गणधर ११७ कैलासनिके
तन ११८ हिमाद्रितनयापति ११९ । इति
कविकल्पलता ॥ अस्य सहस्रनामानि श्रीमहा
भारते अनुशासनपर्व्वणि १७ अध्याये द्रष्टव्या
नि ॥ * ॥ अस्य कपालिनामकारणं यथा —
ईश्वर उवाच ।
"आसीत्तव वरारोहे ब्रह्मणस्तु शिरोऽपरम् ।
पञ्चमं शृणु सुश्रोणि जातं काञ्चनसुप्रभम् ॥
ज्वलत् परम शीर्षं जातं तस्य महात्मन ।
स एवमब्रवीद्देवि जन्म जानामि ते ह्यहम् ॥
ततः क्रोधपरीतेन संरक्तनयनेन च ।
वामाङ्गुष्ठनखाग्रेण छिन्नं तस्य शिरो मया ॥
ब्रह्मोवाच ।
यस्मादनपराधेन शिरश्छिन्नं त्वया मम ।
तस्माच्छापसमायुक्तः कपाली त्वं भविष्यसि ॥
इति मात्स्ये १५८ अध्याय ॥ * ॥
अथ शिवमन्त्रा । तत्र एकाक्षरमन्त्रो यथा —
"शान्तमौकारसंयुक्तं विन्दुभूषितमस्तकम् ।
प्रासादाख्यो मनु प्रोक्तो भजतां कामदो
मयि ॥ हौं ॥ * ॥
अस्य पूजा । प्रात कृत्यादिमातृकान्यास प्राणा
यामञ्च विधाय श्रीकण्ठादिन्यासं मातृकास्थानेषु
कुर्य्यात् । तत सामान्यपूजापद्धत्युक्तपीठन्यास
कृत्वा पीठशक्तीरर्च्चयेत् । तत ऋष्यादिन्यास ।
तत कराङ्गन्यासौ । तत ईशानाद्या पञ्च
मूर्त्तीर्न्यसेत । मूर्द्धसु एतत्पञ्चक न्यास कल्प
ध्यायेत । अन्यत्रानधिकारात् । तत ऊर्द्ध्व प्राग
दक्षिणोत्तरपश्चिमेषु मुखेषु ईशानस्य पञ्चकला
पञ्च मन्त्र स्वर पञ्चादिका प्रणवाद्या नमो
ऽन्ता न्यसेत् । तत पूर्व्वपश्चिमदक्षिणोत्तरेषु
तत्पुरुषस्य चतस्र कला विन्यसेत् । ततो हृन्य
ग्रीवायां अंसद्वये नाभौ कुक्षौ पृष्ठे वक्षसि
अघोरस्याष्टौ कला न्यसेत् । ततो गुह्ये अण्ड
कोषे ऊरुद्वये जानुद्वये जङ्घाद्वये स्फिग्द्वये
कट्यां पार्श्वयो वामदेवस्य त्रयोदशकला
विन्यसेत् । तत पार्श्वयो स्तनयोर्नासिकायां
मूर्द्धि बाहुयुग्मे सद्योजातस्याष्टौ कला न्यसेत् ।
तत पञ्चाङ्गुलीषु ईशानाद्या पञ्च कला न्यसेत् ।
एव मङ्गस्य हृदयगुह्यपादस्थिता कला न्यसेत् ।
ततोऽङ्गन्यासान्तरं कुर्य्यात् । एवं विन्यस्य
ध्यायेत् ।
'मुक्तापीतपयोदमौक्तिकजवावर्णैर्मुखै पञ्चभि
स्त्र्यक्षैरञ्चितमीशमिन्दुमुकुट पूर्णेन्दुकोटि
प्रभम् ।
शूलं टङ्कृपाणवज्रदहनान्नागेन्द्रघण्टाङ्कुशान्
पाशं भीतिहरं दधानममिताकल्पोज्ज्वलाङ्ग
भजे ॥'

अस्य पुरश्चरणं षट्त्रिंशल्लक्षजपः । १० । * ।
अथास्य मन्त्रान्तरम् ।
'अर्घीशो वह्निशिरसो लान्तस्थो दान्त ईरितः ।
षड्दलच्छन्दोऽसौ त्रिवर्णात्मा समीरितः ॥"
ऊर्द्धं फट् इति मन्त्रः । अस्य पूजा । प्रातः-कृत्यादिशैवोक्तपीठन्यासान्तं विधाय ऋष्यादि-न्यासं कराङ्गन्यासौ च कृत्वा ध्यायेत् ।

'चण्डेश्वरं रक्ततनुं त्रिनेत्रं
रक्तांशुकाढ्यं हृदि भावयामि ।
टङ्कं त्रिशूलं स्फटिकाक्षमालां
कमण्डलुं बिभ्रतमिन्दुचूडम् ॥'

एवं ध्यात्वा मानसैः सम्पूज्यार्घ्यस्थापनादिशैवोक्त-पीठपूजान्तं विधाय तस्मिन् पीठे मूर्त्तिं सङ्कल्प्य पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदान-पर्य्यन्तं विधायावरणपूजां कृत्वा धूपादिविसर्ज्जनान्तं कर्म्म समापयेत् । अस्य पुरश्चरणं त्रिलक्षजपः । अयं चण्डेश्वरः ॥ ११ ॥ इति तन्त्रसारे शिवमन्त्राः ॥ * ॥ * ॥ विष्णुशिवयोर-भेदो यथा —

वराह उवाच ।

"शिवो मे दक्षिणं स्थानं तिष्ठते विगतज्वरः ।
लोकानां प्रवरः श्रेष्ठः सर्व्वलोकवरो हरः ॥
न ये विन्दन्ति तं देवि । नूनं मामेव विन्दति ।
ये मां विन्दन्ति देवेशि । ते विन्दन्ति शिवं परम् ॥
अहं यत्र शिवस्तत्र शिवो यत्र वसुन्धरे ।
अहं तत्रापि तिष्ठामि आवयोर्नान्तरं क्वचित् ॥
शिवं यो वन्दते भूमे । स हि मामेव वन्दते ।
लभते पुष्कलां सिद्धिमेव यो वक्ति तत्त्वतः ॥'
इति वाराहे शालग्रामक्षेत्रमाहात्म्यवर्णननामा-ध्यायः ॥ * ॥ देवीविष्णुशिवानामभेदो यथा —
'अयं नारायणो गौरी जगन्माता सनातनः ।
विभज्य संस्थितो देवः स्वात्मानं परमेश्वरः ॥
न मे विदुः परं तत्त्वं देवाद्या न महर्षयः ।
एकोऽयं वेद देवानां भवानी विष्णुरेव च ॥
अहं हि निष्क्रियः शान्तः केवलो निष्परिग्रहः ।
मामेव कथ्यते देवमाहुर्देवीमथाम्बिकाम् ॥'
इति कौर्म्मे १४ अध्यायः ॥ * ॥
शिवनिन्दानिषेधो यथा —
'परात् परतरं यान्ति नारायणपरा जनाः ।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥
ध्यानं होमस्तपस्तप्तं ज्ञानं यज्ञादिको विधिः ।
तेषां विनश्यति क्षिप्रं ये निन्दन्ति पिनाकिनम् ॥
यो मां समाश्रयेन्नित्यं एकान्तं भावमाश्रितः ।
विनिन्द्य देवमीशानं स याति नरकायुतम् ॥
तस्मात् सा परिहर्त्तव्या निन्दा पशुपतेर्द्विजाः ।
कर्म्मणा मनसा वाचा तद्भक्तेष्वपि यत्नतः ॥'
इति कौर्म्मे २५ अध्यायः ॥ * ॥
तस्य प्रलयकारकत्वं यथा —
"गते परार्द्धद्वितये काले लोकप्रकालकः ।
कालाग्निर्भस्मसात् कर्त्तुं करोति निखिलं मतिम् ॥
स्वात्मन्यात्मानमावेश्य भूत्वा देवो महेश्वरः ।
दहेदशेषं ब्रह्माण्डं सदेवासुरमानुषम् ॥
तमाविश्य महादेवो भगवान्नीललोहितः ।
करोति लोकसंहारं भीषणं लोकमाश्रितः ॥
प्रविश्य मण्डलं सौरं कृत्वासौ बहुधा पुनः ।
निर्द्दहत्यखिलं लोकं सप्तमूर्त्तिस्वरूपधृक् ॥
स दग्ध्वा सकलं सत्त्वमस्त्रं ब्रह्मशिरो महत् ।
देवतानां शरीरेषु क्षिपत्यखिलदाहकम् ॥
दग्धेष्वशेषदेवेषु देवी गिरिवरात्मजा ।
एका सा साक्षिणी शम्भोस्तिष्ठते वैदिकी श्रुतिः ॥
शिवः कपालैर्द्देवानां कृतस्रग्वरभूषणः ।
आदित्यचन्द्राग्निमयैः पूरयन् व्योममण्डलम् ॥
सहस्रनयनो देवः सहस्राकृतिरीश्वरः ।
सहस्रहस्तचरणः सहस्रार्च्चिर्म्महाभुजः ॥
दंष्ट्राकरालवदनः प्रदीप्तानललोचनः ।
त्रिशूलकृत्तिवसनो योगमैश्वरमास्थितः ॥
पीत्वा तत् परमानन्दं प्रभूतममृतं स्वकम् ।
करोति ताण्डवं देवमालोक्य परमेश्वरः ॥
पीत्वा नृत्यामृतं देवी भर्त्तुः परममङ्गला ।
योगमास्थाय देवस्य देहमायाति शूलिनः ॥
स मुक्त्वा ताण्डवरसं स्वेच्छयैव पिनाकधृक् ।
याति स्वभावं भगवान् दग्ध्वा ब्रह्माण्डमण्डलम् ॥
संस्थितेष्वथ देवेषु ब्रह्मविष्णुपिनाकिषु ।
गुणैरशेषैः पृथिवी विलयं याति वारिषु ॥
सवारितत्त्वं सगुणं ग्रसते हव्यवाहनः ।
तेजः स्वगुणसंयुक्तं वायौ संयाति संक्षयम् ॥
आकाशे सगुणो वायुः प्रलयं याति संक्षयम् ।
भूतादौ च तथाकाशं लीयते गुणसंयुतम् ॥
इन्द्रियाणि च सर्व्वाणि तैजसे यान्ति संक्षयम् ।
वैकारिके देवगणाः प्रलयं यान्ति सत्तमाः ॥
वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः ।
त्रिविधोऽयमहङ्कारो महति प्रलयं व्रजेत् ॥
महान्तमेभिः सहितं ब्रह्माणममितौजसम् ।
अव्यक्तं जगतो योनिः संहरेदेकमव्ययम् ॥
एवं संहृत्य भूतानि तत्त्वानि च महेश्वरः ।
वियोजयति चान्योन्यं प्रधानं पुरुषं परम् ॥
प्रधानपुंसोरजयोरेष संहार ईरितः ।
महेश्वरेच्छाजनितो न स्वयं विद्यते लयः ॥
गुणसाम्यं तदव्यक्तं प्रकृतिः परिगीयते ।
प्रधानं जगतो योनिर्मायातत्त्वमचेतनम् ॥
कूटस्थश्चिन्मयो ह्यात्मा केवलः पञ्चविंशकः ।
गीयते मुनिभिः साक्षी महानेकः पितामहः ॥
एवं संहारकरणी शक्तिर्माहेश्वरी ध्रुवा ।
प्रधानाद्यं विशेषान्तं दहेद्रुद्र इति श्रुतिः ॥
योगिनामथ सर्व्वेषां ज्ञानविन्यस्तचेतसाम् ।
आत्यन्तिकश्चैव लयं विदधातीह शङ्करः ॥"
इति कौर्म्मे उपविभागे ४२ अध्यायः ॥ * ॥
ब्रह्मविष्णुशिवानामभेदो यथा, —

श्रीभगवानुवाच ।

"न ब्रह्मा भवतो भिन्नो न शम्भुर्मत्तस्तथा ।
न चाहं युवयोर्भिन्नो ह्यभिन्नस्य सनातनम् ॥
प्रधानस्याप्रधानस्य भागाभागस्य रूपिणः ।
ज्योतिर्म्मयस्य भागो मे ऽनेकोऽनेकोऽहमंशकः ॥
कस्त्वं कोऽहञ्च को ब्रह्मा ममैव परमात्मनः ।
अंशत्रयमिदं भिन्नं सृष्टिस्थित्यन्तकारणम् ॥
चिन्तयन् स्वात्मनात्मानं सम्भव कुरु चात्मनि ।
एकत्वं मद्वैकुण्ठशम्भूनां कुरुत कुरु ॥
शिरोग्रीवान्विते देहे यथैवैकस्य धर्म्मिणः ।
अङ्गानि मे तथैकस्य भागत्रयमिदं हर ॥
यज्ज्योतिरग्र्यं स्वपरप्रकाशं
कूटस्थमव्यक्तमनन्तरूपम् ।
नित्यञ्च दीर्घादिविशेषणाद्यै-
र्हीनं परं तत्र वयं न भिन्नाः ॥"
इति कालिकापुराणे ११ अध्यायः ॥
अपि च ।
'ततो ब्रह्मा च शारीरं त्रिधा चक्रे महेश्वरः ।
प्रधानच्छायतश्छन्नो निर्गुणः निर्गुणोत्तमम् ॥
तदूर्द्ध्वभागं सञ्जातं चतुर्व्वक्त्रं चतुर्भुजम् ।
पद्मकेशरगौराङ्गकायो ब्रह्मा महेश्वरः ॥
मध्यभागो नीलाङ्ग एकवक्त्रश्चतुर्भुजः ।
शङ्खचक्रगदापद्मपाणिः कायः स वैष्णवः ॥
अभवत्तदधोभागः पञ्चवक्त्रश्चतुर्भुजः ।
स्फटिकाभ्रसमः कायः शुक्लः स चन्द्रशेखरः ॥
ईशस्ततो ब्रह्मकाये सृष्टिशक्तिं न्ययोजयत् ।
स्वयमेवाभवत् स्रष्टा ब्रह्मरूपेण लोकधृक् ॥
स्थितिशक्तिं निजां मायां प्रकृत्याख्यां न्ययो-जयत् ।
महेशो वैष्णवे काये ज्ञानशक्तिं निजां तथा ॥
स्थितिकर्त्ता भवद्विष्णुरहमेव महेश्वरः ।
सर्व्वशक्तिनियोगेन सदा मद्रूपतां गतः ॥
अन्तशक्तिं तथा काये शाम्भवे समयोजयत् ।
अन्तकर्त्ता भवच्छम्भुः स एव परमेश्वरः ॥
ततस्त्रिषु शरीरेषु स्वयमेव प्रकाशते ।
ज्ञानरूपं परं ज्योतिरनादिर्भगवान् प्रभुः ॥
सृष्टिस्थित्यन्तकरणादिकं एव महेश्वरः ।
ब्रह्मा विष्णुः शिवश्चेति संज्ञामाप पृथक् पृथक् ॥
अतस्त्वञ्च विधाता च तथाहमपि न पृथक् ।
एकं शरीरं रूपञ्च ज्ञानमज्ञानकमन्तरम् ॥"
इति तत्रैव १२ अध्यायः ॥ * ॥

मार्कण्डेय उवाच ।

"ततो ब्रह्माण्डसंस्थानं दर्शयामास शम्भवे ।
वपुषि तोयराशिस्थं ब्रह्माण्डञ्च यथा पुरा ॥
तन्मध्ये पद्मगर्भाभं ब्रह्माणं जगतः पतिम् ।
ज्योतीरूपं प्रकाशाय स्वरूपञ्च पृथग्गतम् ॥
शरीरेण स ददृशे ब्रह्माण्डान्तर्गतं तदा ।
चतुर्भुजं प्रकाशन्तं ज्योतिभिः कमलासनम् ॥
तत्रैव च त्रिधाभूतं वपुर्ब्रह्म ददर्श सः ।
ऊर्द्ध्वमध्यान्तभागैस्तु ब्रह्मविष्णुशिवात्मकम् ॥
अधोर्द्ध्वभागो वपुषो ब्रह्मत्वमगमत्तथा ।
मध्यस्तदा विष्णुभूतो ददर्शान्तस्य शम्भुताम् ॥
एकमेव शरीरन्तु त्रिधाभूतं तदुन्मुखः ।
हरो ददर्श स्वे गर्भे तथा सर्व्वमिदं जगत् ॥
कदाचित् वैष्णवं कायं ब्राह्मकाये लयं व्रजेत् ।
ब्राह्मं तथा वैष्णवं च शाम्भवं वैष्णवे तथा ॥

शाम्भवं वैष्णवे काये ब्राह्मं चाप्यथ शाम्भवम् ।
गच्छन्तं लीनतां शम्भुरेकताञ्च मुहुर्म्मुहुः ॥
ददर्श वामदेवोऽपि भिन्नञ्चाप्यपृथग्गतम् ।
परमात्मनि गच्छन्तं लीनतां तदपृथ्व यत् ॥”

इति कालिकापुराणे १३ अध्यायः ॥ * ॥

अस्य शरभरूपधारणकारणं यथा,—

“इति तेषां निगदतां श्रुत्वा वाक्यं जनार्द्दनः ।
उवाच शङ्करं देवं ब्रह्माणञ्च विशेषतः ॥
यत्कृते देवताः सर्व्वाः प्रजाश्च सकला इमाः ।
प्राप्नुवन्ति महद्दुःखं शीर्य्यन्ते सकलं जगत् ॥
वाराहं सकलं कायं त्यक्तुमिच्छामि शङ्कर ।
त्वं त्याजयस्व तत् कायं यन्नात्मा शङ्कराधुना ॥
त्वमाप्यायस्व तेजोभिर्ब्रह्मन् स्मरहरं मुहुः ।
आप्यायन्तु तदा देवाः शङ्करो हन्तु पोत्रिणम् ॥
वासुदेवोऽपि तान् सर्व्वान् विसृज्य त्रिदशां-स्तदा ।
वाराहं तेजसा हर्त्तुं स्वयं ध्यानपरोऽभवत् ॥
शनैः शनैर्यदा तेन आहरत्येष माधवः ।
तदा देहन्तु वाराहं सत्त्वहीनं व्यजायत ॥
तेजोहीनं यदा देहं ज्ञातं सर्व्वैरथामरैः ।
आससाद महादेवो यत्रवाराहमद्भुतम् ॥
ब्रह्माद्यास्त्रिदशाः सर्व्वे महादेवसुमापतिम् ।
अनुजग्मुस्तदा तेन आधातुं स्मरनाशने ॥
ततः सर्व्वैर्देवगणैः स्वं स्वं तेजो हृषध्वजे ।
आहिते तेन बलवान् सोऽतीव समजायत ॥
ततः शरभरूपी स तत्क्षणाद्गिरिशोऽभवत् ।
जङ्घाधोभागतश्चाष्टपादयुक्तः सुभैरवः ।
द्विलक्षयोजनोच्छ्रायः सार्द्धलक्षैकविस्तृतः ॥”

इति कालिकापुराणे २८ अध्यायः ॥

अस्य विवाहो यथा,—

ईश्वर उवाच ।

“हिताय सर्व्वजगतां सम्भोगायात्मनस्तथा ।
दारान् गृहीतुमिच्छामि तथा सन्तानवृद्धये ॥
साहाय्यं तत्र कुर्व्वन्तु भवन्तो मम सांप्रतम् ।
मदर्थे तनयां कालीं याचन्तान्तु हिमाचलम् ॥

मार्कण्डेय उवाच ।

हरं सम्बोध्य मुनयो त्वगच्छन् गिरिराड्गृहम् ।
तेन संपूजितास्ते तु प्रोचुस्ते मुनयो गिरिम् ॥
यश्चन्द्रशेखरो देवो देवदेवश्च यो मतः ।
शापानुग्रहयोः शक्तो य एको जगतां पतिः ॥
यः संहरति सर्व्वाणि जगन्ति प्रलयोद्भवे ।
यो विभूतिप्रदो भक्ते नानारूपो मनोहरः ॥
स ते दुहितरं कालीं भार्य्यामादातुमिच्छति ।
यदि पश्यसि त्वद्योग्यं वरं त्वं दुहितुः समम् ।
तदा प्रयच्छ तनयां कालीं शशिभृते गिरे ! ॥

मार्कण्डेय उवाच ।

इत्युक्तस्तैर्गिरिपतिर्व्वरं यद्धृदयस्थितम् ।
दुहितुश्च प्रियं ज्ञात्वाप्राप्यं मुदमगात्तदा ॥
दास्यामि/शर्म्भवे पुत्रीं युष्माभिः प्रार्थित-स्त्वहम् ।
पूर्व्वमेव तपस्तप्ता तयेशः पतिरीप्सितः ॥
धातुर्नियोजनमिदं कोऽन्यथा कर्त्तुमुत्सहेत् ।
कोऽन्यः प्रार्थयितुं शक्तः सुतां मम विना हरात् ॥
हरेणानुगृहीता या तामन्यः कः समुत्सहेत् ।
हरं गृहीत्वा मनसा नान्यं सापीह वाञ्छति ॥
इत्युक्त्वा मेनया सार्द्धं सुतां दातुञ्च शम्भवे ।
अङ्गीकृत्य विसृष्टास्ते मुनयोऽगुर्महेश्वरम् ॥
ते गत्वा मुनयः सर्व्वे मरीचिप्रमुखा द्विजाः ।
शैलराजो यदाचष्ट तद्वपुर्मदनारये ॥
हिमवांस्तनयां दातुं तुभ्यमुत्सहते हर ।
यदिदानीं त्वया कर्त्तुं युज्यते क्रियतान्तु तत् ॥
अस्मांश्चाप्यनुजानीहि हर गन्तुं निजाश्रमम् ।
सिद्धं ज्ञात्वा हरः कार्य्यं मुदितस्तान् विसृष्ट-वान् ।
यथायोग्यं समाभाष्य क्रमादेकैकशो मुनीन् ॥
कालीविवाहदिवसे यूयमायात मां प्रति ।
इति चापि हरेणोक्तं प्रतिश्रुत्यर्षयो ययुः ॥
अथान्योन्यप्रियतया कृत्वा कृत्वा गतागतम् ।
समयं कारयामास विवाहाय हरो गिरिम् ॥
माधवे मासि पञ्चम्यां सितपक्षे गुरोर्द्दिने ।
चन्द्रे चोत्तरफल्गुन्यां भरण्यादौ स्थिते रवौ ॥
आगता मुनयस्तत्र मरीचिप्रमुखा मुहुः ।
हरेण चिन्तिताः सर्व्वे तथा ब्रह्मादयः सुराः ॥
तथा च सर्व्वे दिक्पाला मुनयो ये तपोधनाः ।
शच्या सह तदा शक्रो ब्रह्माण्याद्यास्तु मातरः ॥
नारदश्च गतस्तत्र देवर्षिर्ब्रह्मणः सुतः ।
एतैः परिकरैः सार्द्धं गणैराप्यायितः स्वकैः ।
कन्याविवाहविधिना गिरिपुत्रीं हरोऽग्रहीत् ॥
विवाहे गिरिशा शम्भोः सर्पा येऽष्टौ तनौ स्थिताः ।
ते जाम्बूनदसन्नद्धा अलङ्कारास्तदाभवन् ॥
त्रिशूलोऽभून्महादेवो जटाः केशत्वमागताः ।
शिरःस्थितश्चन्द्रखण्डः शोभिया ज्वलितोऽभवत् ॥
ललाटनेत्रमभवत्तदा रत्नं महार्घकम् ।
विचित्रवसनं व्याघ्रकृत्तिराशीत्तदा द्विजाः ॥
विभूतिलेपोऽभूत्तस्य सुगन्धिमलयोद्भवः ।
चारुरूपो हरस्तत्र बभूवाद्भुतदर्शनः ॥
ततो देवाः सगन्धर्व्वाः सिद्धा विद्याधरोरगाः ।
विस्मयं परमं प्रापुर्हरं दृष्ट्वा तथाविधम् ।
हिमवान् मुदितश्चाभूत् सहपुत्रैश्च मेनया ।
ज्ञातयश्चास्य सुसुहृद्धरं दृष्ट्वा तथाविधम् ॥
इदं ब्रह्मा तत्र जगौ हरं दृष्ट्वा मनोहरम् ॥
सर्व्वं शिवकरं यस्माद्धस्मात्वस्माभवत् सुराः ।
तस्मात् शिवोऽयं लोकेषु नास्मादन्योऽधिकः शिवः ॥
महेश्वरसमायुक्तमीदृशं यः स्मरेत्तदा ।
सततं तस्य कल्याणं वाञ्छितञ्च भविष्यति ॥
एवं काली महामाया योगनिद्रा जगत्प्रसूः ।
पूर्व्वं दाक्षायणी भूत्वा पश्चात् गिरिसुताभवत् ॥
स्वयं समर्थापि सती काली सम्मोहितुं हरम् ।
तथाप्युग्रं तपस्तेपे हिताय जगतां शिवा ।
एवं सम्मोहयामास कालिका चन्द्रशेखरम् ॥
इत्येतत् कथितं सर्व्वं त्यक्तदेहा सती यथा ।
हिमवत्तनया भूत्वा पुनः प्राप महेश्वरम् ॥”

इति कालिकापुराणे ४३ अध्यायः ॥ * ॥

अस्य गणा यथा,—

पुलस्त्य उवाच ।

“हरोऽपि मन्दरे याते समाहूयाशु नन्दिनम् ।
प्राहामन्त्रय शैलादौ ये स्थितास्तत्र शासने ॥
ततो महेशवचनान्नन्दी सर्व्वगणाधिपः ।
उपस्पृश्य जलं धीमान् सस्मार गणनायकान् ॥
नन्दिना संस्मृताः सर्व्वे गणनाथाः महस्रशः ।
समुत्पत्य त्वरायुक्ताः प्रणताश्चित्रदशेश्वरम् ॥
आगतांश्च गणान्नन्दी कृताञ्जलिपुटोऽव्ययः ।
सर्व्वान्निवेदयामास शङ्कराय महात्मने ॥

नन्द्युवाच ।

यानेतान् पश्यसि शम्भो त्रिनेत्रान् जटिलान् शुचीन् ।
एते रुद्रा इति ख्याताः कोट्य एकादशैव च ॥
वानरास्यान् पश्यसि यान् शार्दूलसमविक्र-मान् ।
एते वै द्वारपालास्ते मन्नामानो यशोधनाः ॥
षण्मुखान् पश्यसि यांश्च शक्तिपाणीन् शिखि-ध्वजान् ।
षट् च षष्टिस्तथा कोट्यः स्कन्दनाम्नः कुमार-कान् ॥
एतावत्यस्तथा कोट्यः शाखा नाम षडानना ।
विशाखास्तावदेवोक्ता नैगमेयाश्च शङ्कर ! ॥
सप्तकोटिशताः शम्भो अमी वै प्रथमोत्तमाः ।
एकैकं प्रति देवेश तावत्यो ह्यपि मातरः ॥
भस्मारुणितदेहाश्च त्रिनेत्राः शूलपाणयः ।
एते शैवा इति प्रोक्तास्तव भक्ता गणेश्वराः ॥
तथा पाशुपताश्चान्ये भस्मप्रहरणा विभो ।
एते गणास्त्वसंख्याताः साहाय्यार्थं समागताः ॥
पिनाकधारिणो रौद्रा गणाः कालमुखाः परे ।
तव भक्ताः समायाता जटामण्डलिनोऽद्भुताः ॥
खट्वाङ्गयोधिनो वीरा रक्तचर्म्मसमावृताः ।
इमे प्राप्ता गणा योद्धुं महाव्रतिन उत्तमाः ॥
दिग्वाससो मौनिनश्च घण्टाप्रहरणास्तथा ।
निरामया नाम गणाः समायाता जगद्गुरो ॥
सार्द्धद्विनेत्राः पद्माक्षाः श्रीवत्साङ्कितवक्षसः ।
समायाताः खगारूढ़ा वृषभध्वजिनोऽव्ययाः ॥
महापाशुपता नाम चक्रशूलधरास्तथा ।
भैरवो विष्णुना सार्द्धमभेदेनार्च्चितो हि यैः ॥
इमे न्मृगेन्द्रवदनाः शूलबाणधनुर्द्धराः ।
गणास्त्वद्रोमसम्भूता वीरभद्रपुरोगमाः ॥
एते चान्ये च बहवः शतशोऽथ सहस्रशः ।
साहाय्यार्थं तवायाता यथाप्रीत्यादिशस्व तान् ।
ततोऽभ्येत्य गणाः सर्व्वे प्रणेमुर्वृषकेतनम् ॥”

इति वामनपुराणे ६४ अध्यायः ॥

अस्य लिङ्गपूजादि शिवलिङ्गशब्दे द्रष्टव्यम् ॥
अस्मात् कोचविहारदेशीयराजवंशोत्पत्तिर्यथा,

श्रीदेव्युवाच ।

“देवेश परमेशान सर्व्वज्ञ सर्व्वपूजित ।
क्व गच्छसि मुहुर्नाथ तत्पर्या वद शङ्कर ॥

ईश्वर उवाच ।
कोलाख्याने च दंष्ट्रे च योनिमण्डलमीपत ।
साध्वी सती धार्मिका हि रेवती जनविश्रुता ॥
म्लेच्छदेशोद्भवा या तु योगिनी सुन्दरी मता ।
सत्कुचौ कठिनौ तुङ्गौ योनिस्तस्याश्च पीवरा ॥
भिक्षाचारप्रसङ्गेन गच्छामि च दिवानिशम् ।
तत्सन्निधौ महेशानि तया मे रमणं भवत् ॥
देव्युवाच ।
कुलाचीनं किं तपस्तप्तं कथं प्राप्तं महीतलम् ।
त्वया सार्द्धं रतिर्येन स्यात् तापस्य तपस
फलम् ॥
तथापि च कृपा तस्यां लक्ष्यते महती मया ।
इदानीं किमभूत् सा हि कृपया मदया वद ॥
ईश्वर उवाच ।
नगेन्द्रतनये बाले श्रृणु सत्याधवल्लभे ।
प्रावरीचरितं किञ्चित् कथयामि शुचिस्मिते ॥
स्वस्त्रीसाधकाराद्वेकान्तकामने सदा ।
वेदाङ्गसम्भवा साध्वी योगिनी सा सुरी मता ॥
नाभूत्तस्याः सुखप्रश्नैः सत्क्रियायां गताक्षपे ।
नामामुसुलकट तन्न हृयेमे पैलकामहे ॥
एकान्त्राह्मने देवि पर्वते नीलसङ्कुले ।
तत्रैको ब्राह्मणो जातो भिक्षार्थं तामुवाच च ॥
न दत्तमुत्तरं तस्मै भिक्षा तिष्ठतु दूरतः ।
ततः प्रग्राम विप्रस्तां म्लेच्छतां याहि दुर्मदे ॥
इत्युक्ता सा ययौ विप्रो म्लेच्छत्वमाप योगिनी ।
क्षमाऽर्थेन प्रसर्थयेत् याचित न ददाति च ॥
स दुर्गतमवाप्नोत्समर्थो विनयचरेत् ।
तस्मात्तु तपसा देवि क्रीतोऽहमभवं सदा ॥
कलस्तया रतिर्जाता मम कामिनि सर्वदा ।
तस्याः पुत्रो विशुचिह्नो महीरत्नसमुद्भव ॥
एकेन जितवान् कामान् सौमारान् गौडपत्त-
मान् ।
विनिर्जित्य नृपान् सर्वान् एक श्रीमान् महा
मतिः ॥
तस्यापि बहवः पुत्राः पृथिवीपरिपालकाः ।
कुलाचाधार्मिकाः सर्वे राजानो युद्धदुर्मदाः ॥
सतोऽपि स विशुचिह्नो योगमायेव विश्रुते ।
तिष्ठत्ययमस्तरूपेण यत्रे चाकल्पमम्बिके ॥
कामात् वा माधवी देवी महेन्द्र लीनतां गता ।
यथा जाया नन्दिमाता तथैव योगिनी मता ॥
यथा पुत्रो भृङ्गरीटिस्तथा विशुममापलः ।
विशुचिह्नोऽपि कल्पान्ते परां सिद्धिमवाप्यति ॥
तद्वंशजास्तु राजानः सर्वे कैलासवासिनः ।
भविष्यन्ति महात्मानो गगेशाः सर्वप्रापिनः ॥
रूपयौवनसम्पन्नैर्देवकन्याभिः सह ।
विहरन्ति यदा देवि क्रीडन्ति भैरवा यथा ॥
यदा यदा महामाये कामाख्यायां भवेत् पुनः ।
तदा तदा वसौमार्थं विश्वकामस्य पालकः ॥
तथा तद्वंशजाः सर्वे भवेयुः कामपालकाः ।
कल्पान्तमेव देवाद्रि यावत् प्राणो विमुच्यते ॥
तावदेव महामाये महीव्यात् क्षाहन ध्रुवम् ।
कल्पमेव महेशानि कर्त्ता वर्षेशयम ॥

यावत् परमेशानि सुकर्त्ता प्राप परात्मिके ।
कामाख्या हि महामाये तत्पत्नी मङ्गला भवेत् ॥
एव ते कथितं देवि सन्ताप्रापविमोचनम् ।
कामाख्यायां महेशानि सार्वकालेन मया ध्रुवम् ॥'
इति श्रीयोगिनीतन्त्रे देवीश्वरसंवादे चतुर्विंशति
साहस्रे १३ पटल ॥ मोच । कोलकवृक्ष ।
वालुकम् । गुग्गुलु । वेद । पुष्करीकद्रुम ।
इति मेदिनी । कृष्णधुस्तूर । पारद । इति
राजनिर्घण्टः । देव । इति शब्दरत्नावली ।
लिङ्ग । इत्युणादिकोष । विष्कम्भादिषु
विंशतियोगान्तर्गतविंशतितमयोग । तत्र जात
फलम् ।
"महेशभक्त शुचिपारदृश्वा
जितेन्द्रियस्तत्तनुसंहितात्मा ।
शिवाभिधाने खलु योगराज
प्रसूतिकाले यदि मानवानाम् ।"
इति कोष्ठीप्रदीप ।
शिवक पुं कीलक । इत्यमरः । इ खूँटा इति
ख्यात । गवां गात्रकण्डूयनार्थं गोष्ठे निखात
स्तम्भे इति सुभूति । कण्डूयनार्थकाष्ठे इति
कश्चित् । बन्धनदण्ड इति केचित् । यत्र बद्धा
गौर्दुह्यते इति केचित् । शयति गात्रकण्डूं शिव
णो तत्करोति काष्ठिति शिव एवं क
शिवकस्तालव्यादि । कीलयति बध्नातेऽस्मिन् कील
कील बन्धे घञ् स्वार्थे क कीलक । इति
भरत ॥
शिवकर, पु (शिवस्य कर ।) चतुर्विंशति
भूतार्हदन्तर्गतजिनविशेष । इति हेमचन्द्र ॥
मङ्गलकारके त्रि ।
शिवकाञ्ची, स्त्री, पुरीविशेष । यथा —
"शिवकाञ्ची विष्णुकाञ्ची काञ्चीयुगमथ प्रभातम् ।
एतस्मात् पृथिवीमध्ये न गमयन् कदाचन ।
काञ्ची शिवत्रिमूलस्था काञ्ची हरिहरात्मिका ।
वामदक्षिणदत्ताभ्यां दधार द्विजपुङ्गवा ।"
इति भूतशुद्धितन्त्रम् ।
शिवकीर्त्तन पुं (शिवं सुखकर कीर्त्तनं यस्य ।)
भृङ्गरीट । विष्णु । इति मेदिनी । शैव ।
इति शब्दरत्नावली ।
शिवगति, पु भूताईद्विशेष । इति हेमचन्द्र ।
शिवघर्मज, पु (शिवघर्मात् जात । जन्+ड ।)
मङ्गलग्रह । अस्य प्रमाण मङ्गलशब्दे द्रष्ट
-व्यम् ।
शिवङ्कर, त्रि मङ्गलकर्त्ता । तत्पर्याय । चेम
ङ्कर २ अरिष्टतातिः ३ शिवतातिः ४ । इति
हेमचन्द्र । (पु वालग्रहविशेष । यथा हरि
वंशे । १६६ । ७५ ।
"सचन्द्र सकुचम कालभूत शिवङ्कर ।")
शिवचतुर्दशी, स्त्री, (शिवप्रिया चतुर्दशी ।)
चतुर्दशीकर्त्तव्यशिवव्रतविशेष । यथा,—
नन्दिकेश्वर उवाच ।
"ब्रह्मण्यावहितो ब्रह्मन् वक्ष्ये माहेश्वरं व्रतम् ।
त्रिषु लोकेषु विख्यातं नाम्ना शिवचतुर्दशी ।

मार्गशीर्षे त्रयोदश्यां सितायामेकभक्तकम् ।
प्रार्थयेद्देवदेवेश त्वामहं शरणं गतः ।
चतुर्दश्यां निराहारः समभ्यर्च्य च शङ्करम् ।
सुवर्णवृषभं दत्त्वा भोक्ष्यामीति परेऽहनि ।
एव नियमकृत् सुप्त्वा प्रातरुत्थाय मानवः ।
कृतस्नानजप पश्चादुमया सह शङ्करम् ।
पूजयेत् कमलैः शुक्लैर्गन्धधूपानुलेपनैः ।
पादौ नम शिवायेति शिरः सर्वात्मने नमः ।
ललाटं वामदेवाय नेत्राणि हरये नमः ।
मुखमिन्दुमुखायेति श्रीकण्ठायेति कन्धरम् ।
सद्योजाताय कर्णौ तु वामदेवाय वै भुजौ ।
अघोरहृदयायेति हृदयञ्चापि पूजयेत् ।
स्तनौ तत्पुरुषायेति तथेशायेति चोदरम् ।
पार्श्वे चानन्तधर्माय ज्ञानभूताय वै कटिम् ।
ऊरू चानन्तवैराग्यसिंहायेति च पूजयेत् ।
अनन्तैश्वर्यनाथाय जानुनी चार्चयेद्बुध ।
प्रधानाय नमो जङ्घे गुल्फौ व्योमात्मने नमः ।
व्योमकेशात्मरूपाय पृष्ठमभ्यर्चयेन्नरः ।
नमः पुष्ट्यै नमस्तुष्ट्यै पार्वतीञ्चापि पूजयेत् ।
ततस्तु वृषभं हैमसुदकुम्भसमन्वितम् ।
शुक्लमाल्याम्बरयुतं पञ्चरत्नसमन्वितम् ।
भक्ष्यैर्नानाविधैर्युक्तं ब्राह्मणाय निवेदयेत् ।
प्रीयतां देवदेवोऽत्र सद्योजात पिनाकधृक् ।
ततस्तु विप्रानन्नेन तर्पयेच्छक्तितः शुभान् ।
पृषदाज्यञ्च सम्प्राश्य स्वपेद्भूमावुदङ्मुखः ।
पञ्चदश्यां ततः पूज्य विप्रान् भुञ्जीत वाग्यतः ।
तद्वत् कृष्णचतुर्दश्यामेतत् सर्वं समाचरेत् ।
चतुर्दशीषु सर्वासु कुर्यात् पूर्ववदर्चनम् ।
ये तु मासविशेषाः स्युस्तान्निबोध क्रमादिह ।
मार्गशीर्षादिमासेषु क्रमेणैतदुदीरयेत् ।
शङ्कराय नमस्तुभ्यं नमस्ते करवीरकम् ।
त्र्यम्बकाय नमस्तेऽस्तु महेश्वर नमः परम् ।
नमस्तेऽस्तु महादेव स्थाणवे च ततः परम् ।
नमः पशुपते नाथ नमस्ते शम्भवे पुनः ।
नमस्ते परमानन्द नमः सोमार्द्धधारिणे ।
नमो भीमाय इत्येवं त्वामहं शरणं गतः ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पञ्चगव्यं तथा बिल्वं यवान् गोशृङ्गवारि च ।
तत्ताञ्च कृष्णान् विधिवत् प्राशनं क्रमशः
स्मृतम् ।
प्रतिमासं चतुर्दश्योरेकैकं प्राशनं स्मृतम् ।
मन्दारैर्मालतीभिश्च तथा धुस्तूरकैरपि ।
सिन्धुवारैरशोकैश्च मल्लिकाभिश्च पाटलैः ।
अर्कपुष्पैः कदम्बैश्च शतपत्रैस्तथोत्पलैः ।
एकैकेन चतुर्दश्यामर्चयेत् पार्वतीपतिम् ।
पुनश्च कार्त्तिके मासि सम्प्राप्ते तर्पयेत् द्विजान् ।
अन्नैर्नानाविधैर्भक्ष्यैर्वस्त्रमाल्यविभूषणैः ।
कृत्वा नीलवृषोत्सर्गं श्रुत्युक्तविधिना नरः ।
उमामहेश्वरं हैमं वृषभञ्च गवा सह ।
मुक्ताफलाष्टकयुतं सितनेत्रपटावृतम् ।
सर्वोपस्करयुक्तायां शय्यायां तदकुम्भयोः ।
ताम्रपात्रोपरि पुनः शालितण्डुलसंयुतम् ।

स्नाप्य विप्राय शान्ताय वेदव्रतपराय च ॥
ज्येष्ठसामविदे देयं न वकव्रतिने क्वचित् ।
गुणाढ्ये श्रोत्रिये दद्यादाचार्य्ये तत्त्ववेदिनि ॥
अव्यङ्गाङ्गाय सौम्याय सदाकल्याणकारिणि ।
सपत्नीकाय संपूज्य माल्यवस्त्रविभूषणैः ॥
गुरौ सति गुरोर्देयं तदभावे द्विजातये ।
न वित्तशाठ्यं कुर्व्वीत कुर्व्वन् मोहात् पतत्यधः ॥
अनेन विधिना यस्तु कुर्य्यात् शिवचतुर्द्दशीम् ।
सोऽश्वमेधसहस्रस्य फलमाप्नोति मानवः ॥
ब्रह्महत्यादिकं किञ्चिद्यदत्रामुत्र वा कृतम् ।
पितृभिर्भ्रातृभिश्चैव तत् सर्व्वं नाशमाप्नुयात् ॥
दीर्घायुरारोग्यकुलाभिवृद्धि-
रत्राक्षयामुत्र चतुर्भुजत्वम् ।
गणाधिपत्यं दिवि कल्पकोटि-
शतं वसित्वा पदमेति शम्भोः ॥
न बृहस्पतिरप्यनन्तमस्याः
फलमिन्द्रो न पितामहोऽपि वक्तुम् ।
न च सिद्धगणोऽप्यलं न चाहं
यदि जिह्वायुतकोटयोऽपि वक्त्रे ॥
भवत्यमरवल्लभः पठति यः स्मरेद्वा सदा
शृणोति च विमत्सरः सकलपापविध्वंसिनीम् ।
इमां शिवचतुर्द्दशीममरकामिनीकोटयः
स्तुवन्ति तमनिन्दितं किमु समाचरेद्यः सदा ॥
या वाथ नारी कुरुते च भक्त्या
भर्त्तारमापृच्छ्य सुतं गुरुं वा ।
सापि प्रसादात् परमेश्वरस्य
परं पदं याति पिनाकपाणेः ॥”
इति मात्स्ये शिवचतुर्द्दशीव्रतं ८० अध्यायः ॥*॥
फाल्गुनी कृष्णा चतुर्दशी । तत्र शिवव्रतं कर्त्त-व्यम् । तस्य विवरणं शिवरात्रिशब्दे द्रष्टव्यम् ॥

शिवज्ञा, स्त्री, ( शिवं जानातीति । ज्ञा+कः ।) शिवोपासिका । मङ्गलज्ञात्री । शिवं जानाति या इत्यर्थे कप्रत्ययः ॥

शिवज्ञानं, क्ली, (शिवस्य ज्ञानमस्मात् ।) शुभा-शुभकालबोधकशास्त्रम् । यदा यात्रादिक्रिया अवश्यकर्त्तव्या ज्योतिःशास्त्रोक्तशुभक्षणप्राप्तिश्च न भवति तदा शिवज्ञानोक्तशुभसमये कर्म्म कर्त्तुमुचितं भवति । एतच्छिवज्ञानोक्तमाहेन्द्र-योगे संतयात्रादिर्जयं अमृतयोगे कार्य्यसिद्धिं वक्रे कार्य्यनाशं शून्ये मृत्युं अपमानं वा प्राप्नोति । दिवारात्रौ माघ-फाल्गुन-चैत्र-वैशाखश्रावणभाद्रेषु एते योगा एकरूपाः आश्विनकार्त्तिकाग्रहायणपौषेषु एकप्रकाराः ज्यैष्ठाषाढयोश्च एकरूपा भवन्ति ॥ यथा,—

माघ-फाल्गुन-चैत्र-वैशाख-श्रावण-भाद्रेषु
दिवादण्डा यथा ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रविवारे | मा २ | अ ८ | मू ८ | मा २ | व १० । | | | |
| सोमवारे | अ ४ | व ८ | अ ६ | व ६ | मा ४ | मू २ । | | |
| मङ्गलवारे | व ४ | मू २ | अ ६ | व ४ | मू २ | घ ४ | मू २ | अ |
| बुधवारे | अ ४ | व ६ | अ ४ | मू २ | व ४ | मा ४ | घ ४ | मू |
| गुरुवारे | मा ४ | मू २ | व ६ | मा ६ | मू ४ | व ४ | मू ४ । | |
| शुक्रवारे | अ २ | व २ | अ ६ | व ६ | अ ६ | मू ४ | अ ४ । | |
| शनिवारे | मू ४ | व ४ | मू २ | घ ८ | मू ४ | व ४ | मू ४ । | |

तेषु रात्रिदण्डा यथा ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रविवारे | मू २ | मा २ | अ ४ | व ८ | मा ८ | मू ६ । | | |
| सोमवारे | व २ | अ ६ | व ६ | अ ८ | मू ८ । | | | |
| मङ्गलवारे | अ २ | व ४ | मू २ | अ ६ | व ६ | अ ४ | व ४ | मू २ |
| बुधवारे | मू २ | अ ६ | मा ४ | व ४ | मू ४ | अ १० । | | |
| गुरुवारे | व १४ | मू ४ | व ४ | अ २ | मू ६ । | | | |
| शुक्रवारे | व ४ | अ ४ | मू ४ | मा २ | व ६ | मू ४ | अ २ | मा २ |
| शनिवारे | मू २ | व ४ | अ ६ | व ४ | अ ४ | व २ | घ ४ | मू ४ । |

आश्विन-कार्त्तिकाग्रहायणपौषेषु
दिवादण्डा यथा ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रविवारे | मू २ | अ ६ | व ८ | अ ८ | मू २ | मा २ | मू २ । | |
| सोमवारे | अ ४ | मू ४ | घ ६ | व १६ । | | | | |
| मङ्गलवारे | अ २ | व २ | अ १० | व ६ | मू ६ | व ४ । | | |
| बुधवारे | अ २ | मा २ | अ २ | व ६ | अ ६ | मू २ | मा ६ | व ४ । |
| गुरुवारे | अ ४ | व ४ | मू ४ | व ६ | मू २ | घ ४ | व ६ । | |
| शुक्रवारे | अ २ | व २ | अ ६ | व ६ | अ ८ | मू २ | अ ४ । | |
| शनिवारे | अ २ | व २ | अ ६ | व ६ | अ ८ | मू २ | अ ४ । | |

तेषु रात्रिदण्डा यथा ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रविवारे | मू २ | व ४ | अ ४ | व ६ | अ ४ | मू २ | अ ८ । | |
| सोमवारे | व ६ | अ ८ | व ८ | अ २ | व ६ । | | | |
| मङ्गलवारे | मा ६ | अ २ | मू २ | अ ६ | व ४ | मा ४ | मू २ | अ ४ । |
| बुधवारे | व २ | अ २ | व ४ | अ १६ | व २ | मू ४ । | | |
| गुरुवारे | मू २ | अ ८ | व ६ | अ ८ | मू २ | अ ४ । | | |
| शुक्रवारे | व २ | अ ८ | व ६ | अ ८ | मू २ | अ ४ । | | |
| शनिवारे | व १४ | मू ४ | व ४ | अ २ | मू ६ । | | | |

ज्यैष्ठाद्यायोर्दिवारक्षा यथा।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रविवारे | शू ४ | च ६ | व ६ | च ६ | व ४ | मा २ | शू २। | |
| सोमवारे | व ८ | च ४ | शू ६ | व ८ | शू ४। | | | |
| मङ्गलवारे | च ६ | शू ४ | च ६ | व ६ | मा २ | च २ | मा २ | श २। |
| बुधवारे | शू २ | व ४ | च ८ | व ६ | च ८ | शू ४। | | |
| गुरुवारे | मा २ | शू २ | व ६ | मा ४ | शू ४ | व ६ | च ६। | |
| शुक्रवारे | शू २ | मा २ | व ६ | मा २ | शू ४ | च ६ | व ४ | शू ४। |
| शनिवारे | मा २ | शू २ | व ६ | मा ६ | शू ४ | व ४ | च ६। | |

तत्र रात्रिदण्डा यथा।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| रविवारे | च ४ | शू ४ | व ४ | च ६ | व ८ | शू ४। | | |
| सोमवारे | व ८ | च ८ | शू ४ | च ४ | शू २ | मा २ | शू २। | |
| मङ्गलवारे | च २ | व ४ | मा ४ | शू ४ | व २ | च ६ | शू २ | व ६। |
| बुधवारे | च १० | शू २ | व ४ | च ४ | शू १०। | | | |
| गुरुवारे | शू २ | च ६ | शू २ | व ४ | शू २ | च ६ | शू ४ | च ४। |
| शुक्रवारे | च ६ | शू २ | व ४ | शू ६ | च ६ | शू २ | च ४। | |
| शनिवारे | शू २ | च २ | व ८ | शू २ | च ६ | शू ४ | च ६। | |

मतान्तरे अस्य प्रमाणं यथा —
'माहेन्द्रे विजयो नित्यं लभ्यते कार्य्यशोभनम्।
वह्नौ कार्य्यविनाशः स्याच्छून्ये च मरणं ध्रुवम्।
वैशाखादिश्रावणान्तं एकभावेन सर्वदा।
अन्तादि दिवारात्रौ चतुर्मासं यथाक्रमम्।
यामसाम्ये दिवामाने ज्ञेयं सर्वत्र मासके।
तत्प्रमाणेन मानश्च दण्डमानं विचक्षणैः।
रात्रिमानप्रमाणेन ज्ञेयो दण्डप्रमाणकः।
न वारतिथिनक्षत्रं न योगकरणं तथा।
शिवज्ञानं समासाद्य सर्व्वं सुविनिवारयेत्।"
तथा।
'भाद्राश्विनमार्गपर्य्यन्तं सप्तवारे समादिशेत्।
शून्यचक्राग्नियोगं हि पौषाश्विन्योस्तथा।'
इति ज्योतिषे शिवज्ञानम्।०।
अनेकप्रकारं शिवज्ञानं शिवाख्या शिवालिखित अन्नघटी च दृष्ट किन्तु परस्परमनैक्य जातम्।
शिवताति, स्त्री कल्याणकारिणी। इति हेमचन्द्र। अस्य पर्य्याय शिवङ्करशब्दे द्रष्टव्य।
शिवदत्त क्ली (शिवेन दत्तम्।) विष्णुचक्रम्। इति केचित्। शिवेन शिवाय वा दत्त मत्र मात्रम्।
शिवदारु, क्ली (शिवस्य दारु।) देवदारुवृक्ष। इति राजनिर्घण्ट।
शिवदूतिका, स्त्री (शिवदूती+स्वार्थे कन्।) मातृकाविशेष। इति शब्दरत्नावली।
शिवदूती स्त्री (शिवेन दूतयति सन्दिश प्रापयती कर्त्तरि दूत+णिच्+पचाद्यच्। यद्वा शिवो दूतो यस्या। गौरादित्वाज्ङीष्।) दुर्गा। इति जिकाण्डशेष। योगिनीविशेष। यथा,
"ब्रह्माणी प्रथमा प्रोक्ता ततो माहेश्वरी परा।
कौमारी वैष्णवी चैव वाराही पञ्चमी तथा।
नारसिंही तथैन्द्री शिवदूती तथाष्टमी।
एता पूज्या महाभागा योगिनी काम दायिनी।"

तस्या उत्पत्तिमन्त्रध्यानादि यथा —
"कौशिक्या हृदयाद्देवी नि सृता ध्यानतो हरे।
शिवदूतीति विख्याता शिवाशतसमावृता।
मन्त्रमस्या प्रवक्ष्यामि धर्म्मकामार्थदायकम्।
यत् श्रुत्वा साधको याति दुर्लभं शिवमन्दिरम्।
येनाराध्य महादेवीं शिवदूतीं शिवात्मिकाम्।
न चिराल्लभते कामान् सर्व्वजयी भवेत्।
अन्त समान्विन्दुयुतो विन्दिन्दुभ्यां दशावरा।
स्वरेण पान्तदन्त्येन षष्ठदीर्घेण पूर्व्वश।
स एव विन्दुयुगलपूर्व्वस्योपान्त्यपावक।
षष्ठस्वरकलायुक्ते स्वहित प्रथमस्थित।
मन्त्रोऽयं शिवदूत्यास्तु शिवदूतीजयप्रद।
रूपमस्या प्रवक्ष्यामि शृणु वत्सक सत्तम।
चतुर्भुज महाकायं सिन्दूरसदृशद्युतिम्।
रक्ताम्बरं मुण्डमालाजटाजूटार्द्धचन्द्रकम्।
नागकुण्डलहाराभ्यां शोभितं नखरोज्ज्वलम्।
व्याघ्रचर्म्मपरीधानं दक्षिणे शूलचक्रकम्।
वामे पाशं तथा चर्म्म बिभ्रतीं परिकमात्।
स्थूलवक्त्रं पीनोरु तुङ्गमूर्त्तिं भयङ्करम्।
निधाय दक्षिणं पादं संस्थितं कुणपोपरि।
वामपादं शृगालस्य पृष्ठे निवेशितं सुतम्।
इदृशं शिवदूत्यास्तु मूर्त्तिं ध्यायेद्विभूतये।
ध्यानमाधारयेत्तस्याः नर कल्याणमाप्नुयात्।
पूजनाद्चिराद्देवी सर्व्वान् कामान् ददाति च।
य शिवाविरुतं श्रुत्वा शिवदूतीं शिवप्रदाम्।
प्रणमेत् साधको भक्त्या तस्य कामा करे स्थिता।
यत्र अवाप जननी रक्तबीजविनाय वै।
महादेवी महामाया तन्नाम्ना कामदा स्मृता।
दूतं प्रस्थापयामास शिवं शुम्भाय चाम्बिका।
तेन सा शिवदूतीति लोके सर्व्वे प्रगीयते।
उग्रचण्डी च शान्ता च चण्डमाता महोग्ररी।
कराला कामदा देवी भगास्या भगमालिनी।
भगोदरी भगाद्यारा भगलिङ्गा भगा तथा।
एता द्वादश योगिन्य पूजने परिकीर्त्तिता।
एता द्वादश योगिन्य शिवदूत्या सदैव हि।
विचरन्ति स्वयं देवी यत्र यत्रैव गच्छति।"
इति कालिकापुराणे उत्तरतन्त्रे ५० अध्याय। प्रमाणान्तरं वामने ५३ अध्याय मार्कण्डेयपुराणे स्तवमाहात्म्ये रक्तबीजवधाध्याये च द्रष्टव्यम्।
शिवद्रुम पु (शिवप्रियो द्रुम।) बिल्ववृक्ष। इति राजनिर्घण्ट।
शिवद्विष्टा, स्त्री, (शिवेन द्विष्टा तत्पूजनानर्हत्वात्।) केतकी। इति राजनिर्घण्ट।
शिवधातु पुं (शिवस्य धातु।) पारदम्। पारद शिववीर्य्यं स्यादिति दर्शनात्। गोमन्त मणि। इति कश्चित्।
शिवनाभि, पुं (शिवस्य नाभिरिव।) शिवलिङ्गविशेष। यथा,—
"उत्तम मध्यमश्चैव त्रिविध लिङ्गमीरितम्।
चतुरङ्गुलमुत्सेध रम्य वेदिकयान्वितम्।
उत्तमं लिङ्गमाख्यातं मुनिभि शास्त्रकोविदै।
तदर्द्ध मध्यम प्रोक्त तदर्द्धमधमं स्मृतम्।
शिवनाभिमयं लिङ्गं प्रतिपूज्य महाविधि।
ऐहिकं सर्व्वसिद्धिं च लभते पूर्व्वं विधानत।"
इति वीरमित्रोदय।
शिवपुरी स्त्री (शिवस्य पुरी।) काशी। इति हेमचन्द्र।
शिवप्रिय, क्ली, (शिवस्य प्रियम्।) रुद्राक्षम्। इति राजनिर्घण्ट। शिवस्य प्रियदर्शनि।
शिवप्रिय, पुं (शिवस्य प्रिय।) बकवृक्ष। इति जटाधर। स्फटिक। धुस्तूर। इति राजनिर्घण्ट।
शिवप्रिया, स्त्री (शिवस्य प्रिया।) दुर्गा। इति शब्दमाला।

शिवमल्लकः, पुं, अर्ज्जुनवृक्षः । इति राजनिर्घण्टः ॥

शिवमल्लिका, स्त्री, ( शिवप्रिया मल्लिका । ) वकः । इति राजनिर्घण्टः ॥

शिवमल्ली, स्त्री, ( शिवप्रिया मल्ली । ) वकवृक्षः । इत्यमरः ॥

शिवरसः, पुं, वांशात् पर्य्युषितरसः । तत्पर्य्यायः । अश्मोदकजः २ । अस्य गुणाः । दीपनत्वम् । मधुरत्वम् । अम्लत्वम् । अस्रगदाहहत्वम् । लघुतर्पणत्वञ्च । इति राजनिर्घण्टः ॥

शिवरात्रिः, स्त्री, ( शिवप्रिया रात्रिः । ) शिवचतुर्द्दशी । यथा, कालमाधवीये स्कान्दे नागरखण्डम् ।
"माघमासस्य शेषे या प्रथमे फाल्गुनस्य च ।
कृष्णा चतुर्द्दशी सा तु शिवरात्रिः प्रकीर्त्तिता ॥"
अनेकस्यास्तिथेर्म्माघीयत्वफाल्गुनीयत्वे मुख्यगौणवृत्तिभ्यां अविरुद्धे । ततस्तु माघानन्तरा चतुर्द्दशी शिवरात्रिः तस्यामुपवासः प्रधानम् ।
"न स्नानेन न वस्त्रेण न धूपेन न चार्च्चया ।
तुष्यामि न तथा पुष्पैर्यथा तत्रोपवासतः ॥",
इति शङ्करोक्तेः ॥ * ॥
स्कान्दे ।
"ततो रात्रौ प्रकर्त्तव्यं शिवप्रीणनतत्परैः ।
प्रहरे प्रहरे स्नानं पूजाश्चैव विशेषतः ॥"
अत्र वीप्सया प्रहरचतुष्टयसाध्यं व्रतं प्रतीयते ।
नरसिंहाचार्य्यधृतेश्वरसंहितायाम् ।
"शैवो वा वैष्णवो वापि यो वा स्यादन्यपूजकः ।
सर्व्वं पूजाफलं हन्ति शिवरात्रिवहिर्म्मुखः ॥" *
संवत्सरप्रदीपे ।
"दुग्धेन प्रथमं स्नानं दध्ना चैव द्वितीयके ।
तृतीये च तथाज्येन चतुर्थे मधुना तथा ॥"
ईशानसंहितायाम् ।
"माघे कृष्णचतुर्द्दश्यां रविवारो यदा भवेत् ।
भौमो वापि भवेद्देवि कर्त्तव्यं व्रतमुत्तमम् ॥
शिवयोगस्य योगेन तद्भवेदुत्तमोत्तमम् ।
शिवरात्रिव्रतं नाम सर्व्वपापप्रणाशनम् ।
आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम् ॥"
नागरखण्डे ।
"उपवासप्रभावेण बलादपि च जागरात् ।
शिवरात्रेस्तथा तस्य लिङ्गस्यापि प्रपूजया ।
अक्षयान् लभते लोकान् शिवसायुज्यमाप्नुयात् ॥"
पाद्मे ।
"वर्षे वर्षे महादेवि नरो नारी पतिव्रता ।
शिवरात्रौ महादेवं कामं भक्त्या प्रपूजयेत् ॥"
ईशानसंहितायाम् ।
"एवमेव व्रतं कुर्य्यात् प्रति संवत्सरं व्रती ।
द्वादशाब्दिकमेतद्धि चतुर्व्विंशाब्दिकं तथा ।
सर्व्वान् कामानवाप्नोति प्रेत्य चेह च मानवः ॥"
हेमाद्रिधृता स्मृतिः ।
"प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्द्दशी ॥"
प्रदोषमाह वत्सः ।
"प्रदोषोऽस्तमयादूर्द्ध्वं घटिकाद्वयमिष्यते ॥"
ऊर्द्ध्वमनन्तरम् । वायुपुराणे ।
"त्रयोदश्यस्तगे सूर्य्ये चतसृष्वपि नाडिषु ।
भूतविद्धा तु या तत्र शिवरात्रिव्रतञ्चरेत् ॥"
ईशानसंहितायाम् ।
"माघे कृष्णचतुर्द्दश्यामादिदेवो महानिशि ।
शिवलिङ्गतयोद्भूतः कोटिसूर्य्यसमप्रभः ॥
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः ।
अर्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्द्दशी ॥
व्याप्ता सा दृश्यते यस्यां तस्यां कुर्य्याद्‌व्रतं नरः ॥"
अत्र ।
"महानिशा द्वे घटिके रात्रेर्मध्यमयामयोः ॥"
इति देवलोक्तौ महानिशा ग्राह्या ॥ घटिका एकदण्डः । एवञ्च यद्दिने प्रदोषनिशीथोभयव्यापिनी चतुर्द्दशी तद्दिने व्रतं उभयव्याप्त्यनुरोधात् । कालमाधवीयेऽप्येवम् । एतेन परदिने उभयव्यापित्वेऽपि पूर्व्वदिवसीयरात्रिद्वितीययामप्रभृतिचतुर्द्दशीसत्त्वे बहुप्रहरव्यापित्वेन पूर्व्वदिन एव व्रतमिति निरस्तम् । यदा तु पूर्व्वेद्युर्निशीथमात्रव्याप्तिः परेद्युः प्रदोषमात्रव्याप्तिस्तदा पूर्व्वेद्युर्व्रतम् । प्रधानकालव्याप्त्यनुरोधात् ।
"पूर्व्वेद्युरपरेद्युर्व्वा महानिशि चतुर्द्दशी ।
व्याप्ता सा दृश्यते यस्यां तस्यां कुर्य्याद्‌व्रतं नरः ॥"
इतीशानसंहितावचनाच्च ॥
एतद्विषय एव भविष्यपुराणम् ।
"अर्द्धरात्रात् पुरस्तात्तु जयायोगो भवेद्यदि ।
पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः ॥"
विष्णुधर्म्मोत्तरे ।
"जयन्ती शिवरात्रिश्च कार्य्ये भद्रजयान्विते ।
कृत्वोपवासं तिथ्यन्ते तदा कुर्य्याच्च पारणम् ॥"
तिथ्यन्ते पारणं जयन्तीमात्रपरं अत्र चतुर्द्दश्यामेव तत् ।
"ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै ।
पूजितानि भवन्तीह भूतायां पारणे कृते ॥"
इति स्कान्दात् ॥
"दिनमानप्रमाणेन या तु रात्रौ चतुर्द्दशी ।
शिवरात्रिस्तु सा ज्ञेया चतुर्द्दश्यान्तु पारणम् ॥"
इति गौतमीयाच्च ॥
यदा तु पूर्व्वदिने न निशीथव्याप्तिः परदिने प्रदोषमात्रव्यापिनी तदा परा ग्राह्या । प्रदोषव्यापिनीति प्रागुक्तत्वात् तिथेस्त्रिसन्ध्यव्यापित्वाच्च । एतद्विषय एव लिङ्गपुराणम् ।
"शिवरात्रिव्रते भूतां कामविद्धां विवर्ज्जयेत् ।
एकेनैवोपवासेन ब्रह्महत्यां व्यपोहति ॥"
अत्रामावास्यायामेव पारणम् ।
"शिवा घोरा तथा प्रेता सावित्री च चतुर्द्दशी ।
कुहूयुक्तैव कर्त्तव्या कुह्वामेव हि पारणम् ॥"
इति वचनात् ॥ * ॥
तदयं संक्षेपः । यद्दिने प्रदोषनिशीथोभयव्यापिनी चतुर्द्दशी तद्दिने व्रतम् । यदा तु पूर्व्वेद्युर्निशीथव्यापिनी परेद्युः प्रदोषमात्रव्यापिनी तदा पूर्व्वेद्युर्व्रतम् । यदा तु न पूर्व्वेद्युर्निशीथव्याप्तिः परेद्युः प्रदोषव्यापिनी तदा परदिने । पारणन्तु परदिने चतुर्द्दशीलाभे चतुर्द्दश्यां तदलाभे अमावस्यायाम् । तत्र प्रयोगः ॥ * ॥
प्रातरुदङ्मुखः नत सदिक्सूर्य्यः सूर्य्यः सोम इति पठित्वा जलादीन्यादाय सङ्कल्पयेत् ।
"मन्त्रेणानेन गृह्णीयाच्छियमं भक्तिमान्नरः ।
शिवरात्रिव्रतं ह्येतत् करिष्येऽहं महाफलम् ।
निर्व्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते ॥"
इति शिवरहस्यात् शिवरात्रि इत्यादिना नियम्य ।
"चतुर्द्दश्यां निराहारो भूत्वा शम्भो परेऽहनि ।
भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर ॥"
इति गरुड़पुराणीयं पठेत् ।
रात्रौ प्रथमप्रहरे प्रतिष्ठिते लिङ्गे अप्रतिष्ठिते वा प्रतिष्ठां विधाय पूजां कुर्य्यात् । ह्रौं अस्त्राय फड़िति पादघातत्रयेण विघ्नान्निःसार्य्य तेनैव तालत्रयेण करच्छोटिकया च दशदिग्बन्धनं कृत्वा भूतशुद्धिं विधाय ह्रां हृदयाय नम इत्यादिना षड़ङ्गानि न्यस्य ह्रौं इति मन्त्रेण प्राणायामं विधाय पूजयेत् । पार्थिवलिङ्गे चेत्तदा वक्ष्यमाणपूजाविधिना पूजयेत् । तत्रायं विशेषः । ह्रौं ईशानाय नम इति प्रथमप्रहरे दुग्धेन स्नापयित्वा पुनर्जलेन स्नापयित्वा ।
"शिवरात्रिव्रतं देव पूजाजपपरायणः ।
करोमि विधिवद्दत्तं गृहाणार्घ्यं महेश्वर ॥"
इत्यनेनार्घ्यं दत्त्वा गन्धादिभिः संपूज्य मूलमन्त्रं जपित्वा प्रणम्य गीतनृत्यादिभिस्तं प्रहरं नयेत् ।
तद्दानं तज्जपः स्नानं तत्कथाश्रवणादिकम् ।
उपवासकृतां ह्येते गुणाः प्रोक्ता मनीषिभिः ॥"
इति देवीपुराणे सामान्यतः श्रवणात् अत्रापि तथा ॥ * ॥ द्वितीयप्रहरे तु विशेषः । ह्रौं अघोराय नम इति दध्ना स्नानम् । अर्घ्यमन्त्रस्तु ।
"नमः शिवाय शान्ताय सर्व्वपापहराय च ।
शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सह ॥" * ॥
तृतीयप्रहरे तु । ह्रौं वामदेवाय नम इति घृतेन स्नानम् । अर्घ्यमन्त्रस्तु ।
"दुःखदारिद्र्यशोकेन दग्धोऽहं पार्व्वतीश्वर ।
शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण मे ॥" * ॥
चतुर्थप्रहरे तु । ह्रौं सद्योजाताय नम इति मधुना स्नानम् । अर्घ्यमन्त्रस्तु ।
"मया कृतान्यनेकानि पापानि हर शङ्कर ।
शिवरात्रौ ददाम्यर्घ्यं उमाकान्त गृहाण मे ॥"
ततो नमः शिवाय इति मूलमन्त्रं जपित्वा प्रभातेऽविघ्नेन इत्यादिवक्ष्यमाणमन्त्रान् पठेत् ।
तथा च गरुड़पुराणम् ।
"मूलमन्त्रं ततो जप्त्वा प्रभाते तत् समापयेत् ।
अविघ्नेन व्रतं देव त्वत्प्रसादात् समर्पितम् ।
समस्तजगतां नाथ त्रैलोक्याधिपते हर ।
यन्मयाद्य कृतं पुण्यं तद्रुद्रस्य निवेदितम् ॥

अथोवाच हरिर्ब्रह्मन् शार्व्वं लिङ्गं महर्षिभिः ।
पातितन्तस्य भारार्त्ता सञ्चचाल वसुन्धरा ॥
ततस्तदद्भुतमथ श्रुत्वा देव पितामह ।
तत्र गच्छामि देवेश एवमाह पुनः पुनः ॥
ततः पितामहो देवः केशवश्च जगत्पतिः ।
आजगाम समुद्दिश्य यत्र लिङ्गं भवस्य तत् ॥
ततोऽनन्तं हरिर्लिङ्गं दृष्ट्वारुह्य खगेश्वरम् ।
पातालं प्रविवेशाथ विस्मयाविष्टितो विभुः ॥
ब्रह्मा पद्मविमानेन ऊर्द्धमाक्रम्य सर्व्वगः ।
नैवान्तमलभद्ब्रह्मा विस्मितः पुनरागतः ॥
विष्णुर्गत्वाथ पातालं सप्तलोकपरायणः ।
चक्रपाणिर्व्विनिष्क्रान्तो लेभेऽन्तं न महामुने ॥
विष्णुः पितामहश्चाद हरिर्व्वाब्यमाह च ।
नमोऽस्तु ते शूलपाणे नमोऽस्तु वृषभध्वज ।
जीमूतवाहन कवे सर्व्व त्र्यम्बक शङ्कर ॥
महेश्वर हरेशान सुवघ्राघ वृषाकपे ।
दक्षयज्ञक्षयकर काल रुद्र नमोऽस्तु ते ॥
त्वमादिरस्य जगतस्त्वं मध्यं परमेश्वर ।
भवानन्तश्च भगवान् सर्व्वगस्त्वं नमोऽस्तु ते ॥

पुलस्त्य उवाच ।

एवं संस्तूयमानस्तु तस्मिन् दारुवने हरः ।
स्वरूपी ताविदं वाक्यमुवाच वदतां वरः ॥

हर उवाच ।

किमर्थं देवतानाथौ परिभूतक्रमन्त्विह ।
मां स्तुवाते भृशाशस्य कामतापितविग्रहम् ॥

देवावूचतुः ।

भवताङ्गपातितं लिङ्गं यदेतद्भुवि शङ्कर ।
एतत् प्रगृह्यतां भूयस्ततो देव वदावहे ॥

हर उवाच ।

यद्यर्च्चयन्ति त्रिदशा मम लिङ्गं सुरोत्तमौ ।
तदेतत् प्रतिगृह्णीयान्नान्यथेति कथञ्चन ॥
ततः प्रोवाच भगवानेवमस्त्विति केशवः ।
ब्रह्मा स्वयञ्च जग्राह लिङ्गं कनकपिङ्गलम् ॥
ततश्चकार भगवांश्चातुर्व्वर्ण्यं हरार्च्चने ।
शास्त्राणि चैषां मुख्यानि नानोक्तिविदितानि च ॥
आद्यं शैवं परिख्यातमन्यत् पाशुपतं मुने ।
तृतीयं कालवदनं चतुर्थञ्च कपालिनम् ॥
शैव आसीत् स्वयं शक्तिर्व्वशिष्ठस्य प्रियः सुतः ।
तस्य शिष्यो बभूवाथ गोपायन इति श्रुतः ।
महापाशुपतश्चासीद्भारद्वाजस्तपोधनः ॥
तस्य शिष्योऽप्यभूद्राजा ऋषभः सोमकेश्वरः ।
कालास्यो भगवानासीदापस्तम्बस्तपोधनः ॥
तस्य शिष्यो वरो वैश्यो नाम्ना क्राथेश्वरो मुने ।
महाव्रती च धनदस्तस्य शिष्यश्च वीर्य्यवान् ॥
कुन्दोदर इति ख्यातो जात्या शूद्रो महातपाः ।
एवं स भगवान् ब्रह्मा पूजनाय शिवस्य च ॥
कृत्वा तु चातुराश्रम्यं स्वमेव भवनं गतः ।
गते ब्रह्मणि सर्व्वोऽपि सपत्नीकस्तदा ।
लिङ्गं चित्रवनं सूक्ष्मं प्रतिष्ठाप्य चचार ह ॥"

इति वामनपुराणे ६ अध्यायः ॥ * ॥

अपि च ।

'तत ऋषि चिन्तयतो ब्रह्मणो मोहितस्य च ।
वालिखिल्या समुत्पन्नाः सपत्नीकाः समारभन् ॥
दिव्यं वर्षसहस्रं वै तेपुस्ते दुश्चरं तपः ।
ततः कालेन महता पार्व्वती च पतिव्रता ॥
तेषां तपः समालोक्य जाता देवी सुदुःखिता ।
प्रसाद्य देवदेवेशं शङ्करं प्राह सुव्रता ॥
क्लिश्यन्ति वालिखिल्याश्च प्रसादार्थं तव प्रभो ।
एतेभ्योऽपि प्रियं देव विधिवत् कुरु सेवया ॥
तच्छ्रुत्वा वचनं दृष्ट्वा पिनाकी परचिन्तकः ।
प्रोवाच काले कालघ्नं वचनं प्रियया सह ॥
न वेत्सि देवि तत्त्वेन धर्म्मस्य गहना गतिः ।
नैते धर्म्मं विजानन्ति यथार्थं धर्म्मचारिणः ॥
न दास्यामि वरं तेभ्यो यस्मात्ते मूढबुद्धयः ।
एतत् श्रुत्वाब्रवीत् देवी मा मैवं शंसितव्रताः ॥
ततो रुद्र उवाचेदं देवीं देवः स्मिताननः ।
तिष्ठ त्वमत्र यास्यामि यत्रैते मुनिसत्तमाः ॥
इत्युक्त्वा तु ततो देवीं शङ्करेण महात्मना ।
गच्छस्वेत्याह मुदिता भर्त्तारं भुवनेश्वरी ॥
यत्र ते मुनयः सर्व्वे काष्ठमौनसमाश्रिताः ।
तान् विलोक्य ततो देवो नग्नः सर्व्वाङ्गसुन्दरः ॥
वनमालाकृतापीडो युवा भिक्षाकपालभृत् ।
आश्रमे पर्य्यटन् भिक्षां मुनीनां नियतात्मनाम् ॥
देहि भिक्षां ततश्चोक्त्वा स भ्रमन्नाश्रमं ययौ ।
स विलोक्याश्रमगतं योषितो ब्रह्मवादिनाम् ॥
सकौतुकस्वभावेन तस्य रूपेण मोहिताः ।
प्रोचुः परस्परं काम्यमस्ति पश्याम भिक्षुकम् ॥
परस्परमितीवोक्त्वा गृह्य मूलफलं बहु ।
गृहाण भिक्षामित्युक्त्वा देवं मुनियोषितः ॥
तस्मै दत्त्वैव तां भिक्षां पप्रच्छुस्ताः स्मरातुराः ।

नार्य्य ऊचुः ।

कोऽसौ नाम व्रतविधिस्त्वया तापस सेव्यते ।
यत्र नग्नेन लिङ्गेन वनमालाविभूषितः ॥
भवान् वै तापसो हृद्यो हृद्याः स्मो यदि मन्यसे ।
इत्युक्तस्तापसस्ताभिः प्रोवाच हसिताननः ॥
इदं मम व्रतं किञ्चिन्न रहस्यं प्रकाश्यते ।
शृण्वन्ति बहवो यत्र तत्र तन्न विद्यते ॥
तस्य व्रतस्य सुभगा इति मत्वा गमिष्यथ ।
एवमुक्तास्तदा तेन ताः प्रत्युचुस्तदा मुनिम् ॥
ततोऽभ्येत्य गमिष्यामो मुने नः कौतुकं महत् ।
इत्युक्त्वा तास्तदालीव जगृहुः पाणिपल्लवे ॥
काचिच्चकर्ष बाहुभ्यां काचित् कामपरा तथा ।
जानुभ्यामपरा नार्य्या केशेषु लसनापरा ॥
अपरा तु कटीबन्धे चापरा पादयोरपि ।
क्षोभं विलोक्य मुनय आश्रमेषु स्वयोषिताम् ॥
हन्यतामिति सम्भाष्य काष्ठपाषाणपाणयः ।
पातयन्ति च देवस्य लिङ्गमुद्धृत्य भीषणम् ॥
पातिते तु ततो लिङ्गे गतोऽन्तर्द्धानमीश्वरः ।
देव्या स भगवान् रुद्रः कैलासं नगमाश्रितः ॥
पतिते देवदेवस्य लिङ्गे नष्टे चराचरे ।
क्षोभो बभूव सुमहानृषीणां भावितात्मनाम् ॥
उवाचैको मुनिवरस्तत्र बुद्धिमतां वरः ।
विरिञ्चिं शरणं याम स हि ज्ञास्यति चेष्टितम् ॥
एवमुक्ताः सर्व्व एव ऋषयो लज्जिता भृशम् ।
ब्रह्मणः सदनं जग्मुर्द्देवैः कृष्टं निषेवितम् ॥

ऋषय ऊचुः ।

अस्माकाश्रम तत ब्रह्मन्नस्माभिर्न गृह्यते ।
तस्योपशमने यत्न कुरु सर्व्वोपकारक ॥

ब्रह्मोवाच ।

गच्छाम शरणं देवं शूलपाणिं त्रिलोचनम् ।
प्रसादाद्देवदेवस्य भविष्यथ यथा पुरा ॥
इत्युक्त्वा ब्रह्मणा सार्द्धं कैलासं गिरिसत्तमम् ।
ददृशुस्ते समासीनमुमया सहितं हरम् ॥
ततः स्तोतुं समारब्धो ब्रह्मा लोकपितामहः ।
अनन्ताय नमस्तुभ्यं वरदाय पिनाकिने ॥
एवं स्तुतो महादेवो ब्रह्मणा ऋषिभिस्तथा ।
उवाच मा भा ब्रजतु लिङ्गं भो पुरतः पुनः ॥
क्रियतां महत्व शीघ्रं येन मे प्रीतिरुत्तमा ।
भविष्यति प्रशस्ता या लिङ्गस्थापनेन सम्प्रति ॥
ये लिङ्गं पूजयिष्यन्ति मम भक्तिसमाश्रिताः ।
न तेषां दुर्लभं किञ्चित् भविष्यति हितं फलम् ॥"

इति वामने ४२ अध्यायः ॥ * ॥

कुरुक्षेत्रस्थितानि लिङ्गानि यथा,—

सनत्कुमार उवाच ।

'वटस्य दक्षिणे भागे चक्रतीर्थं प्रकीर्त्तितम् ।
स्थाणोर्व्वटस्य पूर्व्वेण मम तीर्थं प्रकीर्त्तितम् ॥
स्थाणोर्व्वटस्योत्तरतस्तीर्थं गणेश्वरं मतम् ।
स्थाणोर्व्वटस्य पश्चिमतः स्कन्दतीर्थं प्रकीर्त्तितम् ॥
इमानि पुण्यतीर्थानि मध्ये रुद्रवटः स्थितः ।
महादेवं समभ्यर्च्य प्राप्नोति परमं पदम् ॥
वटस्य चोत्तरे पार्श्वे तक्षकेण महात्मना ।
प्रतिष्ठितं महालिङ्गं सर्व्वकामप्रदायकम् ॥
वटस्य पूर्व्वोदग्भागे विश्वकर्म्मकृतं महत् ।
लिङ्गं प्रत्यङ्मुखं दृष्ट्वा सिद्धिमाप्नोति मानवः ॥
तत्रैव लिङ्गरूपेण संस्थिता या सरस्वती ।
तां प्रणम्य प्रयत्नेन बुद्धिं मेधाञ्च विन्दति ॥
वटपार्श्वस्थितं लिङ्गं ब्रह्मणा तत् प्रतिष्ठितम् ।
दृष्ट्वा वटेश्वरं देवं प्रयाति परमं पदम् ॥
ततः स्थाणुवटं दृष्ट्वा कृत्वा चापि प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥
स्थाणोः पश्चिमदिग्भागे नकुलीशो गणः स्मृतः ।
समभ्यर्च्य प्रयत्नेन सर्व्वपापैः प्रमुच्यते ॥
तस्य दक्षिणदिग्भागे तीर्थं रुद्राकरं स्मृतम् ।
तस्मिन् स्नातः सर्व्वतीर्थस्नातो भवति मानवः ॥
तस्य चोत्तरदिग्भागे रावणेन महात्मना ।
प्रतिष्ठितं महालिङ्गं गोकर्णं नाम नामतः ॥
आषाढमासे या कृष्णा भविष्यति चतुर्द्दशी ।
तस्यां पश्यति गोकर्णं तस्य पुण्यफलं शृणु ॥
कामतोऽकामतो वापि यत् पापं तेन सञ्चितम् ।

तस्माद्दिमुच्यते पापात् पूजयित्वा परं शुचिः ॥
कौमारव्रतपर्य्यन्तं यत् पुण्यं प्राप्यते नरैः ।
तत् पुण्यं सकलं तेषामष्टम्यां योऽर्च्चयेच्छिवम् ॥
यदीच्छेत् परमं रूपं सौभाग्यं धनसम्पदम् ।
कुमारेश्वरमाहात्म्यात् सिध्यते नात्र संशयः ॥
तस्य चोत्तरदिग्भागे लिङ्गपूजां विभीषणः ।
अजरश्चामरश्चैव कल्पयित्वा बभूव ह ॥
आषाढ़स्य तु मासस्य शुक्ला या चाष्टमी
भवेत् ।
तस्यामभ्यर्च्य सोऽप्येवमवाप्तमवाप्नुयात् ॥
पूर्व्वेण पूजितं लिङ्गं तस्मिन् स्थाने द्विजोत्तम ।
पूजयित्वा प्रयत्नेन सर्व्वकाममवाप्नुयात् ॥
तृणबिन्दुरिराश्चैव तत्र पुण्यं महेश्वरम् ।
यथाभिलषितान् कामानवाप्तमुर्दान्विनौ ॥
चैत्रे मासि सिते पक्षे यो नरस्तान् पूजयेत् ।
तस्य तौ वरदौ देवौ प्रयच्छेतां हि वाञ्छितम् ॥
स्थाणोर्व्वतस्य पूर्व्वेण हस्तिपादेश्वरः स्थितः ।
तं दृष्ट्वा मुच्यते पापैरन्यजन्मसमुद्भवैः ॥
तस्य दक्षिणतो लिङ्गं हारीतस्य ऋषेः
स्थितम् ।
यं प्रणम्य प्रयत्नेन सिद्धिमाप्नोति मानवः ॥
तस्य दक्षिणपार्श्वे तु हारीतस्य महात्मनः ।
लिङ्गं त्रैलोक्यविख्यातं सर्व्वपापहरं शिवम् ॥
कङ्कालरूपिणा चापि रुद्रेणाशु महात्मना ।
प्रतिष्ठितं महालिङ्गं सर्व्वपापविनाशनम् ॥
मुक्तिमुक्तिप्रदं प्रोक्तं सर्व्वकिल्बिषनाशनम् ।
तल्लिङ्गस्पर्शनादेव अग्निष्टोमफलं लभेत् ॥
तस्य पश्चिमदिग्भागे लिङ्गं सिद्धप्रतिष्ठितम् ।
सिद्धेश्वरं भुवि ख्यातं सर्व्वसिद्धिप्रदायकम् ।
तद्दर्शनात् पूजनाच्च सर्व्वसिद्धिं हि विन्दति ॥
तस्य दक्षिणदिग्भागे मृकण्डेन महात्मना ।
प्रतिष्ठितं वस्तु लिङ्गं दर्शनात् सिद्धिदायकम् ॥
तस्य पूर्व्वे च दिग्भागे आदित्येन महात्मना ।
प्रतिष्ठितं लिङ्गवरं सर्व्वकिल्बिषनाशनम् ॥
चित्राङ्गदस्तु गन्धर्व्वो रम्भा चाप्सरसां वरा ।
परस्परं सानुरागौ स्थाणुदर्शनकाङ्क्षिणौ ॥
दृष्ट्वा स्थाणुं पूजयित्वा सानुरागौ परस्परम् ।
आगम्य वरदं देवं प्रतिष्ठाप्य महेश्वरम् ॥
चित्राङ्गदेश्वरं दृष्ट्वा तथा रम्भेश्वरं द्विज ।
सुभगो दर्शनीयश्च कुले जन्म समाप्नुयात् ॥
तस्य दक्षिणतो लिङ्गं शक्तिना स्थापितं पुरा ।
तस्य प्रसादात् सम्प्राप्तं मनसा चिन्तितं फलम् ॥
पराशरेण मुनिना तथैवाराध्य शङ्करम् ।
प्राप्तं कवित्वं परमं दर्शनाच्छङ्करस्य च ॥
वेदव्यासेन मुनिना चाराध्य परमेश्वरम् ।
सर्व्वज्ञत्वं ब्रह्मज्ञानं प्राप्तं देवप्रसादतः ॥
स्थाणोः पश्चिमदिग्भागे वायुना जगदायुना ।
प्रतिष्ठितं महालिङ्गं दर्शनात् पापनाशनम् ॥
तस्यापि दक्षिणे भागे लिङ्गं हैमवतेश्वरम् ।
प्रतिष्ठितं पुण्यकृता दर्शनात् सिद्धिदायकम् ॥
तस्यापि पश्चिमे भागे कार्त्तवीर्य्येण स्थापितम् ।
लिङ्गं पापहरं सद्यो दर्शनात् पुण्यमाप्नुयात् ॥

तस्याप्युत्तरदिग्भागे तत्पार्श्वे स्थापितं पुनः ।
आराध्य हनुमांश्चापि सिद्धिं देवप्रसादतः ॥
तस्यैव पूर्व्वदिग्भागे विष्णुना प्रभविष्णुना ।
आराध्य वरदं देवं चक्रं लब्धं सुदर्शनम् ॥
तस्यापि पूर्व्वदिग्भागे रुद्रेण वरुणेन च ।
प्रतिष्ठितौ लिङ्गवरौ सर्व्वकामप्रदायकौ ॥
एतानि मुनिभिः साध्यैरादित्यैर्व्वसुभिस्तथा ।
सेवितानि प्रयत्नेन सर्व्वपापहराणि वै ॥
स्थाणुलिङ्गस्य परितः ऋषिभिस्तत्त्वदर्शिभिः ।
प्रतिष्ठितानि लिङ्गानि येषां संख्या न विद्यते ॥
तथा सुप्रारतश्चैव यावदोघवती नदी ।
सहस्रमेकं लिङ्गानां देवपश्चिमतः स्थितम् ॥
तस्यापि पूर्व्वदिग्भागे वालखिल्यैर्महर्षिभिः ।
प्रतिष्ठिता रुद्रकोटिर्यावत् सन्निहितं सरः ॥
दक्षिणेन तु देवस्य गन्धर्व्वैर्यक्षकिन्नरैः ।
प्रतिष्ठितानि लिङ्गानि येषां संख्या न विद्यते ॥
तिस्रः कोट्यर्द्धकोटी च लिङ्गानां वायुरब्रवीत् ।
असंख्याताः सहस्राणि ये रुद्रा स्थाणु-
माश्रिताः ॥
एतज्ज्ञात्वा श्रद्दधानः स्थाणुलिङ्गं समाश्रयेत् ।
यस्य प्रसादात् प्राप्नोति मनसा चिन्तितं फलम् ॥
अकामो वा सकामो वा प्रविष्टः स्थाणु-
मन्दिरम् ।
विमुक्तः पातकैर्घोरैः प्राप्नोति परमं पदम् ॥
चैत्रमासे त्रयोदश्यां दिने पुण्यतमे शुभे ।
प्रतिष्ठितं स्थाणुलिङ्गं ब्रह्मणा लोकधारिणा ॥
ऋषिभिर्द्देवसङ्घैश्च पूजितं शाश्वतीः समाः ।
तस्मिन् काले निराहारा मानवाः श्रद्धया-
न्विताः ।
पूजयन्ति शिवं ये वै ते यान्ति परमं पदम् ॥
स्थाणुतीर्थमिदं ज्ञात्वा ये कुर्व्वन्ति प्रदक्षिणम् ।
प्रदक्षिणीकृता तैस्तु सप्तद्वीपा वसुन्धरा ॥”

इति वामनपुराणे ४३ अध्यायः ॥ १ ॥

एकगृहे लिङ्गद्वयार्च्चननिषेधो यथा,—
“गेहे लिङ्गद्वयं नार्च्च्यं शालग्रामद्वयं तथा ।
द्वे चक्रे द्वारकायास्तु नार्च्च्ये सूर्य्यद्वयं तथा ॥”
तन्निर्म्माल्यभक्षणविधिनिषेधौ यथा,—
“अभक्ष्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलायोगात् पावनं तद्भवेत् सदा ॥”
इति वाराहे रौप्यसौवर्णार्च्चास्थापननामा-
ध्यायः ॥ १ ॥ लिङ्गपूजां विनान्यपूजाकरणनिषेधो
यथा,—
“लिङ्गपूजां विना देवि ! अन्यपूजां करोति यः ।
विफला तस्य पूजा स्यादन्ते नरकमाप्नुयात् ।
तस्माल्लिङ्गं महेशानि प्रथमं परिपूजयेत् ॥” ॥
तत्पूजनप्रशंसा यथा,—
“यद्गृहं लिङ्गपूजायां रहितं सततं प्रिये ।
तद्गृहं पतितं मन्ये विष्ठाभूमिसमं स्मृतम् ॥
ब्रह्मक्षत्त्रियविट् देवि यदि लिङ्गं न पूजयेत् ।
तत्क्षणात् परमेशानि त्रयश्चाण्डालतां व्रजेत् ॥
शूद्रस्य परमेशानि सदा शूकरवत् प्रिये ।
पूजयेत् परमेशानि चत्वारो ब्राह्मणादयः ॥

शिवार्च्चनन्तु शूद्रस्य यद्गृहे वर्ज्जितं सदा ।
विष्ठागर्त्तसमं देवि तद्गृहं विद्धि पार्व्वति ॥
शाक्तो वा वैष्णवो वापि शैवो वा परमेश्वरि ।
आदौ लिङ्गं समभ्यर्च्य विल्वपत्रैर्व्वरानने ।
पश्चादन्यं महेशानि शिवं प्रार्च्य प्रपूजयेत् ॥
शिवपूजां विना देवि ! अन्यपूजां करोति यः ।
स एव रजनाद्धीनः कुम्भीरो जायते प्रिये ॥
निर्म्माय पार्थिवं लिङ्गं चतुर्व्वर्गफलप्रदम् ।
आशुतोषं महादेवं शङ्करं वृषभध्वजम् ।
निर्म्माय पार्थिवं लिङ्गं विधिवत् पूजयेत्
शिवम् ॥
शिवपूजा महेशानि यद्गृहे सततं प्रिये ।
काशीपुरं महेशानि तद्गृहं वरवर्णिनि ।
शिवलिङ्गं प्रपूज्याथ सर्व्वपूजाफलं लभेत् ॥” ॥
चतुर्व्विधलिङ्गं यथा,—
“चतुर्द्धा पार्थिवं लिङ्गं वर्णभेदेन पार्व्वति ।
शुक्लं रक्तं तथा पीतं कृष्णञ्च परमेश्वरि ॥
शुक्लन्तु ब्राह्मणे प्रोक्तं क्षत्त्रिये रक्तमिष्यते ।
हरितं वैश्यजातौ तु कृष्णं शूद्रे प्रकीर्त्तितम् ।
चन्दनञ्च महेशानि सर्व्वजातिषु शस्यते ॥”

इति लिङ्गार्च्चनतन्त्रे १।२।३ पटलाः ॥ १ ॥

अस्य पञ्चवक्त्राणि यथा,—
“तत् सर्व्वं शृणु चार्व्वङ्गि पार्थिवस्य तु यत् प्रिये ।
विभाव्य सुखपद्मं हि शिवस्य वरवर्णिनि ॥
सद्योजातं वामदेवमघोरञ्च ततः परम् ।
तत्पुरुषं तथेशानं पञ्चवक्त्रं प्रकीर्त्तितम् ॥
सद्योजातञ्च वै शुक्लं शुद्धस्फटिकसन्निभम् ।
पीतवर्णं तथा सौम्यं वामदेवं मनोहरम् ॥
कृष्णवर्णमघोरञ्च सर्व्वं भीमविवर्द्धनम् ।
रक्तं तत्पुरुषं देवं दिव्यमूर्त्तिमनोहरम् ॥
श्याममेव तथेशानं सर्व्वदेवशिवात्मकम् ।
चिन्तयेत् पश्चिमे चाद्यं द्वितीयन्तु तथोत्तरे ॥
अघोरं दक्षिणे देवं पूर्व्वे तत्पुरुषं तथा ।
ईशानं मध्यतो ध्येयं चिन्तयेत् भक्तितत्परः ॥”

इति तत्रैव ६ पटलः ॥ १ ॥

अस्य पूजायां मुखवाद्यकरणावश्यकत्वं यथा,
“संपूज्य पार्थिवं लिङ्गं परं ब्रह्म स्वयं प्रिये ।
ततस्तु लिङ्गकवचं पठित्वा कमलानने ॥
मुखवाद्यं सकृत्त्वं हि कृत्वा तु परमेश्वरि ।
मातृकामन्त्रसहितं मुखवाद्यं सुदुर्लभम् ॥
अकारादिक्षकारान्तं अनुलोमविलोमतः ।
उच्चार्य्य परमेशानि मुखवाद्यं सुचिस्मिते ॥
सबिन्दुवर्णमुच्चार्य्य पञ्चाशन्मातृकां प्रिये ।
अनुलोमविलोमेन सर्व्वत्र च वरानने ॥
अनेनैव विधानेन मुखवाद्यं करोति यः ।
स सिद्धः सगणः सोऽपि स शिवो नात्र संशयः ॥
म्लेच्छयोऽहं देवेशि मुखवाद्यप्रसादतः ॥
यस्मिन् काले महेशानि असुरो बलवद्भवेत् ।
तस्मिन् काले महेशानि मुखवाद्यं करोम्यहम् ॥
तत् श्रुत्वा परमेशानि असुरा राक्षसाश्च ये ।
पलायन्ते महेशानि तत् श्रुत्वा परमेश्वरि ।
ये नरा भुवि तिष्ठन्ति मुखवाद्यं विना प्रिये ।

चन्द्रापीड़ं महाजितं स्फाटिकं सर्व्वकामदम् ।
मुक्ताख्यमधिजं शत्रुक्षयार्थं मौक्तिकं तथा ॥
चापल्यं हीरकं ज्ञेयं रोगहृन्मौक्तिकोद्भवम् ।
शुभकृत् पुष्करं तीर्थे वैदूर्य्यं शत्रुदर्पहृत् ।
नीलं लक्ष्मीप्रदं ज्ञेयं स्फाटिकं सर्व्वकामदम् ॥"
इति सारसंग्रहः ॥
"महामुक्तिप्रदं हैमं राजतं भूतिवर्द्धनम् ।
आरकूटं तथा कांस्यं त्रपु सामान्यमुक्तिदम् ॥
त्रपुसीसायसं लिङ्गं शत्रूणां नाशने स्थितम् ।
कीर्त्तिदं कांस्यजं लिङ्गं राजतं पुत्त्रवर्द्धनम् ॥
पैत्तलं भुक्तिमुक्त्यर्थं मिश्रजं सर्व्वसिद्धिदम् ॥"
इति कालोत्तरतन्त्रम् ॥
तत्रैव शिवनारदसंवादे ।
"पितॄणां मुक्तये लिङ्गं पूज्यं रत्नसमुद्भवम् ।
हैमजं सत्यलोकस्य प्राप्तये पूजयेत् पुमान् ।
पूजयेत्ताम्रजं लिङ्गं पुष्टिकामो हि मानवः ॥"
मत्स्यसूक्ते ।
"ताम्रलिङ्गं कलौ नार्च्चेत् रैत्यस्य सीसकस्य च ।
रक्तचन्दनलिङ्गञ्च शङ्खकांस्यायसं तथा ॥" * ॥
मातृकाभेदतन्त्रे १२ पटले ।
"पार्थिवे शिवपूजायां सर्व्वसिद्धियुतो भवेत् ।
पाषाणे शिवपूजायां द्विगुणं फलमीरितम् ॥
स्वर्णलिङ्गे च पूजायां शत्रूणां नाशनं मतम् ।
सर्व्वसिद्धीश्वरो रौप्ये फलं तस्माच्चतुर्गुणम् ॥
ताम्रे पुष्टिं विजानीयात् कांस्ये च धनसंचयः ।
गङ्गायाश्च लक्षगुणं लाक्षायां रोगवान् भवेत् ॥
स्फाटिके सर्व्वसिद्धिः स्यात्तथा मरकते प्रिये ।
लौहलिङ्गे रिपोर्नाशं कामदं भक्तलिङ्गकम् ॥
वालुकायां कार्य्यसिद्धिर्गोमये रिपुहिंसनम् ।
सर्व्वलिङ्गस्य माहात्म्यं धर्म्मकामार्थमोक्षदम् ।
संस्कारेण विना देवि पाषाणादौ न पूजयेत् ॥"
तत्संस्कारस्तत्रैव यथा,—
"रौप्यञ्च स्वर्णलिङ्गञ्च स्वर्णपात्रे निधाय च ।
तस्मादुत्तोल्य तल्लिङ्गं दुग्धमध्ये दिनत्रयम् ॥
त्र्यम्बकेण स्नापयित्वा कालरुद्रं प्रपूजयेत् ।
षोड़शेनोपचारेण वेदान्तपावनीं यजेत् ॥
तस्मादुत्तोल्य तल्लिङ्गं गङ्गातोये दिनत्रयम् ।
ततो देवीशविधिना संस्कारमाचरेत् सुधीः ॥"
लक्षणहीनलिङ्गपूजने दोषो यथा,—
"लिङ्गं सुलक्षणं कुर्य्यात् लक्षेलिङ्गमलक्षणम् ।
दैर्घ्यहीने भवेद्व्याधिरधिके शत्रुवर्द्धनम् ॥
मानहीने विनाशः स्याद्धिके च शिशुक्षयः ।
विस्तारे चाधिके हीने राष्ट्रनाशो भवेत् ध्रुवम् ॥
पीठहीने तु दारिद्र्यं शिरोहीने कुलक्षयः ।
ब्रह्मसूत्रविहीने च राज्ञां राष्ट्रञ्च नश्यति ।
तस्मात् सर्व्वप्रयत्नेन लिङ्गं कुर्य्यात् सुलक्षणम् ॥"
अथ लिङ्गप्रमाणम् ।
देव्युवाच ।
"लिङ्गप्रमाणं देवेश कथयस्व मयि प्रभो ।
पार्थिवे च शिलादौ च विशेषो यत्र यद्भवेत् ॥
श्रीशिव उवाच ।
मृत्तिकातोलकं ग्राह्यमथवा तोलकद्वयम् ।

एतदन्यन्न कुर्व्वीत कदाचिदपि पार्व्वति ॥"
इति मातृकाभेदतन्त्रे ७ पटलः ॥
अपि च ।
"मृत्तिकातोलकं ग्राह्यमथवा तोलकद्वयम् ।
त्रिसूत्रस्य प्रमाणेन घटनं कारयेद्बुधः ।
अङ्गुष्ठपर्व्वमानन्तु कृत्वा लिङ्गं प्रपूजयेत् ॥"
इति षट्कर्म्मदीपिकाधृतविश्वसारतन्त्रम् ॥ * ॥
त्रिसूत्रीकरणमुक्तं कालोत्तरे ।
"लिङ्गे वेद्यां तथा पीठे समसूत्रनिपातनात् ।
समस्येव विजानीयात् त्रिसूत्रीकरणन्त्विदम् ॥"
मृत्तिकाभेदेन ब्राह्मणादीनां पूजाफलस्य प्रश-स्तत्वमुक्तं तत्रैव ।
"शुक्लं हि पार्थिवं लिङ्गं निर्म्माय यस्तु पूजयेत् ।
स एव परमेशानि त्रिवर्गफलभाग्भवेत् ॥
क्षत्त्रियस्तु वरारोहे रक्तं निर्म्माय पार्थिवम् ।
पूजयेत् सततं यस्तु त्रिवर्गफलभाग्भवेत् ॥
हरितं पार्थिवं देवि निर्म्माय यस्तु पूजयेत् ।
स च वैश्यो महेशानि त्रिवर्गफलभाग्भवेत् ॥
कृष्णं हि पार्थिवं लिङ्गं निर्म्माय यस्तु पूजयेत् ।
स शूद्रः परमेशानि त्रिवर्गफलभाग्भवेत् ॥
शिलादौ च महेशानि स्थूलञ्च फलदायकम् ।
अङ्गुष्ठमानं देवेशि यदा हेमादिमानकम् ॥
क्रमेण देवदेवेशि फलं बहुविधं लभेत् ।
स्थूलात् स्थूलतरं लिङ्गं रुद्राक्षं परमेश्वरि ।
पूजनाद्धारणाद्देवि फलं बहुविधं स्मृतम् ॥"
स्थूलात् स्थूलतरमिति पार्थिवलिङ्गेतरपरम् ।
मृत्तिकातोलकं ग्राह्यमित्यादिवचनात् ॥ * ॥
शिलास्फाटिकमरकतादीनां पञ्चसूत्रीकरण-मुक्तम् । यथा,—
"शिवलिङ्गस्य यन्मानं तन्मानं दक्षसव्ययोः ।
योन्यग्रमपि यन्मानं तदधोऽपि तथा भवेत् ॥"
इति लैङ्गम् ॥
"लिङ्गस्य यादृग्विस्तारः परिणाहोऽपि तादृशः ।
लिङ्गस्य द्विगुणा वेदी योनिस्तदर्द्धसम्मिता ॥
कुर्व्वीताङ्गुष्ठतो ह्रस्वं न कदाचिदपि क्वचित् ।
रत्नादिशिवनिर्म्माणे मानमिच्छावशाद्भवेत् ॥"
इति तन्त्रान्तरम् ॥
लिङ्गशब्दव्युत्पत्तिर्यथा,—
"आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका ।
आलयः सर्व्वदेवानां लयनाल्लिङ्गमुच्यते ॥"
इति स्कन्दपुराणम् ॥ * ॥
लिङ्गमहिमा यथा,—
शिव उवाच ।
"न तुष्याम्यर्च्चितोऽर्च्चायां पुष्पधूपनिवेदनैः ।
लिङ्गेऽर्च्चिते तथात्यर्थं परं तुष्यामि पार्व्वति ॥
एष देवि पुरा कल्पे नीतोऽहं सर्व्वदैवतैः ।
लिङ्गत्वाल्लिङ्गमित्युक्तं सदेवासुरकिन्नरैः ॥
प्रयच्छामि दिवं देवि यो मल्लिङ्गार्च्चने रतः ।
त्यक्त्वा सर्व्वाणि पापानि निर्गतो दग्धकल्मषः ।
मन्मना मन्नमस्कारी मामेव प्रतिपद्यते ॥"
इति वीरमित्रोदयधृतस्कन्दपुराणम् ॥ * ॥

द्रव्यविशेषेण पूजादिफलमपि तत्रैव ।
"वस्त्रपूतजलैर्लिङ्गं स्नापयित्वा मम मानवाः ।
सहस्राश्वमेधानां फलमाप्नोति सत्तमः ॥
सुगन्धिचन्दनरसैर्लिङ्गमालिप्य भक्तितः ।
आलिप्यते सुरस्त्रीभिः सुगन्धैर्यक्षकर्द्दमैः ॥" * ॥
लिङ्गपूजनाकरणे दोषस्तत्पूजाफलञ्च तत्रैव शिवनारदसंवादे ।
"विना लिङ्गार्च्चनं यस्य कालो गच्छति नित्यशः ।
महाहानिर्भवेत्तस्य दुर्गतस्य दुरात्मनः ॥
एकतः सर्व्वदानानि व्रतानि विविधानि च ।
तीर्थानि नियमा यज्ञा लिङ्गाराधनमेकतः ॥
न लिङ्गाराधनादन्यत् पुरा वेदे चतुर्ष्वपि ।
विद्यते सर्व्वशास्त्राणामेष एव सुनिश्चितः ॥
भुक्तिमुक्तिप्रदं लिङ्गं विविधापन्निवारणम् ।
पूजयित्वा नरो नित्यं शिवसायुज्यमाप्नुयात् ॥
सर्व्वमन्यत् परित्यज्य क्रियाजालमशेषतः ।
भक्त्या परमया विद्वान् लिङ्गमेकं प्रपूजयेत् ॥"
इति स्कन्दपुराणम् ॥ * ॥
"अश्वमेधसहस्राणि वाजपेयशतानि च ।
महेशार्च्चनपुण्यस्य कलां नार्हन्ति षोड़शीम् ॥"
इति मत्स्यसूक्ते १६ पटलः ॥ * ॥
"स्वयं नारायणः प्रोक्तो यदि शम्भुं प्रपूजयेत् ।
स्वर्गे मर्त्ये च पाताले ये देवाः संस्थिताः सदा ।
तेषां पूजा भवेद्देवि शम्भुनाथस्य पूजनात् ॥"
इति मातृकाभेदतन्त्रम् ॥ * ॥
षट्कर्म्मदीपिकायाम् ।
"असारे खलु संसारे सारमेतच्चतुष्टयम् ।
काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भु-सेवनम् ॥" * ॥
अथ पारदशिवलिङ्गमाहात्म्यम् ।
"ज्योतिर्म्मयं महालिङ्गं कैलासनगरे प्रिये ।
तस्यैव षोड़शांशैकः काश्यां विश्वेश्वरः स्थितः ॥
पूर्णलिङ्गं महेशानि शिवबीजं न चान्यथा ।
शिलामध्ये यथा चक्रं लक्ष्मीनारायणः परम् ।
पारदस्य शतांशैको लक्ष्मीनारायणो न हि ॥
पकारं विष्णुरूपञ्च आकारं कालिका स्वयम् ।
रेफं शिवं दकारञ्च ब्रह्मरूपं न चान्यथा ॥
पारदं परमेशानि ब्रह्मविष्णुशिवात्मकम् ।
यो यजेत् पारदं लिङ्गं स एव शम्भुरव्ययः ॥"
इति मातृकाभेदतन्त्रे ८ पटलः ॥
तस्य निर्म्माणविधानं पारदशब्दे द्रष्टव्यम् ॥ * ॥
प्रकारान्तरशिवलिङ्गोत्पत्तिर्यथा,—
"ततो विवाहं निर्व्वर्त्त्य कृतकृत्या यथागताः ।
गताः सर्व्वे महेशोऽपि सत्या सह तदा गृहम् ।
जगाम रेमे सत्या च चिरं निर्भरमानसः ॥
अथ काले कदाचित्तु सत्या सह महेश्वरः ।
रेमे न शेके तं सोढुं सती श्रान्ताभवत्तदा ।
उवाच दीनया वाचा देवदेवं जगद्गुरुम् ॥
भगवन्न हि शक्नोमि तव भारं सुदुःसहम् ।
क्षमस्व मां महादेव कृपां कुरु जगत्पते ॥
निशम्य वचनं तस्या भगवान् वृषभध्वजः ।
निर्भरं रमणं चक्रे गाढ़ं निर्दयमानसः ॥

कृत्वा सपूर्णरमथ सती च त्यक्तमैथुना ।
उत्थानाय मनश्चक्रे उभयोस्तेज उत्तमम् ।
पपात धरणीपृष्ठे तेनाप्लावमखिलं जगत् ।
पाताले भूतले स्वर्गे शिवलिङ्गास्तदाभवन् ।
तेन भूता भविष्याश्च शिवलिङ्गाः सयोनयः ।
यत्र लिङ्गं तत्र योनिर्यत्र योनिस्तत्र शिवे ।
उभयोश्चैव तेजोभिः शिवलिङ्गं व्यजायत ।”

इति नारदपञ्चरात्रे ३ रात्रम् । * ।

कामनाभेदे पार्थिवशिवलिङ्गसंख्या यथा —
“सङ्ख्या पार्थिवलिङ्गस्य यथाकामं निगद्यते ।
स्फलिङ्गं पार्थिवं नाम भुक्तिमुक्तिकरं परम् ।
देशकालादिकं ज्ञात्वा कुर्य्यात् लिङ्गं फलप्रदम् ।
न करोति यदा ज्ञात्वा न कार्य्यं तस्य सिध्यति ॥
विद्यार्थी शतसाहस्रं धनार्थी च तदर्द्धकम् ।
पुत्रार्थी सार्द्धसाहस्रं कन्यार्थी च शतत्रयम् ।
विद्वान् लिङ्गायुतं कुर्य्यात् सर्व्वपापहरं परम् ।
राज्यार्थी शतसाहस्रं कान्तार्थी शतपञ्चकम् ।
मोक्षार्थी कोटिगुणितं भूतिकामः सहस्रकम् ।
रूपार्थी त्रिसहस्रन्तु तीर्थार्थी द्विसहस्रकम् ।
सुहृत्कामः सहस्रन्तु वस्त्रार्थं शतमष्टकम् ।
मारणार्थं सप्तशतं मोहनार्थं शताष्टकम् ।
उच्चाटनवशश्चैव सहस्रन्तु यथोक्तत ।
स्तम्भने च सहस्रन्तु दारार्थे च तदर्द्धकम् ।
महाराजभये पञ्चशतञ्चापदि सङ्कटे ।
सहस्रमयुतं सर्व्वकामदं परिकीर्त्तितम् ।
एकं पापहरं प्रोक्तं द्विलिङ्गञ्चार्थसिद्धिदम् ।
त्रिलिङ्गं सर्व्वकामानां कारणं परमीरितम् ।”

तथा ।
“लिङ्गानामयुतं कृत्वा पूजा राजभयं हरेत् ।
सहस्राणि च लिङ्गानां निगडान्मोचयेद्‌ध्रुवम् ।
कारागृहविमुक्त्यर्थमयुतं कारयेद्‌बुधः ।
डाकिन्यादिभये पञ्चसहस्रं कारयेत्तथा ।
सहस्राणाञ्च पञ्चाशद्‌पुत्रो हि प्रकारयेत ।”

इति वीरमित्रोदयधृतम् ।

“अनेन च क्रमाद्देवि लक्षं यस्तु प्रपूजयेत् ।
सर्व्वाभीष्टफलं देवि लभते नात्र संशयः ।” * ।

एकोत्तरलिङ्गपूजाविधिनिषेधौ यथा,—
‘एकोत्तरं महेशानि युगलं न तु पूजयेत् ।
एकोत्तरं महेशानि दश पञ्च शतानि च ।
प्रत्येकेनाथवा देवि विल्वपत्रैः प्रपूजयेत् ।
एकैकं पूजयेल्लिङ्गं युगलं न तु पूजयेत् ।
दरिद्रो जायते देवि युगलस्य च पूजनात् ।”

इति लिङ्गार्चनतन्त्रम् । * ।

शिवलिङ्गमृत्तिकादिनिरूपणं यथा —
“तोयमध्यगतां समाहृत्य निर्म्माय लिङ्गमद्भुतम् ।
तोयाभावे महेशानि शुद्धस्य मृत्तिका प्रिये ।
पर्व्वतप्रभवा इति नर्म्मदाम्बुद्भवमुत्तमम् ।
एतद्धिना महेशानि नर्म्मदा शुभा इति प्रिये ।
निर्झरस्य च देवेशि नर्म्मदा सम्पत्प्रदायिनी ।
सर्व्वाभावे महेशानि गोष्पदस्थाय मृत्तिकाम् ।
अथवा परमेशानि यत्र चित्तं प्रसीदति ।
सुपीनं सुन्दरं रम्यं सर्व्वदारोहितं सदा ।

निर्म्माय पार्थिवं लिङ्गं कुण्डलीसहितं प्रिये ।
यो लिङ्गं परमेशानि स रुद्रः परमेश्वरः ।
कुण्डली वेष्टनी तस्य सा देवी परमेश्वरी ।
शिवस्य पूजनात् देवि देवीदेवौ च पूजितौ ।”

इति मत्स्यसूक्तम् । * ।

बाणलिङ्गनिर्म्माल्यग्रहणे प्रतिप्रसवो यथा —
‘बाणलिङ्गे न चाशौचं न च निर्म्माल्यकल्पना ।
सर्व्वं बाणार्पितं ग्राह्यं भक्त्या भक्तैश्च नान्यथा ।
ग्राह्याग्राह्यविचारोऽथ बाणलिङ्गे न विद्यते ।
तदर्पितं जलं पत्रं ग्राह्यं प्रसादमुग्रया ।
बाणलिङ्गे स्वयम्भूते चन्द्रकान्ते स्थिते ।
चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणे ।”

इति शिवनारदसंवादः ।

शिवलोक पुं (शिवस्य लोकः ।) कैलासः । यथा,
‘विल्वपत्रैरखण्डैश्च यो लिङ्गं पूजयेत् सकृत् ।
सर्व्वपापैर्व्विनिर्म्मुक्तः शिवलोके महीयते ।”

इति तिथ्यादितत्त्वधृतभविष्यपुराणम् ।

शिवस्य भुवनं जगच्च ।

शिववल्लभा स्त्री (शिवस्य वल्लभा ।) शतपत्री । इति राजनिर्घण्टः । शिवप्रिये त्रि ।

शिववल्लिका, स्त्री (शिवस्य वल्लिका ।) लिङ्गिनी । इति राजनिर्घण्टः ।

शिववल्ली, स्त्री, (शिवस्य वल्ली ।) लिङ्गिनी । श्रीवल्ली । इति राजनिर्घण्टः ।

शिववाहन, पु (शिवस्य वाहनः ।) अनड्वान् । इति राजनिर्घण्टः ।

शिववीज, क्ली, (शिवस्य वीजम् ।) पारदः । इति राजनिर्घण्टः ।

शिवशेखर पु (शिवं सुखकरं शिवप्रियो वा शेखरोऽग्रो यस्य ।) वकवृक्षः । इति जटाधरः । धुस्तूरः । इति राजनिर्घण्टः । शिवस्य मस्तकञ्च ।

शिवसायुज्य, क्ली (शिवस्य सायुज्यम् ।) मोक्षविशेषः । स च शिवेन सह योगः । यथा । नागरखण्डे ।
“उपवासप्रभावेण बलादपि च जागरात् ।
शिवरात्रेस्तथा तस्य लिङ्गस्यापि प्रपूजया ।
अक्षयान् लभते लोकान् शिवसायुज्यमाप्नुयात् ।”

इति तिथ्यादितत्त्वम् ।

शिवसुन्दरी, स्त्री, (शिवस्य सुन्दरी ।) दुर्गा । इति तन्त्रशास्त्रम् ।

शिवा स्त्री, (शिव + टाप् ।) दुर्गा । मुक्तिः । यथा,—
“शिवा मुक्तिः समाख्याता योगिनां मोक्षदायिनी ।
शिवाय यां जपेद्देवीं शिवा लोके ततः स्मृता ।”

इति देवीपुराणे ४५ अध्यायः ।

अपि च ।
“शिवा कल्याणरूपा च शिवदा च शिवप्रिया ।
प्रिये दातरि चाशब्दः शिवा तेन प्रकीर्त्तिता ।”

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५७ अध्यायः ।

अपरञ्च ।
“शश्च कल्याणवचन इकारोत्कृष्टवाचकः ।
समूहवाचकश्चैव वाकारो दातृवाचकः ।
श्रेयःसङ्घोत्कृष्टदात्री शिवा तेन प्रकीर्त्तिता ।
शिवराशिस्वरूपिणी शिवा तेन प्रकीर्त्तिता ।
शिवो हि मोक्षवचनश्चाकारो दातृवाचकः ।
स्वयं निर्व्वाणदात्री या सा शिवा परिकीर्त्तिता ।”

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २७ अध्यायः ।

शमीवृक्षः । हरीतकी । शृगालः । नामलकी । इत्यमरः । आमलकी । इति मेदिनी । बुद्धशक्तिविशेषः । स तु द्वाविंशतिनमाभा इति त्रिकाण्डशेषः । हरिद्रा । दूर्व्वा । गोरोचना । इति राजनिर्घण्टः । * । शृगालस्य ध्वने शुभाशुभं यथा —
‘शोभनं शुभफलाभिसूचकं
कथ्यते यवितथं शिवारुतम् ।
शान्तदीप्तककुभां विशेषतो
जागमश्च च महीयमुच्यते ।
दग्धा दिगुक्ता दिननाथमुक्ता
विवस्वदाशा भवति प्रदीप्ता ।
सा धूमिता यां सविता प्रयाता
शेषा दिगन्ता किल पञ्च शान्ता ।
दग्धा दिगीशो ज्वलिता दिगीशो
प्रधूमिता चानलदिक्क्रमेण ।
प्रत्येकमेकं प्रहराष्टकन्तु
सहन्ते दिशोऽष्टौ सविता क्रमेण ।
आद्ये दिनस्य प्रहरे प्रवृत्ते
महेशदेवेशहुताशदिक्षु ।
शिवा रटन्ती कुरुते नराणां
सन्त्रासकायक्षयबन्धनानि ।
याम्ये द्वितीये प्रहरस्य भागे
सहस्रनेत्रानलकालदिक्षु ।
शिवा रटन्ती कुरुते नराणां
सन्त्रासकायक्षयबन्धनानि ।
प्राप्ते तृतीये प्रहरे दिनस्य
हुताशवैवस्वतयातुदिक्षु ।
शिवा रटन्ती कुरुते नराणां
सन्त्रासकायक्षयबन्धनानि ।
समागतेऽह्नः प्रहरे तुरीये
प्रेतेशरक्षःपतिपाशिदिक्षु ।
शिवा रटन्ती कुरुते नराणां
सन्त्रासकायक्षयबन्धनानि ।
आद्ये निशायाः प्रहरे प्रवृत्ते
रक्षोऽधिपाद्‌पतिवातदिक्षु ।
शिवा रटन्ती कुरुते नराणां
सन्त्रासकायक्षयबन्धनानि ।
ततो द्वितीयप्रहरे रजन्या
तोयाऽधिपायानिलसोमदिक्षु ।
शिवा रटन्ती कुरुते नराणां
सन्त्रासकायक्षयबन्धनानि ।
यामे तृतीयेऽपि च यामवत्या
समीरदोषाकरशम्भुदिक्षु ।

शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥
समागते रात्रितुरीययामे
निशाकरेशानसुरेशदिक्षु ।
शिवा रटन्ती कुरुते नराणां
संत्रासकायव्ययबन्धनानि ॥”

इति शिवारुते दग्धदीप्तधूमितदिक्त्रययाम-प्रकरणं प्रथमम् ॥ * ॥

“इतीरितं दिक्त्रययामयोगात्
फलं विरुद्धं विरुतैः शिवायाः ।
ब्रूमोऽथ दिक्पञ्चकयामयोगात्
फलानि पुंसां क्रमतः शुभानि ॥
कृतान्तरक्षोवरुणानिलेन्दु-
दिक्ष्वाद्ययामे रटितैः शृगाल्याः ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
रक्षःप्रचेतोऽनिलसोमशम्भु-
दिक्षु द्वितीये प्रहरे रुतेन ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
जलेशवातेन्दुशिवामरेश-
दिक्षारवेण प्रहरे तृतीये ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
समीरसोमेशसुरेशवह्नि-
दिक्षु स्वरेण प्रहरे चतुर्थे ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
शशाङ्करुद्रेन्द्रहुताशकाल-
दिक्षारवैः पञ्चमयामभागे ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
ईशानशक्राग्निकृतान्तरक्षो-
दिक्षु स्वरेण प्रहरे च षष्ठे
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
इन्द्राग्निकालासुरपाशपाणि-
दिक्षारवैः सप्तमयामकाले ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
वह्न्यन्तकक्रव्यभुक्पाशिवात-
दिक्ष्वष्टमे च प्रहरे रवेण ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धि-
र्लाभः सुभिक्षं प्रियलोकसङ्गः ॥”

इति श्रीवसन्तराजे शिवारुते दिग्यामप्रकरणं द्वितीयम् ॥ * ॥

“एकादिकानां निधनाष्टमानां
शिवारुतानामधुना यदर्थम् ।
प्राच्यादिकास्वष्टसु दिक्ष्वशेषं
यद्यत् फलं तत्तदुदीरयामः ॥
धनाप्त्यभीष्टाप्तिमभीष्टलाभं
ध्रुवं ततोऽर्थस्य फलं शुभञ्च ।
भयं प्रलापं सकलञ्च सौख्य-
मेकादिशब्दैः कुरुते प्रशान्ते ॥
भयान्यनिष्टश्रुतिरर्थहानि-
रिष्टैर्वियोगो महती च भीतिः ।
स्याद्विग्रहाप्तिर्मरणञ्च दीप्ते
ह्येकादिना चेत् क्रतसप्तकेन ॥
ऐन्द्र्यां निनादे प्रथमेऽर्थलाभो
भवेद्द्वितीये निधिदर्शनञ्च ।
कन्यां तृतीये लभते चतुर्थे
ह्यध्वागमं पञ्चमकेऽथ सिद्धिम् ॥
षष्ठे रवे क्रुध्यति भूमिनाथो
भीः सप्तमे स्याद्विफलोऽष्टमेषु ॥
वह्नेऽग्निभागे प्रथमे द्वितीये
नराधिपः क्रुध्यति भीस्तृतीये ॥
घातश्चतुर्थे नगरस्य शब्दे
शिवाकृते पञ्चमके च युद्धम् ।
वदन्ति तज्ज्ञाः कलहञ्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
याम्ये शुभं स्यादशुभं द्वितीये
याम्ये महाव्याधिभयं तृतीये ।
स्वरे चतुर्थे स्वजनागमः स्यात्
पुत्रो भवेत् पञ्चमके तु ख्यातेषु ॥
जायेत कन्या रटिते च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ।
ग्रामस्य घातो दिशि राक्षसाना-
माद्ये द्वितीयेऽपि च गोकुलस्य ॥
मृत्युस्तृतीये द्विचतुष्पदानां
हानिश्चतुर्थेऽपि च पञ्चमेऽन्न ।
चौराद्भयं राजभयञ्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
शब्दे शिवाया वरुणस्य भागे
आद्ये भयं हानिरथ द्वितीये ।
स्याद्राजदूतागमनं तृतीये
दाहश्चतुर्थे खलु चौरभीतिः ॥
स्यात् पञ्चमे राजभयञ्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ।
वायव्यभागे भयमेकशब्दे
भयातिरेको भवति द्वितीये ॥
वृष्टिस्तृतीये महती चतुर्थे
मेघागमो वर्षति पञ्चमे च ।
क्षोभं विधत्ते नृपतेश्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
दिश्युत्तरस्यां विहिते विरावे
म्रियेत कश्चित् प्रथमे द्वितीये ।
महाभयं विप्रवधस्तृतीये
क्षत्त्रं चतुर्थे खलु हन्यते च ॥
विट् पञ्चमे षष्ठरवे च शूद्रो
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ।
राहोर्भया दर्शनमाद्यशब्दे
केतोर्द्वितीये च तथोत्तरेण ॥
उल्काप्रपातस्त्रिषु दुर्दिनञ्च
चतुर्षु मन्दं खलु पञ्चमे च ।
सङ्गो भवेद्वैरिजनैश्च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
आद्ये भवेद्दुर्दिनमीशदेशे
वृष्टिर्द्वितीये च रवे शिवायाः ।
वातस्तृतीये त्वशनिश्चतुर्थे
म्रियेत कश्चित् खलु पञ्चमे च ॥
लभेत पृथ्वीं निनदे च षष्ठे
भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥”

इति श्रीवसन्तराजे शिवारुते स्वराष्टकप्रकरणं तृतीयम् ॥ * ॥

“क्षेमलाभपुनरागमनानां
निश्चयं यमधिगम्य विशङ्कः ।
येन याति पथिकः परदेशं
तं शिवारुतमथ प्रथयामः ॥
यं यं देशं गन्तुमभ्युद्यतानां
पुंसां शब्दाननुचरन्ती शृगाली ।
शान्तायां सा सिद्धये वाञ्छितानां
दीप्तायान्तु स्यादभीष्टक्षयाय ॥
प्राचीं दिशं सम्मुखभानुबिम्बं
प्रतिष्ठमानस्य नरस्य यस्य ।
शब्दं शृगाली पुरतः करोति
बन्धं वधं वा प्रकरोति तस्य ॥
प्राचीदिगीशाभिमुखस्य पुंसः
प्रस्थानकामस्य शिवा सशब्दा ।
भियेऽर्थनाशाय च दक्षिणास्या
वामा पुनर्वाञ्छितकार्यसिद्ध्यै ॥
प्रत्यर्कमाशां चलितस्य पूर्वां
शिवा विरावं पुरुषस्य यस्य ।
करोति पृष्ठे प्रकरोति तस्य
सर्वप्रकाराभिलाषसिद्धिम् ॥
प्रस्थायिनो यस्य च दक्षिणाशां
शिवा रवं सृजति दक्षिणेन ।
आदित्यतुल्या यदि नो तदानीं
ध्रुवं भवेत्तस्य महीपतित्वम् ॥
वैवस्वताशां चलितस्य यस्य
दिवाकरस्तिष्ठति दक्षिणेन ।
शिवा च वामा कुरुते विरावं
सम्पद्यते तस्य समस्तमिष्टम् ॥
पुमान् यदा याम्यककुप्प्रवासी
करोति शब्दं पुरतः शृगाली ।
आस्ते विपक्षानपि सम्मुखश्चेत्
भवेत् तदानीमचिरेण मृत्युः ॥
नरस्य याम्यां ककुभं वियासोः
शृगालभार्या यदि पृष्ठभागे ।
फेत्कारमातन्वति मानवस्य
मृत्युश्च पुत्रेण भवत्यवश्यम् ॥
दिशं प्रतीचीं व्रजतः शृगाली
नरस्य यस्याभिमुखी विरौति ।
शान्ता शिवा शान्तफलप्रदात्री
दीप्ता तु दीप्तं फलमातनोति ॥
प्राचेतसीं सञ्चलितस्य काष्ठां
शृगालिका जल्पति दक्षिणेन ।

मध्ये सुतैः पञ्चभिरभ्युपेता
शिवान्विता पिष्टमयी प्रसन्ना ।
पूज्या शिवा तुष्यति भक्तियोगात्
प्रभूतपुष्पाक्षतधूपदीपैः ॥
साज्यगुडौदनमाषकुल्माषै-
र्यावकपूपलिकामिषमद्यैः ।
संभृतिरत्र नराधमधाम्नं
बुद्धिमता बलिकर्म्मणि कार्य्या ॥
प्राप्याष्टमीं वाथ चतुर्द्दशीं वा
संमन्त्र्य मन्त्रेण च सप्तसत्यः ।
बलिं शिवाया निशि निश्चयेन
दद्यात्मशुध्यो यदि भद्रमिच्छेत् ॥
अत्र मन्त्रः । ॐ शिवे ज्वालामुखि बलिं गृहाण गृहाण हुँ फट् स्वाहा । ॐ शिवे शिवदूति भगवति चण्डे इदमर्घ्यं बलिलीला-समुचितं गृहाण गृहाण आगच्छ आगच्छ वायुवेगेन शुभं कुरु कुरु स्वाहा । इत्यर्घ्य-मन्त्रः । बलिदानाय मन्त्रान्तरम् । ॐ नमो भगवति एनं एनं बलिं गृह्ण गृह्ण गन्धपुष्प-धूपदीपादिकं दह दह पच पच घोररूपिणि भो भगवति पिबत पिबत स्वाहा ।
एतस्य मन्त्रद्वितयस्य मध्या-
देकेन केनाप्यभिमन्त्रणीयः ।
बलिः शिवायाः सुमहाप्रभावं
पृथक् पृथक् मन्त्रयुगं वदेतत् ॥
ताम्बूलवस्त्रासनदक्षिणाभि-
र्नैमित्तिकं शाकुनशास्त्रदक्षम् ।
प्रपूजयेत्तत्र भवत्यभीष्ट-
माचार्य्यवर्य्ये परितोषिते हि ॥
अशेषिकावच्छिन्नतान्तरन्ध्र-
धिष्ण्यानि पूर्व्वोचितयेन सार्द्धम् ।
ज्येष्ठाश्च सन्त्यष्ट विरौति येह
श्रेयस्करी चानुकरोऽस्ति या ॥
हितैषिणी सर्व्वसमीहितेषु
देवी भवानी भुवि फेरवा च ।
कृताधिवासा कृपया सदैव
शिवारुते तेन यतेत विद्वान् ॥"
इति श्रीवसन्तराजशाकुने सदागमार्थशोभने समस्तसत्वकौतुके विरचितं शिवारुतं षष्ठम् ॥*॥
अथ तान्त्रिकशिवाबलिः । तदुक्तं कुलचूड़ामणौ ।
"विल्वमूले प्रान्तरे वा श्मशाने वाथ साधकः ।
मांसप्रधानं नैवेद्यं सन्ध्याकाले निवेदयेत् ॥
कालि कालीति वक्तव्यं ततः सा शिवरूपिणी ।
पशुरूपा समायाति परिवारगणैः सह ॥
भुक्त्वा रौति यदैशान्यां मुखमुत्तोल्य सुस्वरम् ।
तदैव मङ्गलं तस्य नान्यथा कुलभूषण ॥
अवश्यमन्नदानेन नियतं तोषयेच्छिवाम् ।
नित्यश्राद्धं तथा सन्ध्यावन्दनं पितृतर्पणम् ।
तथैव कुलसेवानां नित्यता कुलपूजने ॥
पशुरूपां शिवां देवीं यो नार्च्चयति निर्जने ।
शिवारावेण तस्याशु सर्व्वं नश्यति निश्चितम् ॥
जपपूजाविधानानि यत्किञ्चित् सुकृतानि च ।
गृहीत्वा शापं दत्त्वा च शिवा रोदिति निर्जने ॥
एकया भुज्यते यत्र शिवया देव भैरव ।
तत्रैव सर्व्वशक्तीनां प्रीतिः परमदुर्लभा ॥
पशुशक्तिः पक्षिशक्तिर्नरशक्तिर्यथाक्रमात् ।
पूजनात् द्विगुणं कर्म्म मङ्गलं साधयेत्ततः ॥
तेन सर्व्वप्रयत्नेन कर्त्तव्यं पूजनं महत् ।
राजादिभयमापन्ने देशान्तरभयादिके ॥
शुभाशुभानि कर्म्माणि विचिन्त्य बलिमाहरेत् ।
गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि ॥
शुभाशुभफलं व्यक्तं ब्रूहि गृह्ण बलिं तव ।
एवमुच्चार्य्य दातव्यो बलिः कुलजनप्रियः ॥
यदि नो भुज्यते वत्स तदा नैव शुभं भवेत् ।
शुभं यदि भवेत्तत्र भुज्यते तदशेषतः ।
एवं ज्ञात्वा महादेव शान्तिस्वस्त्ययनं चरेत् ॥"
इति तन्त्रसारः ॥

शिवाक्षं, क्ली, (शिवस्याक्षि कारणत्वेनास्त्यस्येति । अच् ।) रुद्राक्षम् । इति राजनिर्घण्टः ॥ (अस्य विवरणं रुद्राक्षशब्दे द्रष्टव्यम् ॥)

शिवाटिका, स्त्री, वंशपत्री । इति भावप्रकाशः ॥

शिवात्मकं, क्ली, (शिवः सुखकरः आत्मा स्वरूपो यस्य ।) सैन्धवम् । इति राजनिर्घण्टः ॥ शिवमये, त्रि ॥

शिवानी, स्त्री, (शिवस्य भार्य्या । यद्वा, शिवं मङ्गलमानयतीति । आ+नी+डः । गौरादित्वात् ङीष् ।) दुर्गा । इति लोकप्रसिद्धिः ॥ जयन्तीवृक्षः । इति शब्दचन्द्रिका ॥

शिवाप्रियः, पुं, (शिवायाः प्रियः ।) छागः । इति त्रिकाण्डशेषः ॥ शिवस्य शिवाया अप्रियवस्तुनि शिवाया वल्लभे च त्रि ॥

शिवापीड़ः, पुं, (शिवस्यापीड़ इव ।) वकवृक्षः । इति राजनिर्घण्टः ॥ शिवाशिवयोः शेखरस्य ॥

शिवाफला, स्त्री, (शिवाया इव फलमस्याः ।) शमीवृक्षः । इति राजनिर्घण्टः ॥

शिवारातिः, पुं, (शिवायाः शृगालस्यारातिः ।) कुक्कुरः । इति शब्दमाला ॥ शिवाशिवयोः शत्रुश्च ॥

शिवालयं, क्ली, (शिवा आलीयतेऽत्रेति । आ+ली+अच् ।) श्मशानम् । इति हारावली ॥ (यथा, कथासरित्सागरे । ३ । ३४ ।
"रात्रावेवं युद्ध्यमानौ च पुण्ये शून्ये शिवालये ॥")

शिवालयः, पुं, (शिवायाः शिवस्य वा आलयः ।) रक्ततुलसी । इति शब्दचन्द्रिका ॥ शिवस्य गृहम् । यथा, रामार्च्चनचन्द्रिकायाम् ।
"चन्द्रसूर्य्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते ॥"
इति तिथ्यादितत्त्वम् ॥

शिवालुः, पुं, शृगालः । इति राजनिर्घण्टः ॥

शिवा(व)बलिः, पुं, (शिवाभ्यो दीयमानो बलिः ।) रात्रौ शिवादेयमांसप्रधाननैवेद्यम् । यथा । अथ शिवाबलिः । कुलचूड़ामणौ ।
"विल्वमूले प्रान्तरे वा श्मशाने वापि साधकः ।
मांसप्रधाननैवेद्यं सन्ध्याकाले निवेदयेत् ॥
कालि कालीति वक्तव्ये तत्रोमा शिवरूपिणी ।
पशुरूपधरायाति परिवारगणैः सह ॥
भुक्त्वा रौति यदैशान्यां मुखमुत्तोल्य सुस्वरम् ।
तदैव मङ्गलं तस्य नान्यथा कुलभूषण ॥
अवश्यमन्नदानेन नियतं तोषयेच्छिवाम् ।
नित्यश्राद्धं तथा सन्ध्यावन्दनं पितृतर्पणम् ॥
तथैव कुलसेवानां नित्यता कुलपूजने ।
पशुरूपां शिवां देवीं यो नार्च्चयति निर्ज्जने ॥
शिवारावेण तस्याशु सर्व्वं नश्यति निश्चितम् ।
जपपूजाविधानानि यत्किञ्चित् सुकृतानि च ॥
गृहीत्वा शापं दत्त्वा च शिवा रोदिति निर्जने ।
एकया भुज्यते यत्र शिवया देव भैरव ॥
तत्रैव सर्व्वशक्तीनां प्रीतिः परमदुर्लभा ।
पशुशक्तिः पक्षिशक्तिर्नरशक्तिर्यथाक्रमात् ॥
पूजनात् द्विगुणं कर्म्म मङ्गलं साधयेत्ततः ।
तेन सर्व्वप्रयत्नेन कर्त्तव्यं पूजनं महत् ॥*॥
राजादिभयमापन्ने देशान्तरभयादिके ।
शुभाशुभानि कर्म्माणि विचिन्त्य बलिमाहरेत् ॥
गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि ।
शुभाशुभफलं व्यक्तं ब्रूहि गृह्ण बलिं तव ॥
एवमुच्चार्य्य दातव्यो बलिः कुलजनप्रियः ।
यदि न भुज्यते वत्स तदा नैव शुभं भवेत् ॥
शुभं यदि भवेत्तत्र भुज्यते तदशेषतः ।
एवं ज्ञात्वा महादेव शान्तिस्वस्त्ययनं चरेत् ॥
नैवेद्योपरि मूलमन्त्रमष्टोत्तरशतं जप्त्वा बलिं दद्यादिति शेषः ।" इति तन्त्रसारः ॥

शिवाह्लतिः, स्त्री, जयन्तीवृक्षः । इति शब्दचन्द्रिका ॥

शिवाह्लादः, पुं, (शिवस्याह्लादो यस्मात् ।) वकवृक्षः । इति राजनिर्घण्टः ॥ शिवस्यानन्दश्च ॥

शिवाह्वा, स्त्री, (शिवेन आह्वा यस्याः ।) रुद्रजटा । इति राजनिर्घण्टः ॥ शिवनामके, त्रि ॥

शिविः, पुं, हिंस्रपशुः । इति त्रिकाण्डशेषः ॥ भूर्ज्जवृक्षः । राजविशेषः । स च उशीनरराजपुत्रः । इति मेदिनी ॥ तस्य चरित्रं यथा,—
मैत्रेय उवाच ।
"शृणु राजन् ! प्रवक्ष्यामि समासं शिविना यथा ।
समाश्रं दत्तवान् सत्यं पुरा ह्यौशीनरो युवा ॥
सत्यदानरतं ज्ञात्वा शिविमिन्द्राग्नुत्सुकौ ।
जिज्ञासार्थं समेयातां वर्त्तमाने महाध्वरे ।
वह्निर्भूत्वा कपोतस्तु हरिः श्येनपुरःसरः ।
शरणार्थी महीपालं निनिन्ये भयविह्वलः ॥
त्राहि मां पृथिवीपालेत्यवदत् श्येनजाद्भयात् ।
स तमाश्वासयामास कपोतं शरणागतम् ॥
राजानमुपगम्याथ श्येनः प्रोवाच संसदि ।
वचनं शृणु मे राजन् ! क्षुधार्त्तस्य कुटुम्बिनः ॥
धर्म्मात्मानं त्वामाहुर्व्वै पृथिव्यां सर्व्वपार्थिवाः ।
तद्विरुद्धं कथं कर्म्म कर्त्तुमिच्छसि पार्थिव ॥
सर्व्वस्य समरः स्वार्थः स्वपरार्थास्तु कस्यचित् ।
परार्था भवतो नित्यं सफलस्य तरोरिव ॥
नोपकारपरेऽप्येवमपकारपरो जनः ।
अपकारपरेऽपि त्वमुपकारपरः सदा ॥
ममैव विहितो धात्रा भक्ष्योऽयं त्वं समुत्सृज ।

प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत् ।
मालती यूथिका कुन्दमाधवी केतकी तथा ॥
नागेश्वरं मल्लिका च काञ्चनं वकुलं शुभम् ।
अपराजिता च शुभदा तेषामुद्यानमीप्सितम् ॥
पूर्व्वे च दक्षिणे चैव शुभदं नात्र संशयः ।
ऊर्द्ध्वं षोड़शहस्तेभ्यो नैवं कुर्य्याद्गृहं गृही ॥
ऊर्द्ध्वं विंशतिहस्तेभ्यः प्राकारं न शुभप्रदम् ।
सूत्रधारं तैलकारं स्वर्णकारञ्च चौरकम् ॥
वाटीमध्ये ग्राममध्ये न कुर्य्यात् स्थापनं बुधः ।
ब्राह्मणं क्षत्त्रियं वैश्यं सच्छूद्रं गणकं शुभम् ॥
भट्टं वैद्यं पुष्पकारं स्थापयेत् शिविरान्तिके ।*
प्रस्थे च परिखामानं शतहस्तं प्रशस्तकम् ।
परितः शिविराणाञ्च गम्भीरं दशहस्तकम् ॥
सङ्केतपूर्व्वकञ्चैव परिखाद्वारमीप्सितम् ।
शत्रोरगम्यं मित्रस्य गम्यमेव सुखेन च ॥
शाल्मलीनां तिन्तिड़ीनां हिन्तालानां तथैव च ।
निम्बानां सिन्धुवाराणां उडुम्बराणामभद्रकम् ॥
धुस्तूराणां वटानाञ्च एरण्डानामवाञ्छितम् ।
एतेषामतिरिक्तानां शिविरे कालमीप्सितम् ॥
वृक्षञ्च वज्रहतकं दूरतो वर्जयेद्बुधः ।
पुत्त्रदारधनं हन्यादित्याह कमलोद्भवः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०२ अध्यायः ॥

शिवीरथः, पुं, वाप्ययानम् । इति हारावली ॥

शिवेष्टः, पुं, ( शिवस्य इष्टः । ) वकवृक्षः । इति राजनिर्घण्टः ॥ शिवप्रिये, त्रि ॥

शिवेष्टा, स्त्री, ( शिवस्य इष्टा प्रिया । ) दूर्व्वा । इति राजनिर्घण्टः ॥

शिशिरः, पुं, ( शशति इतस्ततो गच्छतीति । शश + किरच् प्रत्ययेन साधुः । ) हिमः । इति मेदिनी ॥ ( विष्णुः । यथा, महाभारते । १३ । १४९ । ९१ ।
"शब्दातिगः शब्दसहः शिशिरः शर्व्वरीकरः ॥")

शिशिरः, पुं,क्ली, ( शशति गच्छति वृक्षादिशोभा यस्मात् । शश + "अजिरशिशिरशिथिलेति ।" उणा० १ । ५४ । इति किरच्प्रत्ययेन साधुः ।) ऋतुविशेषः । इत्यमरः ॥ स तु माघफाल्गुनमासद्वयात्मकः । तत्पर्य्यायः । कम्पनः २ शीतः ३ हिमकूटः ४ कोटनः ५ । क्वचित् पुस्तके कोटनस्थाने कोड़व इति पाठः । इति राजनिर्घण्टः ॥ तत्कालीनजलगुणा जलशब्दे द्रष्टव्याः ॥ * ॥ तत्र जातफलम् ।
"मिष्टान्नभोगी मधुरप्रवादी
कलत्रपुत्त्रादियुतः क्षुधार्त्तः ।
क्रोधी सुधीश्चारुकलेवरश्च
यस्य प्रसूतिः शिशिराभिधाने ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
तत्र वर्णनीयानि । करीषधूमः कुन्दः पद्मनाशः शिशिरोत्कर्षश्च । इति कविकल्पलता ॥ * ॥
अस्य गुणाः ।
"शिशिरं शीतलं रूक्षं शीतं वातप्रकोपणम् ।"
इति राजवल्लभः ॥
अपि च ।
"शिशिरः शीतलोऽतीवरूक्षो वाताग्निवर्द्धनः ।"
इति भावप्रकाशः ॥

शिशिरः, त्रि, ( शश प्लुतगतौ + किरच्प्रत्ययेन साधुः । ) शीतगुणयुक्तः । यथाह अमरः ।
"शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जड़ः ।
तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ॥"
( यथा, रघुः । १४ । ३ ।
"आनन्दजः शोकजमश्रु वाष्पस्तयोरशीतं शिशिरो बिभेद ॥")

शिशुः, पुं, ( श्यतीति । शो + "शः किन् सन्वच्च ।" उणा० १ । २१ । इति उः । ) बालकः । तत्पर्य्यायः । पोतः २ पाकः ३ अर्भकः ४ डिम्भः ५ पृथुकः ६ शावकः ७ । इत्यमरः ॥ शावः ८ अर्भः ९ शिशुकः १० पोतकः ११ भिषकः १२ । इति शब्दरत्नावली ॥ गर्भः १३ । इति जटाधरः ॥ तस्य लक्षणादि यथा । वृद्धशातातपः ।
"शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम् ।
रजस्वलादिसंस्पृष्टे स्नातव्यन्तु कुमारकैः ॥
प्राक् चूड़ाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ।
कुमारस्तु स विज्ञेयो यावन्मौञ्जी न बन्धनम् ॥"
इति गोपालन्यायपञ्चाननकृतशुद्धितिर्निर्णयः ॥
अपि च ।
"चतुर्थाद्वत्सरादूर्द्ध्वं यावद्वर्षं समा वयः ।
शिशोर्व्रतं प्रकुर्व्वन्ति गुरुसम्बन्धिबान्धवाः ॥"
इति ब्रह्मपुराणवचनम् ॥
"जातमात्रः शिशुस्तावत् यावदष्टौ समा वयः ।
स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शकः ॥
भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते ।
तस्मिन् काले न दोषः स्यात् स यावन्नोपनीयते ॥"
इति मनुवचनम् ॥ * ॥
तस्याध्यापनक्रमो यथा,—
"प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम् ।
अध्यापयेच्च प्रथमं द्विजाशीर्भिः प्रपूजितम् ॥"
इति मलमासतत्त्वे वृहस्पतिवचनम् ॥ * ॥
शिशुपुत्त्रं त्यक्त्वा प्रव्रज्याश्रमनिषेधो यथा,—
"मातरं पितरं वृद्धं भार्य्याञ्चैव पतिव्रताम् ।
शिशुञ्च तनयं हित्वा नावधूताश्रमं व्रजेत् ॥"
इति महानिर्व्वाणतन्त्रम् ॥
अन्यद्बालशब्दे द्रष्टव्यम् ॥ * ॥ ( कुमारः । कार्त्तिकेयः । यथा, महाभारते । ३ । २३१ । ४ ।
"शिशुः शीघ्रः शुचिश्चण्डो दीप्तवर्णः शुभाननः ॥")

शिशुकः, पुं, ( शिशोरिव प्रतिकृतिः । शिशु + इवार्थे कन् । ) जलजन्तुविशेषः । शुशुक् इति भाषा । तत्पर्य्यायः । उलूपी २ । इत्यमरः ॥ दे उपल इति ख्याते अतिचक्षवे मत्स्ये । शिशुमाराकृतिर्मत्स्यभेदः उलूपी । इति कलिङ्गादयः । शोश इति ख्यातो मत्स्यविशेषः उलपीत्यन्ये । भँगाल इति ख्याते इत्येके । शिशुमार एव उच्यते इति सर्व्वस्वम् । यथा च रत्नकोषादौ 'चुलुपी शिशुमारः स्यादुलूपी शिशुकस्तथा ।' ऊर्द्ध्वं लुम्पति आर्द्रतां उलूपी लुप्लृ श प औ छेदे उत्पूर्व्वः पचादित्वादच् पृषोदरादित्वात् तलोपः गौरादित्वाच्च ह्रस्वोकारोऽपि । 'शिशुकस्तूलुपी वाचः शीशी तु नदर्द्धयोः ।' इति वाचस्पतिः । चुलुपीति पवर्गादिपाठ इति केचित् । शिशुरिव शिशुकः ।
'शिशुकः शिशुमारेऽपि बालकोलूतिकेऽपि च ।
इति रुद्रः ॥"
इति भरतः ॥ अपि च ।
"उलुपी स्यादुलूपीव चुलुम्पी चुलकीत्यपि ।
शिशुकश्चेति पर्य्यायः शिशुमाराकृतौ झषे ।
केचिदुत्पलसमत्वे तु पर्य्यायोऽयं निगद्यते ॥"
इति शब्दरत्नावली ॥
"शिशुकः शिशुमारश्च स च श्रोणी नरक्रकः ॥"
इति राजनिर्घण्टः ॥ * ॥
शिशुमारः । ( यथा, महाभारते । १३ । ८५ । ४८ ।
"कूर्म्मान् कर्कटकान् नक्रान् मकरान् शिशुकानपि ॥" )
बालकः । इति मेदिनी ॥ ( यथा, कथासरित्सागरे । २१ । ३९ ।
"शिशुकद्वयसंयुक्ता आसन्नी काचि दुर्गता ।
द्वारि स्थिता महाराज दैवदर्शनकाङ्क्षिणी ॥")
वृक्षविशेषः । इति हेमचन्द्रः ॥

शिशुगन्धा, स्त्री, ( शिशोर्गन्धो यस्य । ) मल्लिकाविशेषः । यथा,—
"लक्ष्मीपतिर्लवङ्गी स्यात् नीमाली नवमालिका ।
शिशुगन्धा मधुमल्ली तथा करुणमल्लिका ॥"
इति शब्दमाला ॥

शिशुचान्द्रायणं, क्ली, ( शिशूरिव चान्द्रायणम् । स्वल्पचान्द्रायणमित्यर्थः । ) व्रतविशेषः । यथा,
"चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः ।
चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृतम् ॥"
इति मनुः ॥

शिशुता, स्त्री, ( शिशोर्भावः । शिशु + तल् । ) शिशुत्वम् । शिशोरवस्था । इति जटाधरः ॥

शिशुत्वं, क्ली, ( शिशोर्भावः । शिशु + त्व । ) शैशवम् । इत्यमरः ॥ तत्पर्य्यायः बाल्यशब्दे द्रष्टव्यः ॥

शिशुपालः, पुं, चेदिदेशीयराजः । स तु कृष्णेन हतः । शिशुपालवधकाव्यं माघेन कृतम् । तत्पर्य्यायः । दमघोषसुतः २ चैद्यः ३ चेदिराट् ४ । इति जटाधरः ॥ शिशुपालकः ५ । इति त्रिकाण्डशेषः ॥ ( यथा, भागवते । ७ । १० । ३८ ।
"ताविहाथ पुनर्जातौ शिशुपालकरूषजौ ।
हरौ वैरानुबन्धेन पश्यतस्ते समीयतुः ॥" )

शिशुपालकः, पुं, ( शिशुपाल + स्वार्थे कन् । ) दमघोषसुतः । इति त्रिकाण्डशेषः ॥ केलिकदम्बवृक्षः । इति शब्दचन्द्रिका ॥

त्रयी वार्त्ता दण्डनीतिः प्रजा वर्णाश्रमेष्वया ।
शिष्टैराचर्य्यते यस्मात् शिष्टाचारः स शाश्वतः ॥
दानं सत्यं तपोऽलोभो विद्येष्या पूजनं दमः ।
अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्ष-
णम् ॥
शिष्टा यस्माचरन्त्येनं मनुः सप्तर्षयश्च ये ।
मन्वन्तरेषु सर्व्वेषु शिष्टाचारस्ततः स्मृतः ॥
श्रुतिस्मृतिभ्यां विहितो धर्म्मो वर्णाश्रमात्मकः ।
शिष्टाचारविरुद्धस्तु धर्म्मः स साधुसम्मतः ॥"
इति मात्स्ये १२० अध्यायः ॥

शिष्टिः, स्त्री, (शास + क्तिन् । "शास इदङ्हलोः ।" ६ । ४ । ३४ । इति उपधाया इः । ) आज्ञा । शासनम् । इत्यमरः ॥ ( यथा, मनुः । ४ । १६४ ।
"अन्यत्र पुत्त्रात् शिष्याद्वा शिष्टार्थं ताडयेत्तु तौ ॥")

शिष्यः, त्रि, (शिष्यतेऽसाविति । शास + "एतिस्तुशास्वृदृजुषः क्यप् ।" ३ । १ । १०९ । इति क्यप् । "शास इदङ्हलोः ।" ६ । ४ । ३४ । इति इः । "शासिवसीति ।" ८ । ३ । ६० । इति षः । ) उपदेश्यः । तत्पर्य्यायः । छात्रः २ अन्तेवासी ३ । इत्यमरः ॥ अन्तेसत् ४ । अन्तेषदः ५ । यथा,—
"छात्रान्तेवासिशिष्यान्तेषद एकार्थता इमे ॥"
इति जटाधरः ॥

तस्य लक्षणं यथा,—
"वाङ्मनःकायवसुभिर्गुरुशुश्रूषणे रतः ।
एतादृशगुणोपेतः शिष्यो भवति नारद ॥
देवताचार्य्यशुश्रूषां मनोवाक्कायकर्म्मभिः ।
शुद्धभावो महोत्साहो बोद्धा शिष्य इति स्मृतः ॥"
इति दीपातन्त्रम् ॥

अपि च ।
"शान्तो विनीतः शुद्धात्मा श्रद्धावान् धारणक्षमः ।
समर्थश्च कुलीनश्च प्राज्ञः सच्चरितो व्रती ।
एवमादिगुणैर्युक्तः शिष्यो भवति नान्यथा ॥" * ॥
निषिद्धशिष्यलक्षणमाह ।
"पापिने क्रूरचेष्टाय शठाय कृपणाय च ।
दीनायाचारशून्याय मन्त्रद्वेषपराय च ॥
निन्दकाय च मूर्खाय तीर्थद्वेषपराय च ।
भक्तिहीनाय देवेशि न देया मलिनाय च ॥
गुरुता शिष्यता वापि तयोर्व्वत्सरवासतः ॥"
तथा चोक्तं सारसंग्रहे ।
"सद्गुरुः स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत् ।
वर्षैकेन भवेद्योग्यो विप्रो गुणसमन्वितः ॥
वर्षद्वयेन राजन्यो वैश्यस्तु वत्सरैस्त्रिभिः ।
चतुर्भिर्व्वत्सरैः शूद्रः कथिता शिष्ययोग्यता ॥"
इति तन्त्रसारः ॥ * ॥

अन्यच्च ।
"आचारे शासयेद्यस्तु स आचार्य्य उदाहृतः ।
यस्याचार्य्यपराधीनस्तथाख्यं शास्त्रवे हृदि ।
शासने स्थिरवृत्तिश्च शिष्यः सद्भिरुदाहृतः ॥
एवं लक्षणसंयुक्तं शिष्यं सर्व्वगुणान्वितम् ।
अध्यापयेद्विधानेन मन्त्ररत्नमनुत्तमम् ॥"
इति पाद्मोत्तरखण्डे २५ अध्यायः ॥ * ॥

पुत्त्रशिष्ययोस्तुल्यत्वं यथा,—
"यथा पुत्त्रस्तथा शिष्यो न भेदः पुत्त्रशिष्ययोः ।
तर्पणे पिण्डदाने च पालने परिपोषणे ॥
यथाग्निदाता पुत्त्रश्च तथा शिष्यश्च निश्चितम् ।
इतीदं काण्वशाखायामुवाच कमलोद्भवः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ६१ अध्यायः ॥

पुत्त्रशिष्याभ्यां विशेषो यथा,—
सनत्कुमार उवाच ।
"पुत्त्र एवास्मि देवेश यतः शिष्योऽस्म्यहं विभो ।
न विशेषोऽस्ति पुत्त्रस्य शिष्यस्य च पितामह ॥
ब्रह्मोवाच ।
विशेषः शिष्यपुत्त्राभ्यां विद्यते धर्म्मनन्दन ।
धर्म्मकर्म्मसमायोगे तथापि गदतः शृणु ॥
पुन्नाम्नो नरकात्त्राति पुत्त्रस्तेनेह गीयते ।
शेषपापहरः शिष्य इतीयं वैदिकी श्रुतिः ॥
सनत्कुमार उवाच ।
कोऽयं पुन्नामको देव नरकात्त्राति पुत्त्रकः ।
कस्माच्छेषं ततः पापं हरेच्छिष्यश्च तद्वद ॥"
इति वामने ५७ अध्यायः ॥
ब्रह्मोवाच ।
"अतः परं प्रवक्ष्यामि शेषपापस्य लक्षणम् ।
ऋणं देवर्षिभूतानां मनुष्याणां विशेषतः ॥
पितॄणाञ्च द्विजश्रेष्ठ सर्व्ववर्णेषु चैकतः ।
ओँकारादिनिवृत्तिश्च पापकार्य्यकृतिश्च या ॥
हत्यादिकं महापापं त्वगम्यागमनं तथा ।
घृतादिविक्रयं घोरं चण्डालादिप्रतिग्रहम् ॥
स्वदोषगोपनं पापं परदोषप्रकाशनम् ।
ईर्ष्याविद्धं वाक्यदुष्टं निष्ठुरत्वं घड्वरम् ॥
ढाकित्वं तालवादित्वं नाम्ना वाणाख्यधर्म्मजम् ।
मारणत्वमधार्म्मिक्यं नरकावहमुच्यते ॥
एतैः पापैश्च संयुक्तः पात्यते यदि शङ्करम् ।
ज्ञानाधिकमशेषेण शेषात् पापात् जयेत्ततः ॥
शारीरं वाचिकं यत्तु मानसं त्रिविधं तथा ।
पितृमातृकृतं यच्च कृतं यच्चाश्रितैर्नरैः ॥
ज्ञातिभिर्व्वान्धवैश्चापि तस्मिन् जन्मनि धर्म्मज ।
तत्सर्व्वं विलयं याति कर्म्मणा सुतशिष्ययोः ॥
तस्मात् पुत्त्रश्च शिष्यश्च विधानज्ञो विपश्चिता ।
शुभसमर्थमभिधाय शिष्यान श्रेष्ठतरः सुतः ॥
शेषात्तारयते शिष्यः सर्व्वमेव हि पुत्त्रकः ॥"
इति वामने ५८ अध्यायः ॥

शिह्लः, पुं, शिह्लकः । इति शब्दचन्द्रिका ॥

शिह्लकः, पुं, (शिह्ल एव । स्वार्थे कन् । ) गन्धद्रव्यविशेषः । शिलारसः । शिला इति लोवान् इति च भाषा । तत्पर्य्यायः । कपिनामा २ कपिः ३ तैलम् ४ कृत्रिमम् ५ कपिलः ६ चला ७ तुरुष्कः ८ सुक्तिसक्तः ९ पिण्डातः १० वरः ११ । इति रत्नमाला ॥ पिण्डकः १२ सिह्लः १३ यावनः १४ । इत्यमरः ॥ अस्यानुलेपनगुणाः ।
"शिह्लकः परमा मांसी देवदारु सुरा नखम् ।
सर्व्वेऽमी परमा लक्ष्मी रद्योम्रा ज्वरनाशनाः ॥"
रौक्ष्यघ्ना इति वा पाठः । इति राजवल्लभः ॥
अन्यत् तुरुष्कशब्दे द्रष्टव्यम् ॥

शी, ङ ल ञि स्वप्ने । इति कविकल्पद्रुमः ॥ (अदा०-आत्म०-अक०-सेट् ।) ङ ल, शेते । ञि, शयितोऽस्ति । मण्डपे शयामीति गणकृतानित्यत्वात् परस्मैपदे शपोऽलुगभावे चेति रमानाथः । वस्तुतस्तु शेते शयः पश्चात् शय इवाचरतीति क्वौ साध्यम् । इति दुर्गादासः ॥

शीः, स्त्री, ( शी + क्विप् । ) शान्तिः । शयनम् । इति शब्दरत्नावली ॥

शीक, ऋ ङ सेके । सर्पे । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) ऋ, अशिशीकत् । ङ, शीकते । इति दुर्गादासः ॥

शीक, कि आमर्षे । सेके । इति कविकल्पद्रुमः ॥ ( चुरा०-पक्षे भ्वा०-सक०-सेट् । ) कि, शीकयति शीकति । आमर्षः स्पर्शः । तथा च ।
"चन्द्रावतीवरङ्गार्द्रा शीकयन्ति च यद्वपुः ।"
इति हलायुधः ॥
वायवः स्पृशन्ति इत्यर्थः । भट्टमल्लस्तु आमर्षण इति मूर्द्धन्यषमध्यं पठित्वा क्षमार्थमाह । इति दुर्गादासः ॥

शीकरं, क्ली, (शीक्यतेऽनेनेति । शीक + वाहुलकात् अरः ।) शरलद्रवः । इति मेदिनी ॥

शीकरः, पुं, (शीक्यतेऽनेनेति । शीक + वाहुलकात् अरः । इत्युज्ज्वलदत्तः । ३ । १३१ ।) वातादिप्रेरितजलकणा । इत्यमरः ॥ (यथा, कुमारे । १ । १५ ।
"भागीरथीनिर्झरशीकराणां
वोढा मुहुः कम्पितदेवदारुः ॥")
वायुः । इति मेदिनी ॥

शीघ्रं, क्ली, ( शिङ्घति व्याप्नोतीति । शिघ व्याप्तौ + रक्प्रत्ययेन साधु । ) विलम्बाभावः । तत्पर्य्यायः । त्वरितम् २ लघु ३ क्षिप्रम् ४ अरम् ५ द्रुतम् ६ सत्वरम् ७ चपलम् ८ तूर्णम् ९ अविलम्बितम् १० आशु ११ । अव्ययाः शीघ्रवाचकाः यथा । स्राक् १२ झटिति १३ अञ्जसा १४ अह्नाय १५ सपदि १६ द्राक् १७ मङ्क्षु १८ । इत्यमरः ॥ तद्वैदिकपर्य्यायः । नु १ मक्षु २ द्रवत् ३ ओषम् ४ जीराः ५ जूर्णिः ६ शूर्त्ताः ७ शूघनासः ८ शीभम् ९ तृषु १० तूयम् ११ तूर्णिः १२ अजिरम् १३ भुरण्युः १४ शु १५ आशुः १६ प्राशुः १७ तूतुजिः १८ तूतुजानः १९ तुज्यमानासः २० अज्राः २१ साचिवित् २२ द्युगत् २३ ताजत् २४ तरणिः २५ वातरंहा २६ । इति षड्विंशतिः क्षिप्रनामानि इति वेदनिघण्टौ । २ । १५ ॥ तामस्पकम् । इति राजनिर्घण्टः ॥ ( पुं, कुशवंशीयाग्निवर्णस्य पुत्त्रः । यथा, भागवते । ९ । १२ । ५ ।
"सुदर्शनोऽथाग्निवर्णः शीघ्रस्तस्य मरुः सुतः ॥")
शीघ्रविशिष्टे, त्रि । इत्यमरः ॥ ( यथा, महाभारते । ३ । ६७ । ६ ।
"स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम ।
भवेयुरश्वाध्यक्षोऽसि वेतनं ते शतं शताः ॥")

शीघ्रग त्रि, ( शीघ्रं गच्छतीति । गम्+ड ।) द्रुतगामी । यथा,—

'हरिते रोगोऽशुताय शस्त्राघातभीतिभिश्च विध्वस ।
कपिले शीघ्रगसत्त्वैश्छन्नधोऽथ दुर्भिक्षम् ॥"

इति तिथ्यादितत्त्वम् ॥

वायौ पुं । इत्यमरे व्याशुगशब्ददर्शनात् । ( यथा, महाभारते । २ । ३ । २५ ।

"मन सुपर्णा भूतानि शीघ्रग प्राय धारय ॥")

शीघ्रगामी, [ न् ] त्रि, आशुगमनशील । शीघ्रं गच्छतीत्यर्थे शीघ्रशब्दपूर्वकगमधातोर्णिनिप्रत्ययेन निष्पन्न ॥

शीघ्रचेतन, पुं ( शीघ्रं चेततीति । चित+ल्यु ।) कुक्कुर । इति शब्दमाला । द्रुतचेतनायुक्ते, त्रि ।

शीघ्रजन्मा [ न् ] पुं ( शीघ्रं जन्म यस्य ।) करञ्जविशेष । काँटाकरञ्ज इति भाषा । यथा,—

'पूतीक पांशुल मोदा शीघ्रजन्मा क्रकचित् ॥"

इति शब्दचन्द्रिका ।

शीघ्रपुष्प, पुं ( शीघ्रं पुष्पं यस्य ।) अगस्त्यवृक्ष । इति राजनिर्घण्ट ।

शीघ्रवधी, [ न् ] पुं ( शीघ्रं विध्यतीति । विध छिद्रीकरणे+णिनि ।) क्षिप्रशरवेधकर्त्ता । तत्पर्याय । लघुहस्त २ । इति हेमचन्द्र ॥

शीघ्रा स्त्री, दन्तीवृक्ष । इति राजनिर्घण्ट ॥

शीघ्रीय त्रि, द्रुतसम्बन्धि । शीघ्रभवम् । शीघ्रशब्दात् छोपप्रत्ययेन निष्पन्नम् ।

शीत, स्त्री, ( श्यै ङ गतौ+क्त । "द्रवमूर्त्तिस्पर्शयो श्य ।" ६ । १ । २४ । इति सम्प्रसारणम् । "हल ।" ६ । ४ । २ । इति दीर्घ ।) हिमगुण । इत्यमर । (यथा, मनु । ११ । ११४ ।
"उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
न कुर्वीतात्मनस्त्राण गोरकृत्वा तु शक्तित ॥")

जलम् । इति शब्दमाला । वचम् । इति राजनिर्घण्ट । शीत तुषारशीतरवहुवारद्रुमेषु च । इति भरतधृतारुप ॥

शीत पुं ( श्यै+क्त ।) वेतसवृक्ष । बहुवारवृक्ष । इत्यमर ॥ अश्मपर्णी । इति शब्दरत्नावली ॥ पर्पट । निम्ब । कर्पूर । इति राजनिर्घण्ट ॥ हिम ऋतु । अस्य विवरण हेमन्तशब्दे द्रष्टव्यम् ॥

शीत, त्रि ( श्यै+क्त ।) शीतल । इत्यमर । ( यथा महाभारते । १ । १६८ । ५० ।
"शीतश्च सुखो वायु सुखश्चोष्णश्च शुचि ।
कर्मरत्नाविचित्रा च भूमि पुष्पविभूषिता ॥")

अलस । इति मेदिनी । क्लिन्न । इति शब्दचन्द्रिका । शीतवस्तुगुणा । पित्तमार्दवम् । वलवर्धनपुष्टिमम् । गुरुत्वञ्च । इति राजवल्लभ ।

शीतक, पुं ( शीत+स्वार्थे कन् । ) शीतकाल । सुखासन । दीर्घसूत्री । इति मेदिनी । वृश्चिक । इति शब्दमाला । ( वृक्षविशेष । यथा, बृहत्संहितायाम् । १३ । २७ ।

"माषहलहूयकोद्दलशीतकमाख्यभूत पुरा ॥")

शीतकर, पुं, ( शीत शीतल करो यस्य ।) चन्द्र । इति हिमकरशब्ददर्शनात् ॥ ( यथा, बृहत्संहितायाम् । ४ । २६ ।

"भस्मनिभ परुषोऽरुणमूर्त्ति
शीतकर किरणे परिहीण ॥")

शीतलपाणियुक्ते शीतकारिणि च त्रि ।

शीतकषाय पुं, ( शीतस्य कषाय ।) हिम कषाय । यथा,—

'क्षुण्ण द्रव्यपल सम्यक षड्भिर्जलपलै प्लुतम् ।
शर्वरीमुषित स स्याद्धिमशीतकषायक ॥)

इति वैद्यकम् ॥

शीतकाल, पुं, ( शीतस्य काल ।) हिम ऋतु । स तु अग्रहायणपौषमासद्वयकालात्मक । तत्पर्याय । शीतक २ । इति मेदिनी । हेमन्त ३ । इत्यमर ॥ सहा ४ । इति जटाधर । हैमन ५ । इति शब्दरत्नावली । यथा,—

"कूपोदक वटच्छाया श्यामा स्त्री इष्टकागृहम् ।
शीतकाले भवेदुष्ण उष्णकाले च शीतलम् ॥"

इति चाणक्यम् ॥

शीतकिरण, पुं, ( शीत शीतल किरण यस्य ।) चन्द्र । यथा —

"कान्ते कोऽयमुदेति शीतकिरणो जात कुतो वारिधौ
कस्ते सुन्दरि सोदर करमहो दत्ते मदीये जने ।
धन्या त्व युवती सती कुलवती भ्रातापि धन्य स्तव
इत्थ श्रीपरिहासकेलिकलया शम्भो हरि पातु व ॥"

इत्युद्भट ।

शीतकुम्भ, पुं करवीर । इति रत्नमाला ।

शीतकुम्भी, स्त्री, जलजवृक्षविशेष । शीउली छोप इति भाषा । यथा,—

"शीतली शीतकुम्भी च शुक्लपुष्पा जलोद्भवा ।"

इति रत्नमाला ।

शीतकृच्छ्र, पुं व्रतविशेष । यथा । "त्र्यह तु शीत क्षीरादि पीयते तदा शीतकृच्छ्र ।
'त्र्यह शीत पिबेत्तोय त्र्यह शीत पय पिबेत् ।
त्र्यह शीत घृत पीत्वा वायुभक्ष परत्र्यहम् ।

इति यमस्मरणात् ।" इति मिताक्षरा ।

शीतचार, स्त्री, ( शीत चारो यस्य ।) श्वेत दृदुघ्नम् । इति राजनिर्घण्ट ॥

शीतगन्ध स्त्री, ( शीतो गन्धो यस्य ।) श्वेत चन्दनम् । इति राजनिर्घण्ट ॥

शीतगु, पुं ( शीता गौ किरणो यस्य ।) चन्द्र । इति बोपदेव । (यथा साहित्यदर्पणे । १० ।
"शुनकहृदलो मलमहिशुर्भाशशीतगु ॥")

शीतचम्पक, पुं दर्पणम् । प्रदीप । इति मेदिनी शब्दरत्नावली ॥

शीतपर्णी स्त्री ( शीत पर्ण यस्या । ङीष् ।) अर्कपुष्पिका । इति रत्नमाला ॥ अर्कहुली इति भाषा ॥

शीतपल्लवा, स्त्री ( शीत पल्लव यस्या ।) भूमिजम्बू । इति रत्नमाला ॥

शीतपाकिनी, स्त्री, (शीते पाकोऽस्या अस्तीति । इनि ।) काकोली । इति शब्दमाला । महासमङ्गा । इति राजनिर्घण्ट ।

शीतपाकी, स्त्री ( शीते पाको यस्या । ङीष् ।) वाट्यालक । इति शब्दरत्नावली । काकोली । इति रत्नमाला । गुञ्जा । इति राजनिर्घण्ट ।

शीतपुष्प क्ली, ( शीत पुष्प यस्य ।) परिपेलम् । इति राजनिर्घण्ट ।

शीतपुष्प पुं (शीत पुष्प यस्य ।) शिरीषवृक्ष । इति राजनिर्घण्ट ।

शीतपुष्पक, क्ली, ( शीत पुष्पमिव । कन् ।) शैलेयम् । इति शब्दचन्द्रिका ॥

शीतपुष्पक, पुं ( शीत पुष्प यस्य । बहुव्रीहौ कन् ।) अर्कवृक्ष । इति राजनिर्घण्ट ।

शीतपुष्पा स्त्री, ( शीत पुष्प यस्या ।) अतिबला । इति राजनिर्घण्ट ।

शीतप्रभ, पुं ( शीता प्रभा यस्य ।) कर्पूर । इति राजनिर्घण्ट । शीतलप्रभायुक्ते त्रि ।

शीतप्रिय पुं ( शीत प्रियो यस्य ।) पर्पट । इति राजनिर्घण्ट ।

शीतफल, पुं ( शीत फल यस्य ।) उडुम्बर । पीलु । इति राजनिर्घण्ट ।

शीतबला स्त्री, महासमङ्गा । इति राजनिर्घण्ट ।

शीतभानु पुं (शीता भानुर्यस्य ।) चन्द्र । इति शब्दरत्नावली ।

शीतभीरु, स्त्री ( शीताद्भीरु ।) मल्लिका । इत्यमर । शीतभीते, त्रि ।

शीतमञ्जरी स्त्री, ( शीता मञ्जरी यस्या ।) शेफाली । इति राजनिर्घण्ट ।

शीतमयूख पुं (शीता मयूखा यस्य ।) चन्द्र । कर्पूर । इति मेदिनी ।

शीतमरीचि पुं ( शीता मरीचिर्यस्य ।) चन्द्र । कर्पूर । इति शब्दरत्नावली ।

शीतमूलक, क्ली ( शीत मूल यस्य । बहुव्रीहौ कन् ।) उशीरम् । इति राजनिर्घण्ट । शीतमूलयुक्ते त्रि ।

शीतरम्य पुं ( शीते रम्य ।) प्रदीप । इति जटाधर । शीतरमणीये, त्रि ।

शीतरश्मि पुं (शीता रश्मयो यस्य ।) चन्द्र । यथा

"इन्दु सुधाकरश्च शीतरश्मि ।"

इति ज्योतिस्तत्त्वम् ।

कर्पूरश्च । चन्द्रशब्द इति दर्शनात् ।

शीतल, क्ली (शीत लातीति । ला+क ।) पुष्पकासीसम् । शैलजम् । समपाठकम् । तत्र चन्दनम् । इति मेदिनी । पद्मकम् । मौक्तिकम् ।

इति राजनिर्घण्टः ॥ शैत्यम् । इति शब्दरत्नावली ॥ वीरणमूलम् । इति शब्दचन्द्रिका ॥

शीतलः, पुं, अश्मन्तपर्णी । इत्यमरः ॥ अर्हद्विशेषः । स तु चतुर्विंशतितीर्थङ्करमध्ये दशमतीर्थङ्करः । इति हेमचन्द्रः ॥ व्रतविशेषः । स तु मेषसंक्रान्त्यां कर्त्तव्यः । चन्द्रः । इति शब्दचन्द्रिका ॥ चम्पकः । कर्पूरभेदः । रालः । इति राजनिर्घण्टः ॥

शीतलः, त्रि, (शीतोऽस्यास्तीति । शीत + "सिध्मादिभ्यश्च ।" ५ । २ । ९७ । इति लच् ।) शीतगुणविशिष्टः । तत्पर्य्यायः । सुषीमः २ शिशिरः ३ जडः ४ तुषारः ५ शीतः ६ हिमः ७ । इत्यमरः ॥

शीतलकं, क्ली, सितोत्पलम् । इति राजनिर्घण्टः ॥

शीतलकः, पुं, मरुवकः । इति राजनिर्घण्टः ॥

शीतलच्छदः, पुं, (शीतलश्छदो यस्य ।) चम्पकः । इति राजनिर्घण्टः ॥ शीतलपत्रश्च ॥

शीतलजलं, क्ली, (शीतलं जलं यस्य ।) उत्पलम् । इति राजनिर्घण्टः ॥ हिमवारि च ॥

शीतलता, स्त्री, (शीतलस्य भावः । तल् ।) शीतलत्वम् । शीतलस्य भाव इत्यर्थे तद्भावे तालमिति संक्षिप्तसारसूत्रेण ताप्रत्ययनिष्पन्ना ॥

शीतलत्वं, क्ली, (शीतलस्य भावः । त्व ।) जडता । इति राजनिर्घण्टः ॥ शीतलता च ॥

शीतलप्रदः, पुं, (शीतलं प्रददाति । प्र + दा + कः ।) चन्दनम् । इति केचित् ॥ हिमदातरि, त्रि ॥

शीतलवातकः, पुं, (शीतलो वातो यस्य । कन् ।) अश्मन्तपर्णी । इति शब्दरत्नावली ॥ शीतलवायुयुक्ते, त्रि ॥

शीतला, स्त्री, (शीतल + स्त्रियां टाप् ।) शीतलीवृक्षः । यथा,—

"शीतला शीतली शीतकुम्भी पाण्डरपुष्पिका ।"

इति शब्दचन्द्रिका ॥

देवीविशेषः । सा च वसन्तविस्फोटकादेरधिष्ठात्री देवता । यथा,—

स्कन्द उवाच ।

"भगवन् देवदेवेश शीतलायाः स्तवं शुभम् ।
वक्तुमर्हस्यशेषेण विस्फोटकभयापहम् ॥
ईश्वर उवाच ।
नमामि शीतलां देवीं रासभस्थां दिगम्बरीम् ।
मार्ज्जनीकलशोपेतां शूर्पालङ्कृतमस्तकाम् ॥"

इति स्कन्दपुराणम् ॥

अस्या विवरणं मसूरिकाशब्दे द्रष्टव्यम् ॥ कुटुम्बिनी । आरामशीतला । वालुका । इति राजनिर्घण्टः ॥

शीतलाषष्ठी, स्त्री, (शीतला षष्ठी ।) माघशुक्ला षष्ठी । यथा,—

"प्रक्रत्वा द्वादशे मासि पूज्यापत्यविवृद्धये ।
सुते जाते तथा षष्ठ्यां षष्ठी द्वादशरूपिणी ॥
वैशाखे चान्दनी षष्ठी ज्यैष्ठे चारण्यसंज्ञिता ।
आषाढ़े कार्द्दमी ज्ञेया श्रावणे लुण्ठनी तथा ॥
भाद्रे चपेटी विख्याता दुर्गाख्याश्वयुजे तथा ।
नाड्याख्या कार्त्तिके मासि मार्गे मूलकरूपिणी ॥
पौषे मासान्नरूपा च शीतला तपसि स्मृता ।
गोरूपिणी फाल्गुने च चैत्रेऽशोका प्रकीर्त्तिता ॥"

इति स्कन्दपुराणम् ॥

शीतली, स्त्री, जलजन्तुविशेषः । शिउलीछोप् इति भाषा । तत्पर्य्यायः । शीतकुम्भी २ शुक्लपुष्पा ३ जलोद्भवा ४ कालानुसारिवा ५ । इति रत्नमाला ॥

शीतवल्कः, पुं, (शीतलो वल्को यस्य ।) उडुम्बरः । इति राजनिर्घण्टः ॥ शीतलवल्कले, त्रि ॥

शीतवीर्य्यकः, पुं, (शीतं वीर्य्यं यस्य । कन् ।) प्लक्षवृक्षः । इति राजनिर्घण्टः ॥ शीतलवीर्य्ययुक्ते, त्रि ॥

शीतशिवं, क्ली, (शीते शीतकाले शिवं मङ्गलप्रदम् ।) सैन्धवलवणम् । शैलेयनामगन्धद्रव्यम् । इत्यमरः ॥

शीतशिवः, पुं, (शीते शीतकाले शिवः शुभप्रदः ।) मधुरिका । इत्यमरः ॥ सक्तुफलावृक्षः । इति मेदिनी ॥

शीतशिवा, स्त्री, (शीते शिवा मङ्गलप्रदा ।) मिश्रेया । इति राजनिर्घण्टः ॥ शमीवृक्षः । इति रत्नमाला ॥

शीतशूकः, पुं (शीते शूको यस्य ।) यवः । इति केचित् ॥ शीतलशूकयुक्ते, त्रि ॥

शीतसहः, पुं, (शीतं सहते इति । सह + अच् ।) पीलुवृक्षः । इति जटाधरः ॥ शीतसहनीये, त्रि ॥

शीतसहा, स्त्री, (शीतसह + टाप् ।) नीलसिन्धुवारः । वासन्ती । इति राजनिर्घण्टः ॥

शीता, स्त्री, रामपत्नी । इति शब्दरत्नावली ॥ लाङ्गलपद्धतिः । इत्यमरटीकायां भरतः ॥ यथा,—

"शीता नभःसरिदिति लाङ्गलपद्धतौ च
शीता दशाननरिपोः सहधर्म्मिणी च ।
शीतं स्मृतं हिमगुणे च तदन्विते च
शीतोऽलसे च बहुवारतरौ च दृष्टः ॥"

इति तालव्यादौ धरणिः ॥

अतिबला । कुटुम्बिनी । दूर्व्वा । शिल्पिकाख्यम् । इति राजनिर्घण्टः ॥

शीतांशुः, पुं, (शीताः अंशवो यस्य ।) कर्पूरः । इति राजनिर्घण्टः ॥ चन्द्रः । यथा,—

"शीतांशुर्मिष्टमन्नं जनयति सततं जन्मराशौ नराणाम् ।"

इति ज्योतिस्तत्त्वम् ॥

शीतांशुतैलं, क्ली, (शीतांशोः कर्पूरस्य तैलम् ।) कर्पूरतैलम् । इति राजनिर्घण्टः ॥

शीताङ्गी, स्त्री, (शीतं अङ्गमस्याः । ङीप् ।) हंसपदीवृक्षः । इति राजनिर्घण्टः ॥ शीताङ्गे, त्रि ॥ (यथा, सुश्रुते । २ । ८ ।

"प्रविश्यति शिरो यातु शीताङ्गी निरपत्रपा ।
नीलोद्धतशिरा हन्ति सा गर्भं स च तां तथा ॥")

शीतादः, पुं, (शीतमादत्ते इति । आ + दा + कः ।) दन्तरोगविशेषः । तस्य निदानं दन्तशब्दे द्रष्टव्यम् । तदौषधं यथा,—

"शीतादे हृतरक्ते तु तोयनागरसर्षपान् ।
निष्क्वाथ्य त्रिफलाञ्चापि कुर्य्याद्गण्डूषधारणम् ॥
कासीसलोध्रकृष्णा मनःशिला सप्रियङ्गुतेजोह्वा ।
एतच्चूर्णं मधुयुक् शीतादे पूतिमांसहरम् ॥"

तेजोह्वा तेजवला ।

"तैलं घृतं वा वातघ्नं शीतादे संप्रशस्यते ।"

इति भावप्रकाशः ॥

शीताद्रिः, पुं, (शीतजनकोऽद्रिः । शीतप्रधानोऽद्रिरिति वा ।) हिमालयपर्व्वतः । इति केचित् ॥

शीतावला, स्त्री, महासमङ्गा । इति राजनिर्घण्टः ॥

शीतार्त्तः, त्रि, (शीतेन ऋतः पीड़ितः ।) शीतेन पीड़ितः । तत्पर्य्यायः । शीतालुः २ । इति जटाधरः ॥ (यथा, शिवरात्रिव्रतकथायाम् ।

"शीतार्त्तश्च क्षुधार्त्तश्च कम्पान्वितकलेवरः ।
जजागार तदा रात्रौ क्षुतो नीहारवारिणा ॥")

शीतालुः, त्रि, (शीतं न सहते इति । शीत + "शीतोष्णतृप्रेभ्यस्तन्न सहते ।" ५ । २ । १२२ । इत्यस्य वार्त्तिकोक्त्या आलुच् ।) शीतार्त्तः । इति जटाधरः ॥

शीताश्मा, [न्] पुं, (शीतः शीतलोऽश्मा ।) चन्द्रकान्तमणिः । इति राजनिर्घण्टः ॥ शीतलप्रस्तरश्च ॥

शीतीभावः, पुं, (शीत + भू + घञ् । अभूततद्भावे च्विः ।) मोक्षः । इति त्रिकाण्डशेषः ॥ शीतलत्वञ्च ॥

शीतोत्तमं, क्ली, (शीतेषु वस्तुषु मध्ये उत्तमम् ।) जलम् । इति शब्दचन्द्रिका ॥

शीर्य्यं, त्रि, सौख्यम् । श्लक्ष्णम् । इत्यमरटीकायां रमानाथः ॥ शीतयोगश्च ॥

शीत्कारः, पुं, (शीदिति शब्दस्य कारः करणम् ।) वरस्त्रीणां रतिकालध्वनिः । यथा,—

"शीत्कारो रतनारीणां सुरते वरयोषिताम् ।"

इति जटाधरः ॥

(शीत्कृतिमात्रे । यथा, कथासरित्सागरे । २ । २ ।

"सन्ध्यानृत्योत्सवे ताराः करेणोद्धूय विघ्नजित् ।
शीत्कारशीकरैरन्याः कल्पयन्निव पातु वः ॥")

शीत्कृतं, क्ली, (शीदिति शब्दस्य कृतं करणम् ।) शीत्कारः । इति धरणिः ॥

शीधुः, पुं, क्ली, (शेतेऽनेनेति । शी + "शीङो धुक्लग्वलञ्वालनः ।" उणा० ४ । ३८ । इति धुक् ।) पक्वेक्षुरसकृतमद्यम् । इत्यमरभरतौ ॥

शीधुपः, त्रि, (शीधु पातीति । पा + कः ।) शीधुपानकर्त्ता । इति शाब्दिकाः ॥

शीधुगन्धः, पुं, (शीधोर्मद्यविशेषस्य गन्धो यत्र ।) वकुलवृक्षः । इति त्रिकाण्डशेषः ॥ मद्यगन्धश्च ॥

शीनं, त्रि, (श्यैङ गतौ + क्तः । "द्रवमूर्त्तिस्पर्शयोः श्यः ।" ६ । १ । २४ । इति सम्प्रसारणम् । "श्योऽस्पर्शे ।" ८ । २ । ४७ । इति नः ।) घनीभूतघृतादि । इति मुग्धबोधव्याकरणम् ॥

शीन, पुं (श्यै+क्त।) मूर्खः। अजगरः। इति मेदिनी॥

शीपालिका स्त्री, शैवालिका। इत्यमरटीकायां भरतः॥

शीभ ऋ ङ कत्थने। इति कविकल्पद्रुमः। (भ्वा०-आत्म० सक० सेट्।) ऋ अशिशीभत्। ङ, शीभते। कत्थनं प्रशंसा। इति दुर्गादासः॥

शीभर, पुं, शीकरः। इति शब्दरत्नावली॥

शीभ्य, पुं, (शीभ्यते प्रशस्यते इति। शीभ+ण्यत्।) शिवः। वृषः। इति कश्चित्॥ (त्रि, श्लाघ्याभिभवः। जलप्रवाहभवः। शिघ्रभवः। यथा वाजसनेयसंहितायाम्। १६। ३१।
"शीभ्याय च नम ऊर्म्याय।"
"शीभृ कत्थने शीभते कत्थते इति। शीभ श्लाघावी पराक्रमः। तत्र भवः शीभ्यः। शीभो जलप्रवाहो वा शीभं शिघ्रं वा तत्र भवाय नमः। इति तट्टीकायां महीधरः॥)

शीरः, पुं (शेते इति। शी+ "स्फायितञ्चीति।" उणा० २। १३। इति रक्।) अजगरसर्पः। इति शब्दरत्नावली॥

शारी, [न्] पुं करिम्भः। इति राजनिर्घण्टः॥ करिम्भे इति वा पाठः॥

शीर्णं क्ली, (शॄ+क्त।) स्थौणेयकम्। इति भावप्रकाशः॥

शीर्णं, त्रि, (शॄ+क्त।) कृशः। विशीर्णः। इति मेदिनी॥ (यथा, आर्य्यासप्तशत्याम्। ५६७।
"शीर्णप्रासादोपरि निर्मोऽशुरिव कलरव कणति॥")

शीर्णमाला, स्त्री, पृश्निपर्णी। इति शब्दचन्द्रिका॥ विशीर्णमालापि॥

शीर्णपत्र, पुं (शीर्णं पत्रमस्य।) कर्णिकार वृक्षः। इति शब्दचन्द्रिका॥ पट्टिकालोध्रः। निम्बः। इति राजनिर्घण्टः॥ विशीर्णपर्णी, स्त्री॥

शीर्णपर्ण, पुं (शीर्णं पर्णमस्य।) निम्बवृक्षः। इति राजनिर्घण्टः॥ विशीर्णपर्णी, स्त्री॥

शीर्णपाद पुं (शीर्णौ पादौ यस्य। विनाशे शापादेवास्य तथात्वम्।) यमः। इति त्रिकाण्डशेषः॥ शनैश्चरश्च॥

शीर्णपुष्पिका स्त्री, (शीर्णं पुष्पं यस्याः। शीर्ण पुष्पी। ततः स्वार्थे कन्।) शताह्वपुष्पी। इति शब्दचन्द्रिका॥

शीर्णवृन्त, क्ली, (शीर्णं वृन्तं यस्य।) त्रपुषोलम्। इति शब्दचन्द्रिका। तरमुज इति भाषा। तत्पर्य्यायः। सुवर्त्ताल २। इति रत्नमाला॥ सुखाश ३। इति केचित्॥ अस्य गुणाः। कफवातरक्तपित्तकारित्वम्। धारत्वम्। मधुरत्वम्। आमाढ़ोरक्तार्तिक्लम्। लघु पाकित्वञ्च। इति राजवल्लभः॥

शीर्णाङ्घ्रि, पुं (शीर्णौ अङ्घ्री यस्य। विनाशे शापादेवास्य तथात्वम्।) यमः। इति हेमचन्द्रः। शनैश्चरे, त्रि॥

शीर्ष्णि त्रि (शृणातीति। शॄ+"शॄस्वृस्निहीति।" उणा० ४। ५४। इति क्विन्।) अपकारकः। हिंसकः। इति सिद्धान्तकौमुदी॥

शीर्ष, क्ली, मस्तकम्। इत्यमरः॥ (यथा, हरिवंशे। १७८। ६।
"शीर्षाणां वै सहस्रन्तु विहितं शार्ङ्गधन्वना। सहस्रञ्चैव कायानां वहन् सङ्ख्यंस्तदा॥")
कृष्णागुरुः। इति राजनिर्घण्टः॥

शीर्षक, क्ली, (शीर्षं कं सुखमस्मात्।) शिरो रक्षकसन्नाहः। टोप इति भाषा। तत्पर्य्यायः। शीर्षण्यम् २ शिरस्त्रम् ३। इत्यमरः॥ शिरोऽस्थि। इति राजनिर्घण्टः॥ जयपराजयपत्रम्। यथा, याज्ञवल्क्यः।
"तुलाग्न्यापो विषं कोषो दिव्यानीह विशुद्धये। महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि॥"
विशुद्धये सन्दिग्धार्थस्य सन्देहनिवृत्तये। महाभियोगेषु महापातकादिगुरुतराभियोगेषु। शीर्षकस्थे शीर्षकं प्रधानं शिरो व्यवहारस्य चतुष्पाद जयपराजयलक्षणं। तेन दण्डो लभ्यते तत्र तिष्ठतीति शीर्षकस्थः तत्संयुक्तस्य भागोऽर्थः। इति दिव्यतत्त्वम्॥

शीर्षक, पुं (शीर्षमिव। इवार्थे कन्।) राहुग्रहः। इति शब्दरत्नावली॥ मस्तके, क्ली॥

शीर्षघाती, [न्] त्रि, (शीर्षं हन्तीति। हन+"कुमारशीर्षयोर्णिनिः।" ३। २। ५१। इति णिनि।) मस्तकच्छेदकः। शीर्षशब्दपूर्व्वक हनधातोः कर्म्मभ्यां कुमारशीर्षाभ्यां हन इति अभिप्रसारसूत्रेण णिनुप्रत्ययेन निष्पन्नः॥

शीर्षच्छेदिक, त्रि, (शीर्षच्छेदमर्हतीति। शीर्षच्छेद+ठक्।) वधार्हः। यथा,—
"स शीर्षच्छेदिकः शीर्षच्छेद्यो यो वधमर्हति।"
इति हेमचन्द्रः॥

शीर्षच्छेद्य, त्रि (शीर्षच्छेदं नित्यमर्हतीति। "शीर्षच्छेदात् यच्।" ५। १। ६५। इति यत्।) मस्तकच्छेदयोग्यः। वध्यः। इत्यमरः॥ (यथा उत्तरचरिते २ अङ्के।
"शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः। शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम्॥")

शीर्षण्य, क्ली (शिरसे हितम्। शिरस्+"शरीरावयवात् यत्।" ५। १। ६। इति यत्। "ये च तद्धिते।" ६। १। ६१। इति शिरसः शीर्षन्नादेशः।) शीर्षकम्। शिरस्त्रम्। इत्यमरः॥ चौकि शिरोरक्षकसन्नाहे टोप इति ख्यातः। शीर्षे कं सुखमस्मात् शीर्षकम्। शीर्षमारोहति शीर्षण्यं ढये कादिति यः। शिरस्त्रायते शिरस्त्रं च। इति भरतः॥

शीर्षण्य, पुं (शिरसि भवः। शिरस्+"शरीरावयवाच्च।" ४। ३। ५५। इति यत्। "वा केशेषु।" ६। १। ६१। इत्यस्य वार्त्तिकोक्त्या शीर्षन्नादेशः।) विशदकचः। तत्पर्य्यायः। शिरस्यः २। इत्यमरः॥ द्वे स्वतः क्षालादिना वा निर्म्मले अन्योन्यासंपृक्ते कचे। शीर्षे भवं शीर्षण्यं ढये कादिति यः। पादस्मोऽश्वादिना शीर्षस्य शीर्षन्नादेशः। इति भरतः॥ (शिरसि निवद्धे, त्रि। यथा, ऋग्वेदे। १। १६२। ८।
"शीर्षण्या रशना रज्जुरस्य।"
"शीर्षण्या शिरसि बद्धा रशना मेखला इव।"
इति तद्भाष्ये सायनः॥ श्रेष्ठे च त्रि। यथा, भागवते। ५। ४। १५।
"यद्यच्छीर्षण्याचरितं तत्तदनुवर्त्तते लोकः॥"
"शीर्षण्य श्रेष्ठेनाचरितम्।" इति तट्टीका॥)

शीर्षरक्ष, क्ली (शीर्षं मस्तकं रक्षतीति। रक्ष+अण्।) शिरस्त्राणम्। यथा,—
"शिरस्त्रं शीर्षरक्षञ्च शीर्षण्यं शीर्षकञ्च तत्।"
इति हारावली। ७३॥

शीर्षोदय, पुं, (शीर्षे शीर्षदेशे उदयो यस्य।) मिथुनसिंहकन्यातुलावृश्चिककुम्भमीनलग्नरूपः। यथा —
"अजगोमिथुनमथ कर्किधन्विमृगास्तथा। निशाख्याः स्युस्ताश्चैव पृष्ठाद्याश्च दिवा स्मृताः॥
निशाख्या विमिथुना स्युर्ना पृष्ठोऽन्यास्तथा। शेषाः शीर्षोदया ज्ञेया मीनश्चोभयसंज्ञकः॥"
इति ज्योतिस्तत्त्वम्॥

शील, ञि समाधौ। इति कविकल्पद्रुमः॥ (भ्वा० पर० सक० सेट्।) ञि शीलितोऽस्ति। समाधि चित्तशुभावन प्रवृत्तिर्वा। य शीलति सदा धर्म्ममिति हलायुधः। इति दुर्गादासः॥

शील ग क अभ्यासे। अतिशायने। इति कविकल्पद्रुमः॥ (अदन्त चुरा० पर० सक० सेट्।) अतिशायनं अतिशयकरणम्। तालव्यादिः। अशिशीलत्। उपधारणे इत्यन्ये। शीलयं नीलनिचोलमिति जयदेवः। इति दुर्गादासः॥

शील, क्ली, (शीलयतीति। शीलत क अतिशायने+अच्। यद्वा, शीङ् स्वप्ने+"शीङो धुक्लक्वलञ्वालनः।" उणा० ४। ३८। इति लक्। अर्द्धर्च्चादित्वात् पुंलिङ्गमपि।) स्वभावः। सद्वृत्तम्। इत्यमरमेदिन्यौ॥ (यथा, रामायणे। २। ३९। २४।
"साध्वीनान्तु स्थितानान्तु शीले सत्ये श्रुते स्थिते। स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते॥")
ब्रह्मण्यतादित्रयोदशविधधर्म्ममूलम्। रागद्वेषवर्ज्जनम्। यथा,—
"वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥"
इति मानवे २ अध्याये ६॥
शील ब्रह्मण्यतादिरूपम्। तदाह हारीतः। ब्रह्मण्यता देवपितृभक्तता सौम्यता अपरोपतापिता अनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता कारुण्यं प्रशान्तिश्चेति त्रयोदशविधं शीलम्। गोविन्दराजस्तु। शीलं रागद्वेषपरित्याग इत्याह। इति तट्टीकायां कुल्लूकभट्टः॥

शीलः, पुं, ( शील अतिशायने+अच् । ) अज-
गरसर्पः । इति शब्दरत्नावली ॥ चरित्रम् ।
इत्यमरटीकायां नयनानन्दः ॥

शीलनं, क्ली, ( शील+ल्युट् । ) अभ्यासनम् ।
( यथा, महाभारते । १२ । ३२१ । ४३ ।
"पुरा हका भयङ्करा मनुष्यदेहगोचराः ।
अभिद्रवन्ति सर्व्वतो यतस्व पुण्यशीलने ॥")
अतिशायनम् । उपधारणम् । सेवानुभावनम् ।
प्रवर्त्तनम् । इति शीलधातोरनट्प्रत्ययेन निष्प-
न्नम् ॥ पाठनिश्चयः । यथा,—
"भविनो गुणनी शीलनं स्तनम् ।"
इति ब्रह्मवर्गे त्रिकाण्डशेषः ॥

शीलवान्, [त्] त्रि, ( शीलमस्यास्तीति । शील+
मतुप् । मस्य वः । ) शीलविशिष्टः । सत्-
स्वभावः । यथा,—
"पथ्याशिनां शीलवतां नराणां
सद्वृत्तभाजां विजितेन्द्रियाणाम् ।
एवंविधानामिदमायुरत्र
चिन्त्यं सदा वृद्धमुनिप्रवादः ॥"
इति मलमासतत्त्वम् ॥
सद्वृत्तः । इति शीलशब्दार्थदर्शनात् ॥

शीला, स्त्री, (शीलमस्या अस्तीति । शील+अच् ।
टाप् । ) कौण्डिन्यमुनिपत्नी । यथा,—
"मध्याह्ने भोज्यवेलायां समुत्तीर्य्य सरित्तटे ।
ददर्श शीला सा स्त्रीणां समूहं रक्तवास-
साम् ॥"
इति तिथ्यादितत्त्वम् ॥

शीलितं, क्ली, ( शील+क्तः । ) चौर्य्यम् । इति
त्रिकाण्डशेषः ॥ अभ्यस्ते, त्रि ॥

शीवलं, क्ली, (शी+बाहुलकात् वलः गुणाभावश्च ।)
शैवेयम् । शैवालम् । इति मेदिनी ॥

शीवा, [न्] पुं, ( शेते इति । शी+"शीङ्क्रुशि-
रुहीति ।" उणा० ४ । ११३ । इति क्वनिप् । )
अजगरसर्पः । इति सिद्धान्तकौमुदी ॥

शुक, सर्पे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-
सक०-सेट् । ) शोकति । सर्पो गमनम् । इति
दुर्गादासः ॥

शुक्, [च्] स्त्री, (शुच् शोके+क्विप् ।) शोकः ।
इत्यमरः ॥ ( यथा, रघुः । १२ । ७५ ।
"कामं जीवति मे नाथः इति सा विजहौ
शुचम् ।
प्राङ्ज्ञात्वा सत्यमस्यान्तं जीवितास्मीति
लज्जिता ॥")

शुकं, क्ली, ( शोभते इति । शुभ दीप्तौ+"शुक-
वल्कोल्काः ।" उणा० ३ । ४२ । इति कप्रत्य-
येन निपातनात् साधुः । ) ग्रन्थिपर्णम् । इत्य-
मरः ॥ वस्त्रम् । वस्त्राञ्चलम् । शिरस्त्राणम् ।
इति हेमचन्द्रः ॥ शोणकवृक्षः । इति विश्वः ॥

शुकः, पुं, (शुभ दीप्तौ+कप्रत्ययेन साधुः । उणा०
३ । ४२ । ) पक्षिविशेषः । शुया इति वङ्ग-
भाषा । सुग्गा इति हिन्दी भाषा । तत्पर्य्यायः ।
कीरः २ । इत्यमरः ॥ वक्रतुण्डः ३ मेधावी ४
दाडिमप्रियः ५ रक्ततुण्डः ६ वक्रचञ्चुः ७ चिमिः
८ चिमिकः ९ । इति शब्दरत्नावली ॥ सूकः
१० प्रियदर्शनः ११ । इति जटाधरः ॥ मञ्जु-
पाठकः १२ । ( यथा, आर्य्यासप्तशत्याम् ।३८१।
"प्रकटयति रागमधिकं लपनमिदं वक्रिमाण-
मावहति ।
शीलयति च प्रतिपदं दूत शुकस्येव दयितस्य ॥")
अस्य मांसगुणाः । परमहृद्यत्वम् । विपाके
गुरुत्वम् । शीतलत्वम् । कासश्वासक्षयहरत्वम् ।
संग्राहित्वम् । लघुत्वम् । दीपनत्वञ्च । इति
राजनिर्घण्टः ॥ * ॥ तस्य शुभसूचकत्वं यथा,
"वामः पठन् राजशुकः प्रयाणे
शुभं भवेद्दक्षिणतः प्रवेशे ।
वनेचराः काष्ठशुकाः प्रयातुः
स्युः सिद्धिदाः संमुखमापतन्तः ॥"
इति वसन्तराजशाकुने ८ वर्गः ॥ * ॥
व्यासपुत्त्रः । स च परीक्षिताय श्रीमद्भागवतं
श्रावयामास । तस्योत्पत्त्यादिर्यथा । हरिवंशे
वायवीये च ।
"पराशरकुलोत्पन्नः शुको नाम महायशाः ।
व्यासादरण्यां सम्भूतो विधूमोऽग्निरिव ज्वलन् ॥
स तस्यां पितृकन्यायां पीवर्य्यां जनयिष्यति ।
छायां गौरं प्रभुं शम्भुं तथा भूरिश्रुतं जयम् ॥
कन्यां कीर्त्तिमतीं षष्ठीं योगिनीं योगमातरम् ।
ब्रह्मदत्तस्य जननीं महिषीमनुहस्य च ॥"
इति विष्णुपुराणे ४ अंशे १९ अध्यायटीकायां
श्रीधरस्वामी ॥ वह्निपुराणे प्रजापतिसर्गनामा-
ध्यायेऽप्येवम् ॥ * ॥ अपि च ।
"द्वैपायनाच्छुको जज्ञे भगवानेव शङ्करः ।
अंशेनैवावतीर्य्योर्व्यां संप्राप परमं पदम् ॥
शुकस्याप्यभवन् पुत्त्राः पञ्चात्यन्ततपस्विनः ।
भूरिश्रवाः प्रभुः शम्भुः कृष्णो गौरश्च पञ्चमः ।
कन्या कीर्त्तिमती चैव योगमाता धृतव्रता ॥"
इति कौर्म्मे १० अध्यायः ॥ * ॥
(अस्यान्यविधोत्पत्तिविवरणं यथा, देवीभाग-
वते । १ । १४ । १—२३ ।
श्रीसूत उवाच ।
"दृष्ट्वा तामसितापाङ्गीं व्यासश्चिन्तापरोऽभवत् ।
किं करोमि न मे योग्या देवकन्येयमप्सराः ॥
एवं चिन्तयमानन्तु दृष्ट्वा व्यासं तदाप्सराः ।
भयभीता हि सञ्जाता शापं मां विसृजेदयम् ॥
सा कृत्वाथ शुकीरूपं निर्गता भयविह्वला ।
कृष्णस्तु विस्मयं प्राप्तो विहङ्गीं तां विलोकयन् ॥
कामस्तु देहे व्यासस्य दर्शनादेव सङ्गतः ।
मनोऽतिविस्मितं जातं सर्व्वगात्रेषु विसृतः ॥
स तु धैर्य्येण महता निगृह्णन् मानसं मुनिः ।
न शशाक नियन्तुञ्च स व्यासः प्रसृतं मनः ॥
बहुशो गृह्यमाणञ्च घृताच्या मोहितं मनः ।
भावित्वाच्चैव विसृतं व्यासस्यामिततेजसः ॥
मन्थनं कुर्व्वतस्तस्य मुनेरग्निचिकीर्षया ।
अरण्यामेव सहसा तस्य शुक्रमथापतत् ॥
सोऽविचिन्त्य तथा पातं ममन्थारणिमेव च ।
तस्माच्छुकः समुद्भूतो व्यासाकृतिमनोहरः ।
विस्मयं जनयन् बालः सञ्जातस्तदरणीजः ।
यथाध्वरे समिद्धोऽग्निर्भाति हव्येन दीप्तिमान् ॥
व्यासस्तु सुतमालोक्य विस्मयं परमङ्गतः ।
किमेतदिति सञ्चिन्त्य वरदानाच्छिवस्य वै ॥
तेजोरूपी शुको जातोऽप्यरणीगर्भसम्भवः ।
द्वितीयोऽग्निरिवात्यर्थं दीप्यमानः स्वतेजसा ॥
विलोकयामास तदा व्यासस्तु मुदितं सुतम् ।
दिव्येन तेजसा युक्तं गार्हपत्यमिवापरम् ॥
गङ्गान्तः स्नापयामास समागत्य गिरेस्तदा ।
पुष्पवृष्टिस्तु खाज्जाता शिशोरुपरि तापस ॥
जातकर्म्मादिकं चक्रे व्यासस्तस्य महात्मनः ।
देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः ॥
जगुर्गन्धर्व्वपतयो मुदितास्ते दिदृक्षवः ।
विश्वावसुर्नारदश्च तुम्बुरुः शुकसम्भवे ॥
तुष्टुवुर्मुदिताः सर्व्वे देवा विद्याधरास्तथा ।
दृष्ट्वा व्याससुतं दिव्यमरणीगर्भसम्भवम् ॥
अन्तरीक्षात् पपातोर्व्यां दण्डः कृष्णाजिनं शुभम् ।
कमण्डलुस्तथा दिव्यः शुकस्यार्थे द्विजोत्तमाः ॥
सद्यः स ववृधे बालो जातमात्रोऽतिदीप्तिमान् ।
तस्योपनयनं चक्रे व्यासो विद्याविधानवित् ॥
उत्पन्नमात्रं तं वेदाः सरहस्याः ससंग्रहाः ।
उपतस्थुर्महात्मानं यथास्य पितरं तथा ॥
यतो दृष्टं शुकीरूपं घृताच्या सम्भवे तदा ।
शुकेति नाम पुत्त्रस्य चकार मुनिसत्तमाः ॥
बृहस्पतिमुपाध्यायं कृत्वा व्याससुतस्तदा ।
व्रतानि ब्रह्मचर्य्यस्य चकार विधिपूर्व्वकम् ॥
सोऽधीत्य निखिलान् वेदान् सरहस्यान् ससं-
ग्रहान् ।
धर्म्मशास्त्राणि सर्व्वाणि कृत्वा गुरुकुले शुकः ।
गुरवे दक्षिणां दत्त्वा समावृत्तो मुनिस्तदा ।
आजगाम पितुः पार्श्वे कृष्णद्वैपायनस्य च ॥"
अस्य दारपरिग्रहादिवृत्तान्तस्तु तत्रैव विशे-
षतो द्रष्टव्यः ॥ * ॥ ) स च श्रीराधायाः क्रीडार्थं
वृन्दावने उपनन्दस्य कन्या अभूत् । इति पाद्मे
पातालखण्डम् ॥ * ॥ रावणमन्त्री । शिरीष-
वृक्षः । इति मेदिनी ॥ वृक्षविशेषः । इति रत्न-
माला ॥ शेयालकाँटा इति भाषा ॥

शुकच्छदं, क्ली, ( शुकवत् छदो यस्य । ) ग्रन्थि-
पर्णम् । इति जटाधरः ॥

शुकजिह्वा, स्त्री, ( शुकस्य जिह्वेव फलं यस्याः । )
वृक्षविशेषः । सुयाठोँटी इति भाषा ॥ यथा,
"शुकाख्या शुकनामा च शुकजिह्वा शुकाङ्गना ।"
इति रत्नमाला ॥

शुकतरुः, पुं, ( शुकवत् तरुः । शुकवर्णपर्ण-
विशिष्टत्वादस्य तथात्वम् । शुकप्रियस्तरुर्वा । )
शिरीषवृक्षः । इति रत्नमाला ॥

शुकद्रुमः, पुं, ( शुकवत् द्रुमः । तद्वर्णपर्णविशि-
ष्टत्वात् तथात्वम् । यद्वा, शुकप्रियो द्रुमः । )
शिरीषवृक्षः । इति शब्दमाला ॥

शुकनामा, स्त्री, ( शुकस्य नाम नाम यस्याः । )
शुकजिह्वा । इति रत्नमाला ॥ शुकसंज्ञके, त्रि ॥

शुकनाशन, पुं (शुकं नाशयतीति । नश+णिच्+ल्यु ।) द्रुमः । इति राजनिर्घण्टः ॥ शुकनाशके, त्रि ॥

शुकनास, पुं (शुकस्य नासेव फलं यस्य ।) श्योणाकवृक्षः । इत्यमरः ॥ शुकवन्नासायुक्ते, त्रि ॥

शुकपिच्छ, क्ली, शुकशिम्बी । इति शब्दरत्नावली ॥

शुकपुच्छ, पुं (शुकस्य पुच्छ इव ।) गन्धकः । इति हेमचन्द्रः ॥ शुकस्य लाङ्गूलञ्च ॥

शुकपुच्छक, क्ली (शुकस्य पुच्छ इव । कन् ।) स्थौणेयम् । इति राजनिर्घण्टः ॥ शुकवत्पुच्छयुक्ते, त्रि ॥

शुकपुष्प, क्ली (शुकप्रियं पुष्पमस्य ।) स्थौणेयम् । इति भावप्रकाशः ॥

शुकपुष्प, पुं, (शुकप्रियं पुष्पमस्य ।) शिरीषवृक्षः । इति राजनिर्घण्टः ॥

शुकप्रिय पुं, (शुकस्य प्रियः ।) शिरीषवृक्षः । इति भावप्रकाशः ॥ शुकवल्लभे त्रि ॥

शुकप्रिया, स्त्री (शुकस्य प्रिया ।) जम्बूः । इति राजनिर्घण्टः ॥

शुकफल, पुं (शुक इव फलमस्य । तद्वर्णफलवत्त्वात् तथात्वम् ।) अर्कवृक्षः । इति राजनिर्घण्टः ॥

शुकबर्ह, क्ली, (शुकस्य बर्हमिव ।) गन्धद्रव्यविशेषः । इति शब्दरत्नावली ॥ गाँठियाला इति भाषा ॥

शुकम् व्य शीघ्रम् । इति कश्चित् ॥

शुकवल्लभ, पुं, (शुकस्य वल्लभः प्रियः ।) दाडिमः । इति राजनिर्घण्टः ॥ शुकप्रिये त्रि ॥

शुकवाह पुं, (शुको वाहो वाहनं यस्य ।) कामदेवः । इति केचित् । शुकपक्षिवाहके, त्रि ॥

शुकशिम्बा, स्त्री कपिकच्छुः । इति शब्दरत्नावली ॥

शुकशिम्बि, स्त्री, कपिकच्छुः । इति शब्दरत्नावली ॥

शुकाख्या, स्त्री, (शुकस्य आख्या आख्या यस्याः ।) वृक्षविशेषः । सुयाठोँटी इति भाषा । तत्पर्यायः । शुकनासा २ शुकशिम्बा ३ शुकानना ४ । इति रत्नमाला ॥

शुकादन, पुं (शुकैः अद्यतेऽसौ इति । अद्+कर्म्मणि ल्युट् ।) दाडिमः । इति शब्दचन्द्रिका ॥ शुकस्यादनीयद्रव्यमात्रे, त्रि ॥

शुकानना, स्त्री, (शुकस्याननमिव फलं यस्याः ।) शुकाख्यावृक्षः । इति रत्नमाला ॥ शुकतुल्यमुखे त्रि ॥

शुकी, स्त्री, (शुक+ङीष् ।) कश्यपपत्नी । यथा,

"शुकी श्येनी च भासी च सुग्रीवा शुचि गृध्रिका ।"

अत्र शुचिभार्य्यका इत्यपि पाठः ।

"शुकी शुकानजनयदुलूकी प्रत्युलूककान् ।"

इति गारुडे ६ अध्यायः ॥

शुकपक्षिणी च ॥

शुकोदर, क्ली (शुकस्योदरमिव ।) तालीशपत्रम् । इति राजनिर्घण्टः । कीरजठरञ्च ॥

शुक्त, क्ली, (शुच क्लेदे+क्त ।) मांसम् । इति शब्दचन्द्रिका ॥ काञ्जिकम् । इति हारावली ॥ द्रवद्रव्यविशेषः । यथा,—

"कन्दमूलफलादीनि सस्नेहलवणानि च ।
यत्र द्रवेऽभिषूयन्ते तच्छुक्तमभिधीयते ॥"

अस्य गुणाः ।

"शुक्तं तीक्ष्णोष्णमत्यर्थं पित्तलं कटुकं लघु ।
रूक्षं तम्पुदरानाहशोषार्शोविषघ्नकृत् ॥"

इति राजनिर्घण्टः ॥ * ॥

शुक्तं यन्मधुरं कालवशादम्लतां गतम् । इति प्रायश्चित्तविवेकः ॥ तस्य भक्षणनिषेधो यथा । यमः ।

"अपूपाश्च करम्भाश्च धाना वटकसक्तवः ।
शाकं मांसमपूपञ्च सूपं कृशरमेव च ॥
यवागूं पायसञ्चैव यच्चान्यत् स्नेहसम्भवम् ।
सर्व्वं पर्य्युषितं भक्ष्यं शुक्तञ्च परिवर्ज्जयेत् ॥"

तत्प्रतिप्रसवो यथा । मनुः ।

"दधिभक्ष्यञ्च शुक्तेषु सर्व्वञ्च दधिसम्भवम् ॥"

इति तिथ्यादितत्त्वम् ॥

(यथा च मनुः । २ । १७७ ।

"वर्ज्जयेन्मधुमांसञ्च गन्धं माल्यं रसान् स्त्रियः ।
शुक्तानि यानि सर्व्वाणि प्राणिनाञ्चैव हिंसनम् ॥"

'यानि स्वभावतो मधुरादिरसानि कालवशेन उदकवासादिना चाम्लवन्ति तानि शुक्तानि ।'

इति तट्टीकायां कुल्लूकभट्टः ॥)

शुक्त, त्रि, (शुच+क्त ।) निष्ठुरम् । इति मेदिनी ॥ पूतम् । अम्लम् । इति विश्वः ॥ श्लिष्टम् । निर्ज्जनम् । इति शब्दरत्नावली ॥

शुक्ता स्त्री, (शुक्त+स्त्रियां टाप् ।) शुक्तिका । इति शब्दरत्नावली ॥

शुक्ति, स्त्री (शुच+क्तिन् ।) जलजन्तुविशेषः । झिनुक इति भाषा । तत्पर्य्यायः । मुक्तास्फोटः २ । इत्यमरः ॥ शुक्तिका ३ । इति जटाधरः ॥ शुक्तिपुटः ४ महाशुक्तिः ५ मौक्तिकम् ६ मौक्तिकप्रसवा ७ मौक्तिकशुक्तिः ८ मुक्तामाता ९ । अस्या गुणाः । कटुत्वम् । स्निग्धत्वम् । श्वासहृद्रोगहारित्वम् । शूलप्रशमनत्वम् । रुच्यत्वम् । मधुरत्वम् । दीपनत्वम् । इति राजनिर्घण्टः ॥ कपालखण्डम् । शङ्खः । नखनामगन्धद्रव्यम् । नखी । अश्वावर्त्तः । अर्शोरोगः । इति मेदिनी ॥ चक्षूरोगविशेषः । इति हेमचन्द्रः ॥ तद्विवरणं यथा,—

'प्रस्तारिशुक्लक्षतजाधिमांस
स्नाय्वर्म्मसंज्ञाः खलु पञ्च रोगाः ।
स्याच्छुक्तिका चार्ज्जुनपिष्टकाख्या
जालं शिराणां पिडकाश्च तासाम् ॥
रोगा बलासग्रथितेन सार्द्धम्
एकादशोक्ताः खलु शुक्लभागे ॥"

शुक्तिमाह ।

'श्यावाः स्युः पिशितनिभाश्च बिन्दवोऽयं
शुक्लाभाः शितिनिचिता स शुक्तिसंज्ञः ।"

श्यावा इत्यादि वर्णत्रयविकल्पो बोद्धव्यः ॥ * ॥

अथास्याश्चिकित्सा ।

"सेकं व्याषोषेन पित्तोविद्गल्लसर्प्पेण तथा ।
पुटपाकोऽञ्जनं चैव कर्त्तव्यं सप्रशुक्तिकम् ॥"

इति कल्पविधिः ॥

तत्र सेकविधिर्यथा,—

"सकल्तु दिवसे कार्य्यो रात्रौ चात्यन्तिके गदे ।
सेकस्तु सूक्ष्मधाराभिः सर्व्वस्मिन्नयने हितः ॥
मीलिताक्षस्य मर्त्यस्य प्रदेयश्चतुरङ्गुलम् ।
एरण्डपल्लवमूलत्वक्क्वाथसमाजपयो हिमम् ।
सुखोष्णं नयनयोः सिक्तं वाताभिष्यन्दनाशनम् ॥ १ ॥
यष्टीगैरिकसिन्धूत्थदार्व्वीतार्क्ष्यैः समांशकैः ।
जलपिष्टैर्बहिर्लेपः सर्व्वनेत्रामयापहः ॥ २ ॥"

इति भावप्रकाशः ॥ * ॥

कर्षद्वयपरिमाणम् । इति शब्दमाला ॥ चतुस्तोलकपरिमाणम् । तत्पर्य्यायः । अष्टमिका २ । इति वैद्यकपरिभाषा ॥

शुक्तिका स्त्री, (शुक्तिरेव । स्वार्थे कन् ।) मुक्तास्फोटः । इति जटाधरः ॥ शुक्तिका । इति शब्दरत्नावली ॥

शुक्तिज, क्ली, (शुक्तेर्जायते यदिति । शुक्ति+जन्+ड ।) मुक्ता । इति हेमचन्द्रः ॥ (यथा, इदक्तम हिमालयाम् । १२ । ४ ।

प्रबलातपमुक्तिकशकलैश्च
सलिलाश्रयकृतेऽपि पतिः सरिताम् ॥')

शुक्तिबीज, क्ली, (शुक्तेर्बीजमिव ।) मुक्ता । इति त्रिकाण्डशेषः ॥

शुक्तिमान् [त्] पुं, पर्व्वतविशेषः । यथा,—

"महेन्द्रो मलयः सह्यः शुक्तिमान् गन्धमादनः ।
विन्ध्यश्च पारियात्रश्च सप्तैते च कुलाचलाः ॥"

इति त्रिकाण्डशेषः ॥

शुक्र, क्ली, (शुच क्लेदे+"ऋज्रेन्द्राग्रवज्र" इति । उणा० २ । २८ । इति रन्प्रत्ययेन साधु ।) मज्जजातधातुः । तत्पर्य्यायः । पुंस्त्वम् २ रेतः ३ बीजम् ४ वीर्य्यम् ५ पौरुषम् ६ तेजः ७ इन्द्रियम् ८ अग्निविकारः ९ मज्जारसः १० रोहणम् ११ बलम् १२ । इति राजनिर्घण्टः ॥

तस्योत्पत्तिर्यथा,—

'रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते ।
मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः ॥"

तस्य स्वरूपं यथा —

"शुक्रं सौम्यं सितं स्निग्धं बलपुष्टिकरं स्मृतम् ।
गर्भबीजं वपुःसारो जीवस्याश्रय उत्तमः ॥"

जीवस्याश्रय उत्तम इति । यत आह ।

'जीवो वसति सर्व्वस्मिन् देहे तत्र विशेषतः ।
वीर्य्ये रक्ते मले यस्मिन् क्षीणे याति क्षयं क्षणात् ॥' * ॥

गर्भजनकशुक्रस्य लक्षणं यथा,—

"स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च ।
शुक्रमिच्छन्ति केचित्तु तैलक्षौद्रनिभं तथा ॥"

तस्य स्थानमाह ।

"यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा ।
एवं हि सकले काये शुक्रं तिष्ठति देहिनाम् ॥"
अत्र सर्पिर्दृष्टान्तो बहुशुक्रेऽल्पमथनेन सर्पिःशुक्रयोर्लाभात् । इक्षुरसदृष्टान्तस्तु स्वल्पशुक्रे पुंसि अतिपीड़नेनेक्षुरसशुक्रयोर्लाभात् ॥ * ॥
तस्य क्षरणमार्गो यथा,—
"द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः ।
मूत्रस्रोतःपथे शुक्रं पुरुषस्य प्रवर्त्तते ॥" * ॥
अथ शुक्रस्य क्षरणकारणमाह ।
"कृत्स्नदेहस्थितं शुक्रं प्रसन्नमनसस्तथा ।
स्त्रीषु व्यायच्छतश्चापि हर्षात्तत् संप्रवर्त्तते ॥"
स्त्रीषु व्यायच्छतः सुरतरूपं व्यायामं कुर्व्वतः ।
अन्यच्च ।
"शुक्रं कामेन कामिन्या दर्शनात् स्पर्शनादपि ।
शब्दसंश्रवणात् ध्यानात् संभोगाच्च प्रवर्त्तते ॥"
इति भावप्रकाशः ॥ * ॥
शुक्रक्षयकरद्रव्याणि यथा । सार्षपतैलम् १ राजमाषः २ तिलः ३ पटोलवालुककाकमाचीपुनर्नवाशाकभिन्नसर्व्वशाकम् ४ तावद्रजद्रव्यम् ५ कारवेल्लकफलम् ६ कर्कोटकफलम् ७ यादामम् ८ लिकुचम् ९ शुष्कमरिचम् १० गुड़त्वक् ११ पिप्पलीशुण्ठीभिन्नकटुरसः १२ । इति राजवल्लभात् संगृहीतम् ॥ * ॥ अपि च ।
"वीजक्षयकरं नित्यं भक्ष्यं भोज्यञ्च पानकम् ।
वर्जयेत् क्षारशाकाद्यानम्लञ्च बहुतिक्तकम् ॥
कासाराजतरङ्गस्थं तोयं पानेऽप्यवर्द्धनम् ।
मूत्रान्ते मूत्रवद्वीजक्षयकारि विवर्ज्जयेत् ॥"
शुक्रवृद्धिकरजलं यथा,—
"ताम्रायःस्वर्णसीसानां पात्रस्थं फलचर्म्मणोः ।
शुक्रवृद्धिकरं तोयं तत्तु पेयं प्रयत्नतः ॥"
इति कालिकापुराणे ८९ अध्यायः ॥ * ॥
शुक्रवर्द्धकद्रव्याणि यथा । पानीयम् १ विशेषतः हैमन्तिकजलम् २ तालाम्बु ३ चन्दनादिद्रव्यानुलेपनम् ४ रक्तशालिधान्यम् ५ हैमन्तिकषष्टिकधान्यम् ६ गोधूमः ७ माषः ८ सामान्यशुष्कनारीचपत्रशाकम् ९ सामान्यक्लिन्नशुष्कनारीचपत्रशाकफलम् १० कलम्बीशाकम् ११ काकमाचीशाकम् १२ गोक्षुरशाकम् १३ मुञ्जातकः १४ वार्त्ताकुः १५ विदारी १६ हस्त्यालुकम् १७ मध्वालुकम् १८ पक्वाम्रम् १९ दुग्धाम्रम् २० नागरङ्गम् २१ बहुवारफलम् २२ पक्वकण्टाफलम् २३ कण्टाफलास्थि २४ पक्वतालम् २५ पक्वकदलम् २६ चम्पककदलम् २७ द्राक्षा २८ खर्ज्जूरम् २९ धात्री ३० कुशाण्डमज्जा ३१ ताम्रमत्स्याः ३२ ह्रदमत्स्यः ३३ समुद्रमत्स्यः ३४ रोहितमत्स्यः ३५ भाकुटमत्स्यः ३६ पाठीनमत्स्यः ३७ भेकालिमत्स्यः ३८ चित्रफलमत्स्यः ३९ वाउशमत्स्यः ४० मद्गुरमत्स्यः ४१ वर्म्मिमत्स्यः ४२ फलीमत्स्यः ४३ चिङ्गटमत्स्यः ४४ पर्व्वतमत्स्यः ४५ एलङ्गमत्स्यः ४६ शकलीमत्स्यः ४७ चम्पकुन्दमत्स्यः ४८ प्रोष्ठीमत्स्यः ४९ दग्धमत्स्यः ५० सामान्यमांसम् ५१ प्रसहामांसम् ५२ भूशयामांसम् ५३ अनूपमांसम् ५४ जलजमांसम् ५५ जलेचरमांसम् ५६ छागमांसम् ५७ वाराहमांसम् ५८ कूर्म्ममांसम् ५९ तित्तिरि-६० कुलिङ्ग-६१ चटकानां मांसम् ६२ हंसमांसम् ६३ हंसयोगम् ६४ शुकपक्षिमांसम् ६५ मयूर-६६ शरारि-६७ मद्गु-६८ कादम्ब-६९ वलाका-७० वकमांसम् ७१ जीर्णमद्यम् ७२ समस्तक्षीरम् ७३ गोदुग्धम् ७४ हस्तिनीदुग्धम् ७५ तावत्क्षीरसन्तानिका ७६ माहिषदधि ७७ दधिसरः ७८ दधिमस्तु ७९ नवनीतम् ८० तावद्घृतम् ८१ तावदिक्षुः ८२ विशेषतः पौण्ड्रकेक्षुः ८३ दन्तनिष्पीड़ितेक्षुरसः ८४ यन्त्रनिष्पीड़ितेक्षुरसः ८५ अग्निपक्वेक्षुरसः ८६ इक्षुफाणितम् ८७ इक्षुगुड़ः ८८ इक्षुखण्डम् ८९ मधुरी ९० शुष्कपिप्पली ९१ शुण्ठी ९२ आर्द्रकम् ९३ लशुनम् ९४ पलाण्डुः ९५ सैन्धवम् ९६ अन्नम् ९७ सतैललवणान्वितदग्धमत्स्यः ९८ तैललवणयुक्तपलालवेष्टितकर्द्दमलेपिताङ्गारदग्धलवणवेशवारपुरस्कृतमार्द्रककटुतैलसन्तालितमत्स्यः ९९ शाकमत्स्याद्यव्यञ्जनम् १०० मांसरसः १०१ परिशुष्काख्यमांसम् १०२ घृतपूरः १०३ मधुमस्तकम् १०४ दुग्धफेनकः १०५ भूशय्या १०६ एरण्डफलम् १०७ गोक्षुरः १०८ सामान्यबला १०९ विशेषतः पीतबला ११० अश्वगन्धा १११ प्रसारणी ११२ माषपर्णी ११२ रुदन्तीरसः ११४ राजादनफलम् ११५ शिलाजतुः ११६ । इति राजवल्लभात् संगृहीतम् ॥ * ॥ नेत्ररोगविशेषः । इति मेदिनी ॥ अस्य विवरणं शुक्रशब्दे द्रष्टव्यम् ॥

शुक्रः, पुं, (शुच + रन् ।) ग्रहविशेषः । तत्पर्य्यायः । दैत्यगुरुः २ काव्यः ३ उशनाः ४ भार्गवः ५ कविः ६ । इत्यमरः ॥ सितः ७ आस्फुजित् ८ शतपर्व्वेशः ९ भृगुसुतः १० भृगुः ११ षोड़शार्च्चिः १२ मघाभूः १३ श्वेतः १४ श्वेतरथः १५ । इति शब्दरत्नावली ॥ षोड़शांशुः १७ । इति जटाधरः ॥ * ॥ तस्य शुक्रेति नामकारणं यथा,—
"निकुम्भादिषु दैत्येषु भूय एवोत्थितेष्वथ ।
युद्धायाभ्यागतेष्वेव नन्दी शङ्करमब्रवीत् ॥
महादेववचोऽसह्यं शृणु त्वं परमाद्भुतम् ।
अविचिन्त्यमसह्यञ्च मृतानां जीवनं पुनः ॥
ये हताः प्रमथैर्दैत्या यथाशक्त्या रणाजिरे ।
ते सर्व्वे जीविता भूयो भार्गवेणाद्य विद्यया ॥
तदिदं वै महादेव महत् कर्म्म कृतं रणे ।
संजातमफलं देव शुक्रविद्याबलाश्रयात् ॥
इत्येवमुक्ते वचने नन्दिना कुलनन्दिना ।
प्रत्युवाच प्रभुः प्रीत्या स्वार्थसाधनमुत्तमम् ।
गच्छ शुक्रं गणपते ममान्तिकमुपानय ॥
अहं तं संयतिष्यामि यथायोग्यं समेत्यति ॥
इत्येवमुक्तो रुद्रेण नन्दी गणपतिस्ततः ॥
तमनन्तमुपागम्य नन्दी संपूज्य वेगवान् ॥
रथाङ्गार्णवमानिन्ये सिंहः क्षुद्रमृगं यथा ।
तमादाय हराभ्यासमाजगाम विनायकः ॥
निपात्य रक्षिणः सर्व्वानथ शुक्रं न्यवेदयत् ।
तमानीतं कविं शर्व्वः प्राक्षिपद्वदने प्रभुः ॥
स शम्भुना कविश्रेष्ठो ग्रस्तो जठरमास्थितः ।
तुष्टाव भगवन्तं तं वाग्मी वाग्भिरथादरात् ॥
शुक्र उवाच ।
नमोऽस्तु ते शङ्कर शर्व्व शम्भो
सहस्रनेत्राङ्घ्रिशिरो नमस्ते ।
दृष्ट्वेव सर्व्वं भुवनं तवोदरे
श्रान्तो भवन्तं शरणं प्रपन्नः ॥
इत्येवमुक्ते वचने महात्मा
शम्भुर्व्वचः प्राह ततो विहस्य ।
निर्गच्छ पुत्त्रोऽसि ममाधुना त्वं
शिश्नेन भो भार्गववंशचन्द्रः ॥
नाम्ना तु शुक्रेति चराचरास्त्वां
स्तोष्यन्ति नैवात्र विचारणास्ति ।
इत्येवमुक्त्वा भगवान् ससर्ज
शिश्नेन शुक्रः स च निर्जगाम ॥
विनिर्गतो भार्गववंशचन्द्रः
शुक्रत्वमापद्य महानुभावः ॥"
इति वामने ६६ अध्यायः ॥ * ॥
अयं श्यामवर्णाग्निकोणस्त्रीब्राह्मणजातियजुर्व्वेदरजोगुणाम्लरसवृषराशिक्षीरकरञ्जभोजकटदेशानामधिपतिः । भृगुमुनिसन्तानः । नवाङ्गुलशरीरः । पद्मस्थः । स्वर्णमुखः । श्वेतवर्णः । चतुर्भुजः । वराभयमालावरकमण्डलुदण्डधारी । शुक्लवस्त्रः । इन्द्रादिदेवताकः । शचीप्रत्यधिदेवताकः । शुभग्रहः । अपराह्णकाले प्रबलः । जलचारी । कफप्रकृतिः । रूप्यद्रव्यधान्यादिस्वामी । मध्यवयः । स्त्रीश्वरः । जलभूमिचारी । स्निग्धरुचिः । द्विपदमनुष्याणां स्वामी च । इति बृहज्जातकग्रहयागतत्त्वादयः ॥ * ॥ तस्य भोग्यं दिनं शुक्रवारः । तत्र जातफलम् ।
"प्रसन्नचित्तो मतिमान् गुणज्ञः
सुकेशवेशः सितवस्त्रमाल्यः ।
वन्धुप्रियो भार्गववारजातः
श्रीशप्रसादः कुशली नरः स्यात् ॥"
तस्य क्षेत्रजातफलम् ।
"शुक्रालये काव्यकलाविदग्धो
दातातिथेयः श्रुतशास्त्रदक्षः ।
कलिप्रियो बालकमान्वितः स्या-
न्मेधान्वितो हास्यपटुर्म्मदाढ्यः ॥"
तस्य द्रेक्काणजातफलम् ।
"द्रेक्काणे भृगुनन्दनस्य सुतनुः पात्रं धरित्रीपतेः
सर्व्वज्ञः स्वजनानुरागकुशलो दाता सतां वल्लभः ।
संपूर्णश्च वराङ्गनाभरणधनैः स्फीतः शुभाशुः शुचिः
शान्तः सत्वरतोऽभियुक्तहृदयो धर्म्मानुरक्तो ...।"

वपुर्महोदधिच्छायं बिभ्रत् सैन्धवकान्तिमान्।
स्फाटिकी च सखलक्ष्मीः पट्टांशुककटिं वहन्॥
धौताम्बरश्रियं धत्ते स्फटिकान्तश्रियान्वितः।
अर्ज्जुनद्युतिविद्योतीत्येवमादि समुन्नयेत्॥"*॥
रक्तश्वेतवाचकानि वस्तूनि यथा,—
"रक्तश्वेतौ हरिशुचिपुष्करशतपत्रसूर्य्य-
क्रान्ताब्जाः।
नवहंसमहापद्मार्ककर्शोदराः कमलकीलाले॥"
हरिश्चन्द्रसूर्य्ययोः। शुचिः श्वेतवैश्वानरयोः।
पुष्करं जलपद्मयोः। शतपत्रं हंसपद्मयोः।
सूर्य्यकान्तः स्फटिके सूर्य्यकान्ते च। अब्जः
शङ्खाम्बुजयोः। नवहंसः नवहंसे प्रत्यग्रसूर्य्ये च।
महापद्मः श्वेतनागे पद्मे च। अर्कः स्फटिक-
सूर्य्ययोः। कमलं जलाम्बुजयोः। कीलालं
जलरक्तयोः।
"सुहृद्दलादिभिर्भानो रत्नेनाग्ने रदांशुकैः।
जलेभ्यो जन्मशोभाभिः सरोजकुमुदादिभिः॥"
भानोः परस्मात् सुहृद्दलादिभिः सितरक्तौ
यथा। रविमित्रं चन्द्रः रवितुल्यश्च। भानुरत्नं
सूर्य्यकान्तो रविपद्मरागौ च। अग्निरत्नं सूर्य्य-
कान्तो अग्निपद्मरागौ च। रदांशुकं दन्तवस्त्रे
अधरश्च। जलजशोभा जलजा चासौ शोभा
चेति पक्षे पद्मकान्तिः। एवं सरोजादिशोभा
सरोजसदृक्शोभा पक्षे सरोजादिश्चन्द्रः। कुमु-
दादिशोभा कुमुदसदृक्शोभा। पक्षे कुमुदादि-
रादित्यः॥*॥ पीतश्वेतवाचकानि वस्तूनि
यथा,—
"पीतश्वेतौ गौरद्विजराजकपर्द्दशम्भुहरि-
तार्क्ष्याः।
हैमस्तोमाष्टापदमहारजतचन्द्रकलधौताः॥"
गौरः श्वेतपीतयोः। द्विजराजो गुरुचन्द्रयोः।
कपर्द्दः शम्भुजटाजूटवराटयोः। शम्भुर्ब्रह्म-
त्रिलोचनयोः। हरिः पिङ्गलसिंहयोः। तार्क्ष्यो
गरुड़ः पक्षे उच्चैःश्रवाः। हैमस्तोमः हेम्नोऽयं
हैमः। पक्षे हिमस्यायम्। अष्टापदं सुवर्ण-
शरभयोः। महारजतं सुवर्णरूप्ययोः। चन्द्रः
स्वर्णशशाङ्कयोः। कलधौतं हेमरूप्ययोः।
"सुशोभितारकूटश्रीःस्वर्णस्तोमसमद्युतिः।
इहनोगलसत्कान्तिर्गाङ्गेयच्छविपेशलः॥"
तारकूटो रूप्यसमूहः। पक्षे आरकूटो रीतिः।
सुशोभनमर्णः कनकञ्च॥*॥ अथ श्लोकोक्ती-
र्णानि। गोपतितार्क्ष्यकान्तिः रविगरुड़च्छविः।
पक्षे गोपतिरिन्द्रस्तस्य तार्क्ष्यस्तुरङ्गः। वाम-
देवगिरिर्न्नोऽभ्रमेरुः कैलासश्च। इति कवि-
कल्पलतायाम् २ स्तबे उद्दिष्टवर्णनं १ कुसुमम्॥

शुक्लकः, पुं, (शुक्ल+स्वार्थे कन्।) शुक्लपक्षः।
यथा,—
"पक्षत्याद्यास्तु तिथयः क्रमात् पञ्चदश
स्मृताः।
दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके॥"
इति तिथ्यादितत्त्वम्॥
श्वेतवर्णश्च॥

शुक्लकण्ठकः, पुं, (शुक्लः कण्ठो यस्य। कन्।)
दात्यूहपक्षी। इति शब्दमाला॥ श्वेतगलयुक्ते,
त्रि॥

शुक्लकन्दः, पुं, (शुक्लः कन्दो यस्य।) महिषकन्दः।
इति राजनिर्घण्टः॥ श्वेतमूलञ्च॥

शुक्लकन्दा, स्त्री, (शुक्लः कन्दो यस्याः।) अति-
विषा। इति राजनिर्घण्टः॥

शुक्लकर्म्मा, [न्] त्रि, (शुक्लं पूतं कर्म्म यस्य।)
अक्षय्यकर्म्मा। सुकर्म्मशीलः। इति जटाधरः॥

शुक्लकुष्ठं, क्ली, (शुक्लं कुष्ठम्।) श्वेतवर्णकुष्ठ-
रोगः। तस्यौषधं यथा,—
"सोमराजस्य बीजानि नवनीतयुतानि च।
मधुना खादितानि स्युः शुक्लकुष्ठहराणि वै॥"
इति गारुड़े १९५ अध्यायः॥

शुक्लक्षीरा, स्त्री, (शुक्लं क्षीरं यस्याः।) काकोली।
इति राजनिर्घण्टः॥ श्वेतदुग्धयुक्ते, त्रि॥

शुक्लत्वं, क्ली, (शुक्लस्य भावः। शुक्ल+त्व।)
शुक्लस्य भाव इत्यर्थे त्वप्रत्ययेन निष्पन्नम्॥

शुक्लदुग्धः, पुं, (शुक्लं दुग्धं निर्य्यासो यस्य।)
शृङ्गाटकः। इति शब्दचन्द्रिका॥ श्वेतदुग्ध-
युक्ते, त्रि॥

शुक्लधातुः, पुं, (शुक्लः शुक्लवर्णो धातुः।) कठिनी।
इति हेमचन्द्रः॥ श्वेतवर्णधातुद्रव्यञ्च॥

शुक्लपक्षः, पुं, (शुक्लः पक्षः।) सितपक्षः। चन्द्र-
सम्बन्धि-वृद्ध्यनुकूल-पञ्चदशकलाक्रिया-प्रचयः।
तत्पर्य्यायः।
"सितश्चापूर्य्यमाणः स्यात् शुक्लश्च विशदः शुचिः।
शुक्लपक्षः कृष्णपक्षो बहुलो वदि च स्मृतः॥"
इति राजनिर्घण्टः॥
स तु शुक्लप्रतिपदादिपौर्णमास्यन्तपञ्चदश-
तिथ्यात्मकः। यथा,—
"तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि।
चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः॥"
इति तिथ्यादितत्त्वम्॥*॥
कर्म्मविशेषे तत्रोदयगामितिथिग्राह्यत्वं यथा,—
"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः॥"
इति विष्णुधर्म्मोत्तरम्॥
संस्कारकर्म्मणः शुक्लपक्षकर्त्तव्यता यथा।
आश्वलायनः। उदगयने आपूर्य्यमाणे पक्षे
कल्याणे नक्षत्रे चौड़कर्म्मोपनयनगोदान-
विवाहाः विवाहः सार्व्वकालिक इत्येके॥*॥
विद्यारम्भस्य शुक्लपक्षकर्त्तव्यता यथा। मदन-
पारिजाते।
"रवेर्गुरोर्भृगोर्लग्ने तत्स्थेऽर्केऽपीन्दुरहितः।
गुर्व्वर्केन्दुशुद्धौ च विद्यारम्भः प्रशस्यते॥"*॥
पुष्करिण्यारम्भस्य शुक्लपक्षकर्त्तव्यता यथा।
मत्स्यपुराणे।
"प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे॥"
इत्यादि॥
देवप्रतिष्ठायाः शुक्लपक्षकर्त्तव्यता यथा। व्यव-
हारसमुच्चये।
"प्रतिष्ठा सर्व्वदेवानां केशवस्य विशेषतः।
उत्तरायण आपन्ने शुक्लपक्षे शुभे दिने॥"
गृहारम्भगृहप्रवेशयोः शुक्लपक्षकर्त्तव्यता यथा।
मत्स्यपुराणे।
"शुक्लपक्षे भवेत् सौख्यं कृष्णे तस्करतो भयम्॥"
इति ज्योतिस्तत्त्वम्॥
नवान्नश्राद्धस्य शुक्लपक्षकर्त्तव्यता यथा।
आश्विनाधिकारे।
"शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम्।
गच्छेत् क्षेत्रे विधानेन गीतवाद्यपुरःसरम्।
तेन देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा॥"
अपि च।
"वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः॥"
इति तिथ्यादितत्त्वम्॥

शुक्लपुष्पः, पुं, (शुक्लं पुष्पमस्य।) छत्रकवृक्षः।
कुन्दपुष्पवृक्षः। मरुवकः। इति रत्नमाला॥
श्वेतकुसुमयुक्ते, त्रि॥

शुक्लपुष्पा, स्त्री, (शुक्लं पुष्पमस्याः।) नागदन्ती।
शीतकुम्भी। इति रत्नमाला॥

शुक्लपुष्पी, स्त्री, (शुक्लं पुष्पमस्याः। ङीष्।)
नागदन्ती। इति राजनिर्घण्टः॥

शुक्लपृष्ठकः पुं. (शुक्लं पृष्ठं यस्य। कन्।) सिन्धुक-
वृक्षः। इति शब्दचन्द्रिका॥ श्वेतवर्णपृष्ठयुक्ते,

शुक्लबलः, पुं, जिनविशेषः। यथा,—
"वासुदेवा अमी कृष्णा नव शुक्ला बलास्त्वमी।
अचलो विजलो भद्रः सुप्रभश्च सुदर्शनः।
आनन्दो नन्दनः पद्मो रामो विष्णुद्विषस्त्वमी॥"
इति हेमचन्द्रः॥

शुक्लमण्डलं, क्ली, (शुक्लं मण्डलम्।) चक्षुःश्वेत-
क्षेत्रम्। इति केचित्॥ श्वेतवर्णगोलवस्तु च॥

शुक्लरोहितः, पुं. (शुक्लः श्वेतवर्णो रोहितः।)
श्वेतरोहितवृक्षः। इति राजनिर्घण्टः॥ शुभ्र-
रोहितमत्स्यश्च॥

शुक्लला, स्त्री, (शुक्लं लातीति। ला+कः।)
उच्चटा। इति रत्नमाला॥ श्वेतदातरि,
त्रि॥

शुक्लवर्गः, पुं, (शुक्लानां वर्गः समूहः।) श्वेतवर्ण-
सजातीयद्रव्यम्। यथा। शङ्खशुक्तिकपर्दकादि।
इति राजनिर्घण्टः॥

शुक्लवायसः, पुं, (शुक्लो वायस इव।) वकः।
इति त्रिकाण्डशेषः॥ श्वेतकाकश्च॥

शुक्लशालः, पुं, (शुक्लः शाल इव।) गिरिनिम्बः।
इति राजनिर्घण्टः॥ श्वेतशालवृक्षश्च॥

शुक्ला, स्त्री, (शुक्लो वर्णोऽस्त्यस्या इति। अच्।
टाप्।) सरस्वती। इति त्रिकाण्डशेषः॥
शर्करा। इति शब्दचन्द्रिका॥ काकोली।
विदारी। स्नुही। इति राजनिर्घण्टः॥ श्वेत-
वर्णा च॥

शुक्लाङ्गी, स्त्री, (शुक्लमङ्गं यस्याः। ङीष्।)
शेफालिका। इति राजनिर्घण्टः॥ श्वेतावयव-
युक्ते, त्रि॥

यस्त्वासौ तपते सूर्य्यः शुचिरग्निस्त्वसौ स्मृतः।
तेषान्तु सन्ततावन्ये चत्वारिंशत्तु पञ्च च ॥
पावकः पवमानश्च शुचिस्तेषां पिता च यः।
एते चैकोनपञ्चाशद्वह्नयः परिकीर्त्तिताः ॥”
इति कौर्म्मे १२ अध्यायः ॥

सूर्य्यः। यथा,—
“तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥”
इति शाम्बपुराणम् ॥

चन्द्रः। शुक्रः। ब्राह्मणः। इति केचित् ॥ (अन्धकस्य पुत्त्रविशेषः। यथा, भागवते। ९। २४। १९।
“कुकुरो भजमानश्च शुचिः कम्बलबर्हिषः ॥”
कार्त्तिकेयः। इति महाभारतम्। ३।२३१।४ ॥)

शुचिः, स्त्री, (शुच + इन्।) कश्यपपत्न्यास्ताम्रायाः सुता। यथा,—
“षट् सुताश्च महासत्त्वास्ताम्रायाः परिकीर्त्तिताः।
शुकी श्येनी च भासी च सुग्रीवी शुचिगृध्रिका ॥”
इति गारुडे ६ अध्यायः ॥

शुचिः, त्रि, (शुच + इन्।) शुक्लगुणविशिष्टः। इत्यमरः ॥ शुद्धः। (यथा, महाभारते। १। १२८। ४९।
“क्रीडावसाने ते सर्व्वे शुचिवस्त्राः स्वलङ्कृताः ॥”)
अनुपहतः। इति मेदिनी ॥ * ॥ परस्त्रीस्पर्शे हस्तक्षालनात् शुचिर्यथा,—
“देवान् परस्त्रियं दृष्ट्वा विरमेद् यो हरिं स्मरन्।
स्पृष्ट्वा परसुवर्णञ्च हस्तप्रक्षालनात् शुचिः ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ६५ अध्यायः ॥
(निरपराधी। यथा, महाभारते। १। १४९। १४।
“अहो धिग् धृतराष्ट्रस्य बुद्धिर्नास्ति समञ्जसी।
यः शुचीन् पाण्डुदायादान् दाहयामास शत्रुवत् ॥”
शुद्धान्तःकरणः। यथा, मनुः। ७। ३८।
“वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन्।
वृद्धसेवी हि सततं रक्षोभिरपि पूज्यते ॥”)

शुचिता, स्त्री, (शुचेर्भावः। शुचि + तल्।) शुचित्वम्। यथा,—
“शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन यस्यापरे।
किञ्चान्यत् कथयामि ते स्तुतिपदं त्वं जीविनां जीवनं
त्वञ्चेन्नीचपथेन यास्यसि पयः कस्त्वां निषेद्धुं क्षमः ॥”
इति लक्ष्मणसेनः ॥

शुचिद्रुमः, पुं, (शुचिः पवित्रो द्रुमः।) अश्वत्थवृक्षः। इति राजनिर्घण्टः ॥ शुद्धवृक्षश्च ॥

शुचिप्रणीः, पुं, (शुचिं प्रणयतीति। प्र + नी + क्विप्।) आचमनम्। यथा,—
“आचामः स्यादाचमनमुपस्पर्शः शुचिप्रणीः।”
इति शब्दरत्नावली ॥

शुचिमल्लिका, स्त्री, (शुचिर्मल्लिका।) नवमालिका। इति राजनिर्घण्टः ॥

शुचिरोचिः, [स्] पुं, (शुचिः शुक्लं रोचिः किरणो यस्य।) चन्द्रः। इति केचित् ॥ शुक्लकिरणे, त्रि ॥

शुच्य, ई अभिषवे। इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सक० च-सेट्। निष्ठायामनिट्।) तालव्यादिः। पञ्चमस्वरी। तालव्यवर्गाद्योपधः। ई, शुक्तः। यद्वा, यान्तोऽयमित्येके। अभिषवः स्नानं मन्थनं पीडनं सन्धानञ्च। इति दुर्गादासः ॥

शुटीरता, स्त्री, वीर्य्यम्। इति त्रिकाण्डशेषः ॥

शुटीर्य्यं, क्ली, वीर्य्यम्। इति शब्दरत्नावली ॥

शुठ, खोटने। इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट्।) खोटनमिह गत्याघातः। शोटति पयः सेतुना। इति दुर्गादासः ॥

शुठ, इ खोटने। इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट्।) खोटनमिह गत्याघातः। इ, शुण्ठ्यते। इति दुर्गादासः ॥

शुठ, इ कि शोषणे। इति कविकल्पद्रुमः। (चुरा०पक्षे भ्वा०-अक०-सेट्।) इ, शुण्ठ्यते। कि, शुण्ठयति शुण्ठति पङ्कमातपात्। रमानाथस्तु भ्वादिपक्षे शुष्कीभावे। चुरादिपक्षे शुष्कीकरणेऽयमिति मत्वा भ्वादौ शुण्ठति पङ्कं चुरादौ शुण्ठयति काष्ठमातप इत्युदाहृतवान्। वस्तुतस्तु उभयत्र शुष्कीभावः अन्यथा भौवादिकस्यैव प्रेरणवाचित्वाच्चुरादिपाठोऽनर्थकः स्यात्। इति दुर्गादासः ॥

शुठ, क आलस्ये। इति कविकल्पद्रुमः ॥ (चुरा०-पर०-अक०-सेट्।) क, शोठयति वृद्धः क्रियासु मन्दः स्यादित्यर्थः। इति दुर्गादासः ॥

शुण्ठिः, स्त्री, (शुठि शोषणे + इन्।) शुण्ठी। इत्यमरटीका ॥ (यथा, आर्य्यासप्तशत्याम्। २७१।
“तस्मिन् गतार्द्रभावे वीतरसे शुण्ठिशकल इव पुरुषे।
अपि भूतिभाजि मलिने नागरशब्दो विडम्बाय ॥”)

शुण्ठी, स्त्री, (शुण्ठि + वा ङीप्।) शुष्कार्द्रकम्। शुँट् इति भाषा ॥ तत्पर्य्यायः। महौषधम् २ विश्वम् ३ नागरम् ४ विश्वभेषजम् ५। इत्यमरः ॥ शुण्ठिः ६ विश्वा ७ महौषधी ८। इति तट्टीका ॥ इन्द्रभेषजम् ९ भेषजम् १०। इति शब्दरत्नावली ॥ विश्वौषधम् ११ कटुग्रन्थिः १२ कटुभद्रम् १३ कटूषणम् १४ सौपर्णम् १५ शृङ्गवेरम् १६ कफारिः १७ चान्द्रकम् १८ शोषणम् १९ नागराह्वम् २०। अस्या गुणाः। कटुत्वम्। उष्णत्वम्। स्निग्धत्वम्। कफशोफानिलमूलबन्धोदराध्मानश्वासश्लीपदनाशित्वञ्च। इति राजनिर्घण्टः ॥ * ॥ अपि च।
“शुण्ठी रुच्यामवातघ्नी पाचनी कटुका लघुः।
स्निग्धोष्णा मधुरा पाके कफवातविबन्धनुत् ॥
वृष्या स्वर्य्या च निःश्वासशूलकासहृदामयान्।
हन्ति श्लीपदशोथार्शः-आनाहोदरमारुतान् ॥
आग्नेयगुणभूयिष्ठं तोयांशं परिशोषयेत्।
संगृह्णाति मलं तत्तु ग्राहि शुण्ठ्यादयो यथा ॥
विबन्धभेदिनी या तु सा कथं ग्राहिणी भवेत्।
शक्तिर्व्विबन्धभेदे स्याद्यतो न मलपातने ॥”
इति भावप्रकाशः ॥
अन्यच्च।
“शुण्ठी तु कफवातघ्नी मलरोधा लघुदीपनी।
विपाके मधुरा वृष्या हृद्योष्णा कटुरोचनी ॥”
इति राजवल्लभः ॥

शुण्ठ्यं, क्ली, शुण्ठी। इति शब्दचन्द्रिका ॥

शुण्डः, पुं, (शुन गतौ + बाहुलकात् डः।) मदनिर्झरः। इति हेमचन्द्रः ॥ करिकरश्च ॥ (यथा, महाभारते। ७। ३५। ३५।
“घण्टाशुण्डान् विषाणाग्रान् क्षुरमालापदानुगान्।
शरैर्निशितधाराग्रैः शात्रवाणामशातयत् ॥”)

शुण्डकः, पुं, शौण्डिकः। इति शब्दरत्नावली। युद्धवेणुः। इति शब्दमाला ॥

शुण्डरोहः, पुं, (शुण्डवत् रोहतीति। रुह + अच्।) भूतृणम्। इति राजनिर्घण्टः ॥ पुस्तकान्तरे शृङ्गरोह इति पाठः ॥

शुण्डा, स्त्री, (शुन् + ड। टाप्।) मद्यपानगृहम्। अम्बुहस्तिनी। वेश्या। सुरा। हस्तिहस्तः। इति मेदिनी ॥ शुँड् इति भाषा ॥ नलिनी ॥ इति विश्वः ॥ कुट्टनी। इति शब्दमाला ॥

शुण्डापानं, क्ली, (शुण्डाया आपानम्।) मद्यपानगृहम्। तत्पर्य्यायः। मदस्थानम्। इत्यमरः ॥ मदस्थलम्। इति शब्दरत्नावली ॥

शुण्डारः, पुं, (शुण्डां रातीति। रा + कः।) शौण्डिकः। इति शब्दरत्नावली ॥ (इस्वा शुण्डा। “कुटीशमीशुण्डाभ्यो रः।” ५। ३। ८८। इति रः। स्वल्पशुण्डा। इति सिद्धान्तकौमुदी ॥)

शुण्डालः, पुं, (शुण्डेन अलतीति। अल पर्य्याप्तौ + अच्।) हस्ती। इति धनञ्जयः ॥

शुण्डिका, स्त्री, अलिजिह्वा। इति केचित् ॥ शुण्डाशब्दार्थोऽपि ॥

शुण्डिमूषिका, स्त्री, (शुण्डिनी शुण्डविशिष्टा मूषिका।) छुच्छुन्दरी। इति राजनिर्घण्टः ॥

शुण्डी, [न्] पुं, (शुण्डा अस्यास्तीति। शुण्डा + इनिः।) शौण्डिकः। इति शब्दरत्नावली ॥ हस्ती च ॥

शुण्डी, स्त्री, हस्तिशुण्डीवृक्षः। इति राजनिर्घण्टः ॥

शुतुद्रिः, स्त्री, शतद्रुनदी। इत्यमरटीकायां भरतः ॥

शुतुद्रुः, स्त्री, शतद्रुनदी। इति भरतद्विरूपकोषः ॥

शुद्धं, क्ली, (शुध + क्तः।) सैन्धवम्। मरिचम्। इति राजनिर्घण्टः ॥ मरिचपर्य्याये न्ययं यल्लिखितं तदशुद्धम् ॥

शुद्ध त्रि, (शुध+क्त।) केवलम्। (यथा मनुः। ९। २७९
"तडागभेदकं हन्यादप्सु शुद्धवधेन वा।
यद्वापि प्रतिसंस्कुर्य्यात् दाप्यस्तूत्तमसाहसम्॥")
निर्दोषः। (यथा, वृहत्संहितायाम्। ४९।४।
"सर्व्वं च शुद्धकाञ्चनविनिर्म्मिता श्रेयसो वृद्धौ॥")
पवित्रः। इति मेदिनी॥ (उज्ज्वलः। यथा, रघुः। १। ४६
"काम्यभिख्या तयोरासीत् व्रजतोः शुद्धवेशयोः॥")
शुक्लः। इति धरणिः॥ रागान्तरामिश्रितरागः। इति सङ्गीतशास्त्रम्॥ *॥ शरीरशुद्धताकारणं यथा —
श्रीनारद उवाच।
"मानवानां द्विजादीनां शरीरस्यापवित्रता।
भवेत् केन प्रकारेण कथ्यतां तत् सदाशिव॥
सर्व्ववेदपुराणादिशास्त्रज्ञानां द्विजन्मनाम्।
जितेन्द्रियस्तुतिविदां ततो कथय पूतताम्॥
सदाशिव उवाच।
या देहापवित्रत्वं विप्रादीनां यतो भवेत्।
एवं शृणु मत् सर्व्वं महाशामानुपूर्व्विकम्॥
जातके मृतकेऽस्नाते जलौकोभिः क्षते तथा
अपवित्रो द्विजादीनां देहः सन्ध्यादिकर्म्मसु॥
अपूतसुतसंस्पर्शे गतो मूत्रपुरीषयोः।
अस्पृश्यस्पर्शने चैव ब्रह्मयज्ञजपादिषु॥
रक्तपाते नखश्मश्रुदन्तखड्गादिभिः क्षते।
विप्रादेरशुचिः कायः शस्त्राग्नौ कण्टकादिभिः॥
भुक्त्वा हस्तास्योच्छिष्टोऽपवित्रः कृतमैथुनः।
शयने शालयादीनां शरीरं क्षुरकर्म्मणि॥
ज्वराग्निभिस्तु वह्निरोगैर्युक्तद्विजन्मनाम्।
वपुरप्रयतं पूजादानहोमजपादिषु॥
धूमोद्गारे वमौ श्राद्धपतितान्नादिभोजने
तथा च रेतःस्खलने सर्व्वदेहापवित्रता॥
अपवित्रं द्विजादीनां वपुः स्यान्नाम्बुदर्शने।
गर्हितदानग्रहणे पतिते मातकादिभिः॥
अशौचान्तेन शुद्धिः स्यात् जातके मृतकेऽपि च।
सर्व्ववर्णाश्रमादीनां नृणां सन्ध्यादिकर्म्मसु॥"
इति पाद्मे उत्तरखण्डे १८ अध्यायः॥

शुद्धजङ्घ, पुं, (शुद्धा जङ्घा यस्य।) गर्दभः। इति त्रिकाण्डशेषः॥ पवित्रजङ्घायुक्ते, त्रि॥

शुद्धदत् त्रि, शुद्धा दन्ता यस्य सः। ("अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च।" ५। ४। १४५। इति दन्तस्य दत्रादेशः।) शुद्धदन्तयुक्तः। यथा,—
"गते तस्मिन् जलमुचि शुद्धदन्तावलं शिखी।
जलपूरोऽभ्रमालावान् धारया न्यस्ताकुलः॥"
इति भट्टिः। ५। ९१॥

शुद्धमतिः, पुं, (शुद्धा मतिर्यस्य।) चतुर्विंशतिभूतादेरनागतजिनविशेषः। इति हेमचन्द्रः॥ (शुद्धा मतिर्यस्य) पवित्रबुद्धौ। सद्बुद्धौ, त्रि॥ (यथा, हितोपदेशे। २। ८०।
"उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम्।
तं जनमसत्यसन्धं भगवति वसुधे कथं वहसि॥")

शुद्धमांसं, क्ली (शुद्धं मांसं यस्य।) मांसव्यञ्जनविशेषः। यथा,—
"पाकपात्रे घृतं दद्यात्तैलं वा तदभावतः।
तत्र हिङ्गुहरिद्राञ्च भर्ज्जयेत्तदनन्तरम्॥
छागादेरस्थिरहितं मांसं तत् खण्डखण्डितम्।
धौतनिर्गालितं तस्मिन् घृते तद्भर्ज्जयेच्छनैः॥
सिद्धयोग्यं जलं दत्त्वा लवणञ्च पचेत्ततः।
सिद्धे जलेन सम्पिष्य वेसवारं परिक्षिपेत्॥
अथापि वेसवारस्य नागवल्लीदलानि हि।
तण्डुलाश्च लवङ्गानि मरिचानि समासतः।
अनेन विधिना सिद्धं शुद्धमांसमिति स्मृतम्॥
शुद्धमांसं परं हृद्यं बल्यं रुच्यञ्च बृंहणम्।
त्रिदोषशमनं श्रेष्ठं दीपनं धातुवर्द्धनम्॥"
इति भावप्रकाशः॥

शुद्धवल्लिका, स्त्री, (शुद्धा वल्लिका लता।) गुडूची। इति शब्दचन्द्रिका॥ पवित्रलता च॥

शुद्धान्तः, पुं, (शुद्धः अन्तो यस्य। शुद्धा रक्षका अन्ता यस्य इति वा।) अन्तःपुरम्। (यथा, कुमारे। ६। ५२।
"विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य दर्शकः।
स तैराक्रमयामास शुद्धान्तं शुद्धकर्म्मभिः॥")
नृपस्यासर्व्वगोचरकक्षान्तरम्। इत्यमरमेदिन्यौ॥ राजयोषित्। इत्यजयः॥ (यथा, नैषधे। ३। ९३।
"शुद्धान्तसम्भोगनितान्ततुष्टे
न नैषधे कार्य्यमिदं निगाद्यम्।
अपां हि तृप्ताय न वारिधारा
स्वादुः सुगन्धिः स्वदते तुषारा॥")
अशौचान्तः। इति धरणिः॥

शुद्धान्तपालकः, पुं, (शुद्धान्तं पालयतीति। पालि+ण्वुल्।) अन्तःपुररक्षकः। तत्पर्य्यायः। गृहनैवारिकः २ कक्षारक्षकः ३ रात्रिन्दिवकः ४। इति शब्दमाला॥ तस्य लक्षणं यथा,—
"वृद्धः कुलीनः सक्तः पितृपैतामहः शुचिः।
राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते॥"
इति मात्स्ये १८९ अध्यायः॥

शुद्धान्ता, स्त्री, (शुद्धान्त आश्रयत्वेनास्त्यस्या इति। अच्। टाप्।) राज्ञी। यथा —
"शुद्धान्तश्च विमदान्ते शुद्धान्ता राजयोषितः॥"
इति धरणिः॥

शुद्धापह्नुतिः, स्त्री, (शुद्धा अपह्नुतिः।) अर्थालङ्कारविशेषः। यथा —
"शुद्धापह्नुतिरन्यस्यारोपार्थो धर्म्मनिह्नवः।
नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम्॥"
इति चन्द्रालोकः॥

शुद्धिः, स्त्री, (शुध+क्तिन्।) दुर्गा। यथा,—
"सारत्वाज्जिल्लनाद्वापि शोधयेत् स हि पातकात्।
तेन शुद्धिः समाख्याता देवी वहतगी स्थिता॥"
इति देवीपुराणे देवीनिरुक्ताध्यायः ४५॥
मार्ज्जना। इति जटाधरः॥ वैदिककर्म्मार्हत्वप्रयोजकसंस्कारविशेषः। यथा। शुद्ध्यशुद्धी संस्काररूपत्वेन एकपुरुषस्यैकदोभयस्थितिर्घटते। अशुद्धेर्भावरूपत्वे शुद्धेस्तदभावरूपत्वे नैतत् विरोधात्। अतएव छन्दः।
"तत्र श्राद्धमशुद्धौ तु कुर्य्यादेकादशे तथा।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः॥"
अशुद्धौ चतुर्थादौ। कथमशुद्धौ श्राद्धं कालाशौचस्याधिकारिविशेषणत्वादत आह कर्त्तुस्तात्कालिकीति। श्राद्धविधानाक्षेपात् स्नानजनिता शुद्धिः कल्प्यते। स पुनरशुद्ध एव कर्म्मान्तर एव। इति श्राद्धविवेकः॥ एवं शुद्धेर्भावरूपत्वे अशौचस्य तदभावरूपत्वे विरोधः। तथात्वे अशौचसङ्करोऽपि न स्यात्। एकस्मिन् शुद्ध्यभावरूपे अशौचे सत्यपरस्य तद्रूपस्य तदानीं तत्पुरुषीयशुद्धिरूपप्रतियोग्यन्तराभावादनुत्पत्तेः। तस्मात् शुद्ध्यशुद्धी भावरूपत्वम्। इति शुद्धितत्त्वम्॥*॥ अथाशौचिशुद्धिः
"अघवृद्धिमदाशौचमूर्द्ध्वं शेषेण शुध्यति।
अथ चेत् पञ्चमीं रात्रिमतीत्य परतो भवेत्।
अघवृद्धिमदाशौचं तदा पूर्व्वेण शुध्यति॥"
अघवृद्धिमत्त्वम्। सपिण्डजननाशौचापेक्षया स्वपुत्रजननाशौचस्य सपिण्डमरणाशौचापेक्षया पितृमातृभर्तृमरणाशौचस्य।*।
"जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते।
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः॥"
शुध्येत् स्पर्शमात्रे उत्तरवाक्ये तथा स्पर्शनात्।*। जननाशौचमध्ये तु यद्यपरं जननं स्यात् तदा पूर्व्वाशौचव्यपगमे शुद्धिः। रात्रिशेषे दिनद्वयं प्रभाते दिनत्रयेण मरणाशौचमध्ये ज्ञातिमरणेऽप्येवमिति।*।
"यस्य यस्य तु वर्णस्य यद्यत् स्यात् पश्चिमं त्वहः।
स तत्र वस्त्रशुद्धिञ्च गृहशुद्धिं करोत्यपि॥
समाप्य दशमं पिण्डं यथाशास्त्रमुदाहृतम्।
ग्रामाद्वहिस्ततो गत्वा प्रेतस्पृष्टे च वाससी॥
अन्त्यानामाश्रितानाञ्च त्यक्त्वा स्नानं करोत्यपि।
श्मश्रुलोमनखानाञ्च यत्त्याज्यं तज्जहात्यपि॥
गौरसर्षपकल्केन तिलतैलेन संयुतः।
शिरःस्नानं ततः कृत्वा तोयेनाचम्य वाग्यतः॥
वासोयुगं नवं शुभ्रमव्रणं शुद्धमेव च।
गृहीत्वा गां सुवर्णञ्च मङ्गलानि शुभानि च।
स्पृष्ट्वा सकीर्त्तयित्वा तु पश्चात् शुद्धो भवेन्नरः॥"
गृहशुद्धिः प्राक्तनपाकभाण्डपरित्याग उपलेपादिना। अन्यच्च व्याघ्रः।
"अथाह तु निरस्तेषु सूतकान्तं कृतमङ्गलः।
आयुष्याद्विप्रसुष्येत ब्राह्मणान् स्वस्ति वाच्य च॥
अल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि।
न तु पूर्व्वेण शुद्धिः स्यात् स्वकालेनैव शुध्यति॥
समानं लघु चाशौचं पूर्व्वेणैव विशुध्यति।
यदि स्यात् सूतके सूतिर्मृतके च मृतिर्भवेत्।
शेषेणैव भवेच्छुद्धिरहःशेषे द्विरात्रकम्॥

घृत वज्रशवा त्रिघृत तोयकुम्भान् समुद्धरेत् ।
पञ्चगव्य ततस्तेषु प्रक्षिपेन्मन्त्रपूर्व्वकम् ॥"
घृतादि व्यस्तत्वापेक्षया व्यस्तस्य सर्व्वो द्वारत्वाभिधानात् । * । दक्षस्तु ।
"अभूद्यतिताघाल्या न्यसाद्द्विजमन्दिरे ।
शौच तत्र प्रवक्ष्यामि मनुना भाषित यथा ॥
दशरात्राच्छुचि प्रेते मासात् शूद्रे भवेच्छुचि ।
द्वाभ्यान्तु पतिते गेहे अन्त्ये मासचतुष्टयात् ।
अत्यन्ते वर्ज्जयेद्गेहमित्येव मनुरब्रवीत् ॥"
यम ।
'द्विजस्य मरणे वेश्म विशुध्यति दिनत्रयात् ।
दिनैकेन बहिर्भूमिरग्निदेपलोपने ॥ *॥
यथोक्तकालात्पर वर्णानाम् च सम्भवे ।
"गृहशुद्धिं प्रवक्ष्यामि अन्त स्थशवदूषिते ।
प्रोत्सृज्य मृण्मय पात्र सिद्धमन्न तथैव च ॥
गृहादपास्य तत् सर्व्व गोमयेनानुलेपयेत् ।
गोमयेनानुलिप्याथ छागेनाघ्रापयेद्बुध ॥
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिभि ।
सर्व्वमभ्युक्षयेद्वेश्म तत शुध्यत्यसंशय ॥'
मत्स्यगारुडे गायत्री । * । दक्ष ।
"पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति ।
दुष्टा द्विधा त्रिधा वापि शुध्यते मलिनैकधा ॥
दहन खनन भूमेरुपलेपनवापने ।
पर्ज्जन्यवर्षणञ्चापि शौच पञ्चविध स्मृतम् ॥
प्रसूते गर्भिणी यत्र म्रियते यत्र मानुष ।
चाण्डालैरुषित यत्र यत्र विन्यस्यते शव ॥
विण्मूत्रोपहत यत्र कुणपो यत्र दृश्यते ।
एवं कश्मलभूयिष्ठा भूरमेध्यातिकथ्यते ।
कृमिकीटपदक्षेपैर्दूषिता यत्र मेदिनी ।
अमया कर्षिते छिन्ना वान्तैर्वा दूषिता भवेत् ॥
नखदन्ततनूजत्वक्तुषपांशुरजोमलै ।
भस्मपङ्कतृणैर्वापि प्रच्छन्ना मलिना भवेत् ॥"
वापन स्थलान्तरेण पूरणम् । मध्या घनीभूत वेश्मादि । इति शुद्धितत्त्वम् । * । अपि च ।
याज्ञवल्क्य उवाच ।
"द्रव्यशुद्धि प्रवक्ष्यामि तान्निबोधत सत्तमा ।
सौवर्णराजताब्जानां शाकवस्त्रादिचर्म्मणाम् ॥
पात्राणां चमसानाञ्च वारिणा शुद्धिरिष्यते ।
उष्णाम्भसा स्रुक्स्रुवयोर्धान्यादे प्रोक्षणेन च ॥
तक्षणात् दारुशृङ्गादेर्यज्ञपात्रस्य मार्ज्जनात् ।
शोधितस्य च तैलस्य शुध्यत्याविककौषिकम् ।
भैक्ष्य शौविकास्त पुष्प पुन पाकाण्डजीवनम् ।
गोघ्राते च तथा केशमक्षिकाकीटदूषिते ।
भस्मादेराद्विशुद्धि स्याद्विशुद्धिर्मार्ज्जनादिना ।
त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभि ।
भस्माद्भिर्लोहकांस्यानामग्निस्तत्र सदा शुचि ॥
अमेध्याक्तस्य मृत्तोयैर्गन्धलेपापकर्षणात् ।
शुचि भाण्डमिद तोय प्रकृतिस्थ महीगतम् ॥
तथा मांस श्वचाण्डालक्रव्यादैर्निपातितम् ।
रश्मिरग्नी रजश्छाया गौरश्वो वसुधानिल ॥
विप्रुषो मक्षिका शुद्धा मेध्यान्यपि श्वामशविन्दव ।
छाया गौरश्वा मुखे शुभे मुखा रथोपमपथे ।

आचान्त पुनराचामेत् वासो धृत्वपरिधाय च ।
क्षुते निष्ठीविते स्वापे परिधानेऽश्रुपातने ॥
पञ्चस्वेतेषु नाचामेत् दक्षिण श्रवण स्पृशेत् ।
तिष्ठन्त्यग्न्यादयो देवा विप्रकर्णे तु दक्षिणे ॥'
इति गारुडे ६७ अध्याय ॥
अन्यच्च ।
'मणिवज्रप्रवालानां शङ्खमुक्ताफलस्य च ।
शैलदारुमयानाञ्च फलमूलौषधस्य च ॥
शाकधान्याजिनानाञ्च संहतानाञ्च वाससाम् ।
वल्कलानामशेषाणामम्भसा शुद्धिरिष्यते ॥
सस्नेहानामयोग्येन तिलकल्केन शोधनम् ।
कार्पासिकानां वस्त्राणां शुद्धि स्यात् सह
भस्मना ॥
नागदन्तास्थिशृङ्गाणां तक्षणाच्छुद्धिरिष्यते ।
पुन पाकेन भाण्डानां मृण्मयानाञ्च शुद्धता ॥
शुद्धं भैक्ष्य कारुहस्त पण्य योषिन्मुख तथा ।
रथ्यागतमविज्ञात दासवर्गेण यत् कृतम् ॥
वाक्प्रशस्त चिरातीतमनेकान्तरित लघु ।
चेष्टित बालवृद्धानां बालस्य तु मुख शुचि ।
कर्म्मशालासु गोष्ठेषु स्तनन्धयसुता स्त्रिय ।
वाग्विप्रुषो द्विजेन्द्राणां पाठे वागम्बुविन्दव ॥
भूमिर्विशुध्यते खातदाहमार्ज्जनलेपनै ।
लेपाद्युल्लेखनात् सेकात् वेश्मसम्मार्ज्जनार्च्चनात् ॥
केशकीटावपन्नेऽन्ने गोघ्राते मक्षिकान्विते ।
मृदम्बुभस्मक्षाराणि प्रक्षेप्तव्यानि शुद्धये ।
उदुम्बराणामम्लेन क्षारेण त्रपुसीसयो ।
कांस्यानां भस्मना शुद्धिस्तोयाच्छुद्धिर्द्रवस्य च ॥
अमेध्याक्तस्य मृत्तोयैर्गन्धापहरणेन च ।
अन्येषामपि द्रव्याणां शुद्धिर्गन्धापहारत ॥
मातु प्रस्रवणे वत्स शकुनि फलपातने ।
गर्द्दभो भारवाहित्वे श्वा मृगग्रहणे शुचि ॥
रथ्याकर्द्दमतोयानि नाव पथि तृणानि च ।
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च ॥
प्रभूत शौचाद्वास्त्वामममेध्याभिप्लुत भवेत् ।
अपसृह्य ततश्चान्य शेषस्य शोधन स्मृतम् ॥
उपवासं त्रिरात्र वा दूषितान्नस्य भोजने ।
अज्ञाते ज्ञातपूर्व्वे च नैव शुद्धिर्विधीयते ॥
उदक्याश्वानग्नाश्च सूतिकान्त्यावसायिन ।
स्पृष्ट्वा स्नायीत शौचार्थ तथैव मृतहारिण ॥
सस्नेहमस्थि संस्पृश्य सवासा स्नानमाचरेत् ।
आचम्यैव तु नि स्नेह गामालभ्यार्कमीक्ष्य च ॥"
इति वामनपुराणे १४ अध्याय ॥
अन्यत् मार्कण्डेयपुराणे सदाचाराध्याये द्रष्टव्यम् ।
जलशुद्धिर्यथा —
"गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्म्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधि कुरु ॥"
भूतशुद्धिस्तु तच्छब्दे द्रष्टव्या । * । आसन शुद्धिर्यथा । 'इत गन्धपुष्पे आधारशक्तिकमला सनाय नम । आसनमन्त्रस्य मेरुपृष्ठ ऋषि सुतल छन्द कूर्म्मो देवता आसनपरिग्रहे विनियोग ।
पृथ्वि त्वया धृता लोका देवि त्व विष्णुना धृता ।

त्वञ्च धारय मां नित्य पवित्र कुरु चासनम् । *
मण्डपशुद्धिर्यथा —
"पञ्चगव्येन सर्व्वेण मण्डप परिशोधयेत् ।"
गौतमीये ।
'पञ्चगव्येन सद्गेह मण्डलञ्च विशोधयेत ।'
पञ्चगव्यप्रमाणन्तु तत्रैव ।
पलमात्र दुग्धभाग गोमूत्र तावदिष्यते ।
घृतञ्च पलमात्र स्यात् गोमय तोलकद्वयम् ।
दधि प्रसृतिमात्र स्यात् पञ्चगव्यमिद स्मृतम् ।
अथवा पञ्चगव्यानां समानो भाग इष्यते ।
मूलमन्त्रेण मन्त्रज्ञ तेनैव परिशोधयेत् ।
तेन सर्व्वविशुद्धि स्यात् सर्व्वपापनिकृन्तनम् ॥"
इति तन्त्रसार । * ।
गृहशुद्धिर्गोचरशब्दे द्रष्टव्या ।
शुद्धोऽन्तःपुर, पुं (शुद्धोऽन्तःस्य पुर ।) बुद्धभेद ।
इति हेमचन्द्र ।
शुध ऌ य ञौ शौचे । इति कविकल्पद्रुम । (दिवा० पर० अक० अनिट् ।) ऌ अशुधत् । य, शुध्यति लोक स्नानात् । ञौ शोद्धा । इजधा शुध्यते नारीत्यत्र शुध्यतीति क्विप् शुध करोतीति ञौ कर्म्मणि यकि रूपम् । इति दुर्गादास ॥
शुन श गत्याम् । इति कविकल्पद्रुम । (तुदा०-पर० सक० सेट् ।) श शुनति । शोनिता ।
इति दुर्गादास ॥
शुन, पुं (शुनति सदा इतस्तत गच्छतीति शुन+क ।) कुक्कुर । यथा —
"कुक्कुरस्तु शुनि श्वान कपिलो मण्डल
शुन ॥"
इत्यमरटीकायां भरतधृतवाचस्पति ॥
(शुनति क्षिप्रं गच्छतीति । क । वायु । इति निघण्टुटीकायां देवराजयज्वा । ५ । ६ । ३४ ।
क्ली सुखम् । इति ऋग्वेदभाष्ये सायण । ४ । ५७ । ८ ।)
शुनःशेप, पुं मुनिविशेष । स तु ऋचीकमुनि पुत्र । अम्बरीषेण यज्ञार्थ क्रीत विश्वामित्रेण रक्षितश्च । इति रामायणे वाल्मीकीये बाल काण्डे ६१ सर्ग । (वरुणप्रसादात् जलोदररोग मोक्तुं हरिश्चन्द्र अजीगर्त्तपुत्र शुनःशेप पशु विधाय वरुणतुष्ट्यर्थं यज्ञमारब्धवान् । कथमपि छिन्नो विश्वामित्रस्तु तमसौ कृपाकुलमवलोक्य मोचयामास । तत प्रभृति शुनःशेपोऽयं विश्वामित्रस्य पुत्र इति प्रसिद्धोऽभूत् । एतद्वृत्तान्तस्तु देवीभागवते ७ स्कन्धे १६ अध्यायमारभ्य द्रष्टव्य ।) कुक्कुरशिश्ने, क्ली ।
शुनक, पुं, (शुनति इतस्तत गच्छतीति । शुन गतौ + "कुन् शिल्पिसंज्ञयोरपूर्व्वस्यापि ।" उणा० २ । ३२ । इति कुन् ।) कुक्कुर । इति राजनिर्घण्ट । (यथा महाभारते । १२ । १२० । १६ ।
"भिन्नभाण्डञ्च खट्वाञ्च कुक्कुट शुनक तथा ।
अप्रशस्तानि सर्व्वाणि यत्र वृक्षो यदि तत ॥"
ऋषिविशेष । यथा, महाभारते । २ । ७ । १० ।

"असितो देवलः सत्यः शूर्पमाली महाशिराः ।
चक्रावसुः सुमित्रश्च मैत्रेयः शुनको बलिः ॥" )
शुनकचञ्चुका, स्त्री, ( शुनकस्य चञ्चुरिव । इवार्थे कन् । ) क्षुद्रचञ्चुक्षुपः । इति राजनिर्घण्टः ॥
शुनकचिल्ली, स्त्री, (शुनकप्रिया चिल्ली ।) शाकविशेषः । तत्पर्य्यायः । श्वचिल्ली २ श्वानचिल्लिका ३ । अस्या गुणाः । कटुत्वम् । तीक्ष्णत्वम् । कण्डूव्रणनाशित्वञ्च । इति राजनिर्घण्टः ॥
शुनाशीरः, पुं, ( शुनाशीरौ वायुसूर्य्यौ अस्य स्त इति । अर्श-आदित्वादच् । ) इन्द्रः । इति भरतद्विरूपकोषः ॥
शुनासीरः, पुं, ( शुनासीरौ वायुसूर्य्यौ अस्य स्त इति । शुनासीर + अर्श आद्यच् । ) इन्द्रः । यथा,—
"शुनाशीरो हितालयः शुनासीरो हिदन्त्यकः।
तालव्यादिर्दन्त्यमध्यः शुनाषीरश्च दृश्यते ॥"
इत्यमरटीकायां भरतः ॥
( यथा, तैत्तिरीयसंहितायाम् । १।८।७।१ ।
"इन्द्राय शुनासीराय पुरोडाशमिति ॥" * ॥ वायुसूर्य्यौ । इति निघण्टुः ।५।३ ॥ "शु-शब्दार्थविशिष्टात् शुन गतौ इत्यस्मात् इगुपधलक्षणः कः । क्षिप्रं गच्छत्यन्तरिक्षमिति शुनो वायुः । यद्वा, शु-शब्दोपपदाच्छ्वयतेर्गतिकर्मणः अन्येष्वपि दृश्यते इति डः । भाष्ये तु शु-एतदर्थतो निर्वचनं प्रायेण । वक्तः 'फिञ्जीरवानीरगभीरगम्भीर-कुम्भीरशरीरकाश्मीरजम्बीरवीरतीरादयः' इति ईरन्-प्रत्ययटिलोपश्च निपात्यते । सदा सरणात् सीर आदित्यः । शुनश्च सीरश्च देवताद्वन्द्वे च इत्यड् ।' इति तट्टीकायां देवराजयज्वा ॥ * ॥ इन्द्रवायू । यथा, ऋग्वेदे । ४ । ५७ । ८ ।
"शुनासीरा शुनमस्मासु धत्तम् ॥"
"हे शुनासीरा इन्द्रवायू वाय्वादित्यौ वा ।" इति तद्भाष्ये सायणः ॥ )
शुनिः, पुं, (शुनति क्षिप्रं गच्छतीति । शुन गतौ + "इगुपधात् कित् ।" उणा० ४।११९। इति इन् । स च कित् ।) कुक्कुरः । इति हेमचन्द्रः ॥
शुनी, स्त्री, (श्वन् + गौरादित्वात् ङीष् ।) कुक्कुरी । इत्यमरः ॥ ( यथा, भागवते । ६ । १८ । ११ ।
"अहो निरीक्ष्यतामस्या दास्याः कर्म्म ह्यसाम्प्रतम् ।
असद्धार्य्यं धृतवती शुनीव हविरध्वरे ॥" )
कुष्माण्डी । इति राजनिर्घण्टः ॥
शुनीरः, पुं, कुक्कुरीसमूहः । इति त्रिकाण्डशेषः ॥
शुन्ध, क शुद्धौ । इति कविकल्पद्रुमः ॥ ( चुरा०-पर०-अक०-सेट् ।) क, शुन्धयति । अयमात्मनेपदीत्येके । इति दुर्गादासः ॥
शुन्ध, ञ शुद्धौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-उभ०-अक०-सक० च-सेट् ।) शुद्धिरिह शुद्धीभावः शुद्धीकरणञ्च । ञ, शुन्धति शुन्धते जलेन लोकः । यो गां शुन्धति वर्द्धनेति हलायुधः । गां वाचम् । इति दुर्गादासः ॥
शुन्ध्युः, पुं, ( शुन्ध शुद्धौ + "यजिमनिशुन्धिदसिजनिभ्यो युच् ।" उणा० ३ । २० । इति युच् ।) अग्निः । इत्युणादिकोषः ॥ ( आदित्यः । पक्षिविशेषः । यथा, ऋग्वेदे । १ । १२४ । ४ ।
"उपो अदर्शि शुन्ध्युवो न वक्षः ॥"
"शुन्ध्युरादित्यः सर्व्वेषां शोधकत्वात् * * * यद्वा, शुन्ध्युरिति जलचरः श्वेतवर्णः पक्षिविशेषः ।" इति तद्भाष्ये सायणः ॥ )
शुनृभ, श दीप्तिहिंसनयोः । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-अक०-हिंसने सक०-सेट् ।) श, शुभति शुम्भति । शुशोभ शुशुम्भ । इति दुर्गादासः ॥
शुन्यं, क्ली, शुनीसमूहः । इति त्रिकाण्डशेषः ॥ रिक्ते, त्रि । इति जटाधरः ॥ (यथा, साहित्यदर्पणे ३ परिच्छेदे ।
"शुन्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चित् शनैर्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ॥"
शुने हितम् । श्वन् + "उगवादिभ्यो यत् ।" ५।१।२। इति यत् । "शुनः सम्प्रसारणं वा च दीर्घत्वम् ।" इत्युक्त्या सम्प्रसारणम् ॥ )
शुभ, प श दीप्तिहिंसनयोः । इति कविकल्पद्रुमः ॥ ( तुदा०-पर०-अक०-हिंसने सक०-सेट् । ) प श, शुम्भति शुशोभ । प्राचस्तु क्षान्ते च शुभ शुनृभ भासनहिंसनयोरिति पठन्ति । इति दुर्गादासः ॥
शुभ, ऌ ङ दीप्तौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-अक०-सेट् । ) ऌ, अशुभत् । ङ, शोभते । न शोभति सभामध्ये इति गणकृतानित्यत्वादिति रमानाथः । वस्तुतस्तु शोभते शोभः पचादित्वादच् । ततः शोभ इवाचरतीति क्वौ साध्यम् । इति दुर्गादासः ॥
शुभं, क्ली, ( शोभते इति । शुभ दीप्तौ + कः । ) मङ्गलम् । इत्यमरः ॥ (यथा, कथासरित्सागरे । १२४ । ११२ ।
"अहो मूर्खोऽयमशुभं शुभमित्यभिनन्दति ॥")
पद्मकाष्ठम् । इति राजनिर्घण्टः ॥ ( उदकम् । इति निघण्टुः । १ । १२ ॥ शुभपर्य्याये शुभमित्यव्ययमप्यस्ति । इति काशिका । ५ । २ । १४० ॥ )
शुभः, पुं, ( शोभते इति । शुभ + कः । ) विष्कम्भादिसप्तविंशतियोगान्तर्गतत्रयोविंशयोगः तत्र जातफलम् । यथा, कोष्ठीप्रदीपे ।
"शुभप्रसूतः शुभकृन्नराणां
शुभोदयेष्टो विदुषां समाजे ।
करोति नित्यं शुभकर्म्म धीमान्
शोभाधिकः शोभनवेशधारी ॥"
शुभः, त्रि, ( शुभमस्यास्तीति । अर्श आद्यच् । ) क्षेमशाली । ( यथा, मनुः । ८ । २८७ ।
"यथायथा भवेद्दण्डः शुभेषु स्वगमर्षिषु ॥")
खनखारिपुरम् । इति मेदिनी । भे, ८ ॥
शुभंयुः, त्रि, ( शुभमस्यास्तीति । शुभम् + "अहं शुभमोर्युस् ।" ५ । २ । १४० । इति युस् । ) मङ्गलान्वितः । इत्यमरः ॥ ( यथा, रघुः । ८ । ६ ।
"अधिकं शुशुभे शुभंयुना
द्वितयेन द्वयमेव सङ्गतम् ॥")
शुभगन्धकं, क्ली, ( शुभो गन्धो यस्य । ) बोलम् । इति राजनिर्घण्टः ॥ मङ्गलगन्धयुक्ते, त्रि ॥
शुभग्रहः, पुं, ( शुभः ग्रहः । ) सौम्यग्रहः । स तु गुरुः शुक्रः पापायुतबुधः अर्द्धाधिकचन्द्रश्च । यथा,—
"अर्द्धो नेन्दुः कृष्णो राहुः शनिस्तेयुत इन्दुजः ।
रविः पापा भवन्त्येते शुभास्त्वन्ये प्रकीर्त्तिताः ॥"
इति सारसंग्रहः ॥
तद्वारे शुभकर्म्मकरणं यथा,—
"शुभग्रहार्कवारे च स्टट्टुचिप्रजुपेषु च ।
शुभराशिविलग्ने च शुभं शान्तिकपौष्टिकम् ॥"
इति संस्कारतत्त्वम् ॥
शुभङ्करः, त्रि, ( शुभं करोतीति । शुभ + कृ + खच् । ) मङ्गलकारकः । यथा, भूरिप्रयोगे ।
"क्षेमङ्करः क्षेमकारी मङ्गल्यशुभङ्करौ ॥"
स्वनामख्यातायुशास्त्रकारके, पुं ॥
शुभङ्करी, स्त्री, ( शुभं करोति या । कृ + खच् । ङीप् । ) पार्व्वती । इति शब्दरत्नावली ॥
शुभदः, पुं, ( शुभं ददातीति । दा + कः । ) अश्वत्थवृक्षः । इति राजनिर्घण्टः ॥ शुभदातरि, त्रि ॥ ( यथा, बृहत्संहितायाम् । ६ । २२ ।
"अपरस्यां स्वात्याद्यं
ज्येष्ठाद्यं चापि मण्डलं शुभदम् ॥")
शुभदन्ती, स्त्री, ( शुभौ दन्तौ यस्याः । ङीष् । ) पुष्पदन्तभयोषित् । सुदती । इति मेदिनी ॥
शुभपत्रिका, स्त्री, ( शुभानि पत्राणि यस्याः । स्वार्थे कन् । टापि अत इत्वम् । ) शालपर्णी । इति राजनिर्घण्टः ॥ मङ्गलपत्रिका च ॥
शुभवासनः, पुं, (शुभं शोभनं यथा तथा वासयति सुखमिति । शुभ + वस + णिच् + ल्युः ।) सुखवासकरगन्धः । यथा,—
"सुखवासकरो गन्ध आमोदी सुखवासनः ।
सुखवासन इत्येके शुभवासन इत्यपि ॥"
इति शब्दरत्नावली ॥
शुभसूचनी, स्त्री, ( शुभं सूचयतीति । सूच् + णिच् + ल्युः । स्त्रियां ङीष् । ) देवीविशेषः । सुवचनीति ख्याता । सा च स्त्रिया पूज्या । तस्याः ध्यानं यथा,—
"रक्ता पद्मचतुर्मुखी त्रिनयनी चामीकरालङ्कृता
पीनोत्तुङ्गकुचा दुकूलवसना हंसाधिरूढा परा ।
ब्रह्मानन्दमयी कमण्डलुकराऽभीतिहस्ता शिवा
ध्येया सा शुभसूचनी त्रिजगतःमम्बापदुद्धारिणी ॥"
रत्नाचारमार्त्तण्डः ॥
शुभस्थली, स्त्री, ( शुभा स्थली । ) यज्ञभूमिः । इति केचित् ॥ मङ्गलभूमिश्च ॥

छिद्रमस्यास्तीति । शुषि + "ऊषशुषिमुष्क-मधो रः ।" ५।२।१०७ । इति रः ।) विवरम् । वंशादिच्छिद्रम् । सरन्ध्रे, त्रि । इत्यमरः ॥ (आकाशः । इत्युज्ज्वलदत्तः । १ । ५० ॥)

शुषिरः, पुं, (शुषिर्बिलमस्यास्तीति । शुषि + रः ।) मूषिकः । इति मेदिनी ॥ अग्निः । इति विश्वः ॥

शुषिरा, स्त्री, (शुषिर + टाप् ।) नदी । इति शब्दरत्नावली ॥ नलीनामगन्धद्रव्यम् । इत्यमरः ॥

शुषिलः, पुं, (शुष + "शुषादिभ्यः किन् ।" उणा० १ । ५७ । इति इलच् । स च कित् ।) वायुः । इत्युणादिकोषः ॥

शुष्कः, त्रि, (शुष शोषे + क्तः । यद्वा, "इण्भीकापाशल्यतिमर्चिभ्यः कन्" । "शुषिभ्यः कक् ।" उणा० ३।४१ । इति कक् ।) निस्नेहः । शुकना इति भाषा । यथा,—

"शुष्कं पर्युषितं वापि नीतं वा दूरदेशतः ।
कुक्कुरस्य मुखाद्भ्रष्टं तदन्नं पावनं महत् ॥"

इति स्कान्दे उत्कलखण्डम् ॥

(निष्प्रयोजनम् । यथा, मनुः । ४ । १३९ ।
"शुष्कवैरं विवादञ्च न कुर्य्यात् केनचित् सह ॥")

शुष्कपत्रं, क्ली, (शुष्कं पत्रम् ।) स्वेदरहितदलम् । आतपादिशोषितपट्टशाकम् । नालिता इति सुक्ता इति च भाषा । तस्य गुणाः ।

"शुष्कपत्रं पयोमिश्रं पित्तश्लेष्मज्वरापहम् ॥
तत् शुष्कपत्रं जलदोषनाशनं
विशेषतः पित्तकफज्वरापहम् ।
जलञ्च तस्यापि च पित्तहारकं
सुरोचनं व्यञ्जनयोगकारकम् ॥"

इति राजवल्लभः ॥

शुष्कमत्स्यः, पुं, (शुष्को मत्स्यः ।) आतपादिना निस्नेहीकृतमीनः । शुक्टी माछ इति भाषा । तस्य गुणा मत्स्यशब्दे द्रष्टव्याः ॥

शुष्कमांसं, क्ली, (शुष्कं मांसम् ।) आतपादिना निस्नेहीकृतमांसम् । तत्पर्य्यायः । उत्तप्तम् २ वल्लूरम् ३ । इत्यमरः ॥ वल्लूरा ४ शुष्कनी ५ । इति तट्टीका ॥ अस्य गुणाः ।

"वृद्धानां रोचकं मांसं बालानां बलदं लघु ।
त्रिदोषहृद्याल्लघु शुष्कं शूलकरं गुरु ॥"

इति भावप्रकाशः ॥

शुष्करेवती, स्त्री, मातृकाविशेषः । यथा,—

"अस्थिभ्यश्च तथा काली दृष्टा पूर्व्वं महात्मना ।
तथा तद्रुधिरं पीतमन्धकानां महात्मनाम् ।
या चास्मिन् कथिता लोके नामतः शुष्क-
रेवती ॥"

इति मत्स्यपुराणे १५४ अध्यायः ॥

शुष्कलः, त्रि, आमिषम् । इत्युणादिकोषः ॥ आमिषाशी ॥ इत्यमरटीकायां भरतः ॥

शुष्कली, स्त्री, शुष्कमांसम् । मांसमात्रम् । यथा,

"शुष्कली शुष्कमांसे स्यान्मांसमात्रेऽपि
दृश्यते ।"

इति शौष्कलशब्दटीकायां भरतः ॥

शुष्कवृक्षः, पुं, (शुष्को वृक्ष इव ।) धवरक्षः । इति राजनिर्घण्टः ॥

शुष्कव्रणः, पुं, (शुष्को व्रणः ।) किणः । इति त्रिकाण्डशेषः ॥

शुष्काङ्गः, पुं, (शुष्कं अङ्गं यस्य ।) धवरक्षः । इति वैद्यकम् ॥ स्नेहशून्यावयवे, त्रि ॥

शुष्काङ्गी, स्त्री, (शुष्काणीव अङ्गानि यस्याः ।) गोधिका । इति शब्दचन्द्रिका ॥

शुष्कार्द्रं, क्ली, (शुष्कं आर्द्रम् ।) सुण्ठी । इति शब्दचन्द्रिका ॥

शुष्णः, पुं, (शुष्यत्यनेनेति । शुष + "तृषिशुषिरसिभ्यः कित् ।" उणा० ३ । १२ । इति नः । स च कित् ।) सूर्य्यः । इत्युणादिकोषः ॥ अग्निः । इति संक्षिप्तसारोणादिवृत्तिः ॥ (बले, क्ली । इति निघण्टुः । २ । ९ ॥)

शुष्मं, क्ली, (शुष्यत्यनेनेति । शुष शोषे + "अर्त्ति-स्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ।" उणा० १ । १४३ । इति मन् । स च कित् ।) तेजः । इति मेदिनी ॥ पराक्रमः । इति हेमचन्द्रः ॥

शुष्मः, पुं, (शुष्यत्यनेनेति । शुष + मन् ।) सूर्य्यः । इति मेदिनी ॥ वह्निः । इति त्रिकाण्डशेषः ॥ वायुः । पक्षी । इति संक्षिप्तसारोणादिवृत्तिः ॥ अर्च्चिः । यथा । शुष्मोऽर्च्चिषि हुताशने । इति शुभाङ्कः । इत्यमरटीकायां भरतः ॥

शुष्म, [न्] क्ली, (शुष + मनिन् । संज्ञापूर्व्वकत्वात् न गुणः ।) तेजः । इति जटाधरः ॥ शौर्य्यम् । इति हेमचन्द्रः ॥

शुष्मा, [न्] पुं, (शुष्यत्यनेनेति । शुष शोषे + मनिन् ।) अग्निः । चित्रकवृक्षः । इत्यमरः ॥ अदन्तोऽपि शुष्मेति सर्व्वस्वम् । इति भरतः ॥

शूकः, पुं क्ली, (शो तनूकरणे + "उलूकादयश्च ।" इति ऊकप्रत्ययेन साधु ।) शस्यतीक्ष्णाग्रम् । शुँया इति भाषा । तत्पर्य्यायः । किंशारुः २ । इत्यमरः ॥ शुङ्गा ३ कोशी ४ । इति हेमचन्द्रः ॥ दया । इति मेदिनी ॥ सविषास्थककुभादिजल-मलोद्भवजन्तुः । शूकप्रधानलिङ्गवृद्धिकरयोगः । तद्विवरणं यथा । अथ शूकदोषाधिकारः । तत्र शूकदोषस्य निदानमाह ।

"अक्रमाच्छेफसो वृद्धिं योऽभिवाञ्छति मूढधीः ।
व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः ॥"

अक्रमात् अशुचितवृद्धिक्रमात् । अनुचिता च वृद्धिः भूरिविकारजनकस्य शूकस्य योगेन । शूकजाः । शूको जलशूकः सविषो जलजन्तु-विशेषः । स तु जलमलोद्भवः । अस्थककुभ इत्यादिकः । तथा शूकप्रधानो लिङ्गवृद्धिकरो वात्स्यायनाद्युक्तो योगः शूक उच्यते । यथा,

"भल्लातकास्थिजलशूकमथाब्जपत्र-
मन्तर्विदह्य मतिमान् सह सैन्धवेन ।
एतद्विसृष्टहतीफलतोयपिष्ट-
मालेपितं महिषविड्विमलीकृतेऽङ्गे ॥
स्थूलं महद्धरतुरङ्गमलिङ्गतुल्यं
शेफः करोत्यभिमतं न हि संशयोऽस्ति ।"

इत्यादि । यत्तु जलशूकरहितमश्वगन्धादितैलं तद्युचितमेव लिङ्गवर्द्धनम् ।

"अश्वगन्धा वरी कुष्ठं मांसी सिंहीफलान्वितम् ।
चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत् ।
तत्तैलं मेढ्रपीनकर्णपालिविवर्द्धनम् ॥"

ते च शूकदोषा दश चाष्टौ च भवन्ति ॥ * ॥ तेष्वादौ सर्षपिकामाह ।

"गौरसर्षपसंस्थाना शूकदुर्भग्नहेतुका ।
पिडिका श्लेष्मवाताभ्यां ज्ञेया सर्षपिका तु सा ॥"

शूकदुर्भग्नहेतुका शूकनिमित्ता दुष्टयोनिनिमित्ता च ॥ * ॥ अष्ठीलिकामाह ।

"कठिना विषमैर्भुग्नैर्वायुनाष्ठीलिका भवेत् ।"

अष्ठीला लौहकारस्य भाण्डविशेषः । निहार इति लोके । तद्वत् कठिना इत्यष्ठीलिका । विषमैर्भुग्नैरिति वक्ष्यमाणशूकविशेषणम् । विषमैर्ह्रस्वदीर्घैः । भुग्नैः वक्रैः ॥ * ॥ ग्रथितमाह ।

"शूकैर्यत् पूरितं शश्वत् ग्रथितं नाम तत् कफात् ।"

यल्लिङ्गं सदा शूकैः पूरितं तद्ग्रथितत्वाद्ग्रथितम् ॥ * ॥ कुम्भिकामाह ॥

"कुम्भिका रक्तपित्तोत्था जम्ब्वास्थिनिभा
सिता ।"

कुम्भिका कुम्भतुल्यफलत्वात् ॥ * ॥ अलजीमाह ।

"अलजी स्यात्तथा याटक् प्रमेहपिडिकालजी ।
सा च रक्ता सिता स्फोटदारुणा कथिता च
सा ॥"

एषा रक्तपित्तनिमित्ता ज्ञेया ॥ * ॥ मृदितामाह ।

"मृदितं पीडितं यत्तु संरब्धं वातकोपतः ।
पाणिभ्यां भृशसंमूढे संमूढपिडिका भवेत् ॥"

शूकदोषे जाते पाणिभ्यां भृशसंमूढे मिन्दिते लिङ्गे अत्रापि वातकोपत इत्यनुवर्त्तते ॥ * ॥ अवमन्थमाह ।

"दीर्घा वाह्यश्च पिडिका दीर्य्यते मध्यमस्तु याग्
सोऽवमन्थः कफासृग्भ्यां वेदना लोमहर्षकृत् ॥"

दीर्घा दीर्घाङ्कुराः ॥ * ॥ पुष्करिकामाह ।

"पिडिका पिडिकाव्याप्ता पित्तशोणितसम्भवा ।
पद्मकर्णिकसंस्थाना ज्ञेया पुष्करिकेति सा ॥"

पिडिकाव्याप्ता क्षुद्रपिडिकाव्याप्ता । अतएव पद्मकर्णिकसंस्थाना ॥ * ॥ स्पर्शहानिमाह ।

"स्पर्शहानिञ्च जनयेच्छोणितं शूकदूषितम् ।"

अत्र स्पर्शासहत्वमेव लक्षणम् ॥ * ॥ उत्तमा-माह ।

"मुद्गमाषोपमा रक्ता रक्तपित्तोद्भवा च सा ।
एषोत्तमाख्या पिडिका शूके जीर्णसमुद्भवा ॥" *

शतपोनकमाह ।

"छिद्रैरणुमुखैर्लिङ्गं चिरं यस्य समन्ततः ।
वातशोणितजो व्याधिर्विज्ञेयः शतपोनकः ॥"

शतपोनकं चालनी तत्तुल्यत्वाच्छतपोनकः ॥" *

त्वक्पाकमाह ।

"वातपित्तकृते ज्ञेयस्त्वक्पाको ज्वरदाहकृत् ।"

एतस्य लिङ्गं त्वक्पाकलक्षणम् ॥ * ॥ शोणिता-र्व्वुदमाह ।

"कृष्णैः स्फोटैः सरक्ताभिः पिडकाभिः प्रपी-
डितम् ।

शूद्रः
शूद्रः

न्यः १० । इति जटाधरः ॥ अन्त्यवर्णः ११
जन्यः १२ । इति हेमचन्द्रः ॥ चतुर्थः १३ द्विज-
दासः १४ उपासकः १५ । इति राजनिर्घण्टः ॥
जम्बुद्वीपे तस्य संज्ञा सत्याङ्गः । शाल्मलद्वीपे
इठुन्धरः । कुशद्वीपे कुलकः । क्रौञ्चद्वीपे
सेवकः । शाकद्वीपे अनुव्रतः । पुष्करद्वीपे सर्व्वे
एकवर्णाः । अस्योत्पत्तिर्ब्रह्मणः पादात् । अस्य
शास्त्रनिरूपितो धर्म्मः जीविका च ब्राह्मण-
क्षत्त्रियवैश्यशुश्रूषा । अस्यैकाश्रमो गार्हस्थ्यः ।
इति श्रीभागवतम् ॥ ६ ॥ अथ शूद्रधर्म्मादि ।
"विप्राणामर्च्चनं नित्यं शूद्रधर्म्मो विधीयते ।
तद्द्वेषी तद्धनग्राही शूद्रश्चाण्डालतां व्रजेत् ॥
गृध्रः कोटिसहस्राणि शतजन्मानि शूकरः ।
श्वापदः शतजन्मानि शूद्रो विप्रधनापहा ॥
यः शूद्रो ब्राह्मणीगामी मातृगामी स पातकी ।
कुम्भीपाके पच्यते स यावद्वै ब्रह्मणः शतम् ॥
कुम्भीपाके तप्ततैले भुक्तः सर्पैर्दहन्निशम् ।
शब्दञ्च विकृताकारं कुरुते यमताडनात् ॥
तदा चाण्डालयोनिः स्यात् सप्तजन्मसु पातकी ।
सप्तजन्मसु सर्पश्च जलौका सप्तजन्मसु ॥
जन्मकोटिसहस्रञ्च विष्ठायां जायते कृमिः ।
योनिक्रिमिः पुंश्चलीनां स भवेत् सप्तजन्मसु ॥
गवां व्रणकृमिः स्याच्च पातकी सप्तजन्मसु ।
योनौ योनौ भ्रमत्येवं न पुनर्जायते नरः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८३ अध्यायः ॥
अपि च ।
"द्विजानां पादशुश्रूषा शूद्रैः कार्य्या सदा त्विह ।
पादप्रक्षालनं सर्व्वैर्भोज्यमुच्छिष्टमात्रकम् ॥
ते तु चक्रुस्तदा चैव तेभ्यो भूयः पितामहः ।
शुश्रूषार्थं मया यूयं तुरीये तु पदे कृताः ॥
द्विजानां क्षत्त्रवर्णानां वैश्यानाञ्च भवद्विधाः ।
त्रिभ्यः शुश्रूषणा कार्य्या इत्यवादीद्विचक्षणः ॥"
इति पाद्मे सृष्टिखण्डे १६ अध्यायः ॥
किञ्च ।
"शुश्रूषैव द्विजातीनां शूद्राणां धर्म्मसाधनम् ।
कारुकर्म्म तथाजीवः पाकयज्ञोऽपि धर्म्मतः ॥"
इति गारुड़े ४६ अध्यायः ॥
शूद्रराज्ये वासनिषेधो यथा,—
"धार्म्मिकैर्नावृते ग्रामे न व्याधिबहुले भृशम् ।
न शूद्रराज्ये निवसेत् न पाषण्डजनैर्वृते ॥"
शूद्राय मतिदाननिषेधो यथा,—
"न शूद्राय मतिं दद्यात् कृशरं पायसं दधि ।
नोच्छिष्टं वा मधु घृतं न च कृष्णाजिनं हविः ।
न चैवास्मै व्रतं ब्रूयात् न च धर्म्मान् वदेद्बुधः ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥ ७ ॥
शूद्राणां वेदाधिकारनिषेधो यथा,—
"त्रयो वर्णा महाभाग यज्ञसामान्यभागिनः ।
शूद्रा वेदपवित्रेभ्यो ब्राह्मणैस्तु बहिष्कृताः ॥"
इति वाराहे संसारचक्रनामाध्यायः ॥ ८ ॥
कलौ ते धन्याः । यथा,—
"कलिः साध्विति यत् प्रोक्तं शूद्रः साध्विति योषितः ।
यदाह भगवान् साधुर्धन्यश्चेति पुनः पुनः ॥"
इति विष्णुपुराणे ६ । २ । १२ ॥
तस्य मद्यपानादौ दोषो यथा,—
"तथा मद्यस्य पानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत् ॥"
इति शूद्रकमलाकरधृतपराशरवचनम् ॥
ब्राह्मणस्य तदन्नभोजननिषेधो यथा,—
"शूद्रान्नं ब्राह्मणोऽश्नन् वै मासं मासार्द्धमेव वा ।
तद्योनावभिजायेत सत्यमेतद्विदुर्बुधाः ॥
अधोदरस्थशूद्रान्नो मृतः श्वानोऽपि जायते ।
दादश दंश पाष्टौ च गृध्रशूकरपुष्कराः ॥
उदरस्थितशूद्रान्नो ह्यधीयानोऽपि नित्यशः ।
जुह्वन् वापि जपन् वापि गतिमूर्द्धं न विन्दति ॥
अमृतं ब्राह्मणस्यान्नं क्षत्त्रियान्नं पयः स्मृतम् ।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् ॥
तस्मात् शूद्रं न भिक्षेत यज्ञार्थं सद्विजातयः ।
श्मशानमिव सच्छूद्रस्तस्मात्तं परिवर्ज्जयेत् ॥
कणानामथवा भिक्षां कुर्य्याच्चातिविकर्षितः ।
सच्छूद्राणां गृहे कुर्व्वन् तत्पापेन न लिप्यते ॥
विशुद्धान्वयसंजातो निवृत्तो मद्यमांसतः ।
द्विजभक्तो वणिग्वृत्तिः शूद्रः स परिकीर्त्तितः ॥"
इति वृहत्पराशरसंहितायाम् ४ अध्यायः ॥ ९ ॥
अपि च । हारीतः ।
"शूद्रान्नेन तु भुक्तेन उदरस्थेन यो मृतः ।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चाधिगच्छति ॥"
शूद्रान्नं शूद्रस्वामिकान्नं तद्दत्तमपि भोजनकाले तद्गृहावस्थितं यत्तदपि शूद्रान्नम् । तदाहाङ्गिराः ।
"शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि ।
निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम् ॥"
अपिशब्दात् साक्षात्तद्दत्ततण्डुलादि । न तु तद्दत्तकपर्द्दकादिना क्रीतमपि । स्वगृहागते पुनरङ्गिराः ।
"यथा यतस्ततो ह्यापः शुद्धिं यान्ति नदीं गताः ।
शूद्राद्विप्रगृहेष्वन्नं प्रविष्टन्तु सदा शुचि ॥"
प्रविष्टं स्वत्वापादकप्रतिग्रहादिनेति शेषः । अत एव पराशरः ।
"तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः ।
द्विजातिकरसंस्पृष्टं सर्व्वं तद्धविरुच्यते ॥"
स्पृशति प्रतिगृह्णातीति कल्पतरुः ॥ तच्च संप्रोक्ष्य ग्राह्यमाह विष्णुपुराणम् ।
"संप्रोक्षयित्वा गृह्णीयाच्छूद्रान्नं गृहमागतम् ॥"
तच्च पात्रान्तरे ग्राह्यमाहाङ्गिराः ।
"स्वपात्रे यत्तु विन्यस्तं शूद्रो यच्छति नित्यशः ।
पात्रान्तरगतं ग्राह्यं दुग्धं स्वगृहमागतम् ॥"
एतेन स्वगृहमागतस्यैव शुद्धत्वं तद्गृहगतस्य शूद्रान्नदोषभागित्वं प्रतीयते । ततश्चैतादृगपि मुमुक्षुणा सर्व्वथा शूद्रान्नं न भोक्तव्यम् । इति शुद्धितत्त्वम् ॥ ९ ॥ कलौ शूद्रविशेषान्नभोजननिषेधो यथा,—
"शूद्रेषु दासगोपालकुलमित्रार्द्धशीरिणाम् ।
भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः ॥
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्त्तितानि कर्म्माणि व्यवस्थापूर्व्वकं बुधैः ॥"
इति तिथ्यादितत्त्वम् ॥
अपरञ्च ।
व्यास उवाच ।
"नाद्यात् शूद्रस्य विप्रोऽन्नं मोहाद्वा यदि वान्यतः ।
स शूद्रयोनिं व्रजति यस्तु भुङ्क्ते ह्यनापदि ॥
षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम् ।
जीवन्नेव भवेत् शूद्रो मृतः श्वा चाभिजायते ॥
ब्राह्मणक्षत्त्रियविशां शूद्रस्य च मुनीश्वराः ।
यस्यान्नेनोदरस्थेन मृतस्तद्योनिमाप्नुयात् ॥"
कलीतरत्र शूद्रविशेषान्नभोजनविधिर्यथा,—
"आर्द्धिकः कुलमित्रञ्च गोपालो दासनापितौ ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥
कुशीलवः कुम्भकारः क्षेत्रकर्म्मक एव च ।
एते शूद्रेषु भोज्यान्ना दत्त्वा स्वल्पं पणं बुधैः ॥
पायसं स्नेहपक्वञ्च यावकञ्चैव शक्तवः ।
पिण्याकञ्चैव तैलञ्च शूद्राद्ग्राह्यं द्विजातिभिः ॥"
इति कौर्म्मे उपविभागे १६ अध्यायः ॥
अपि च ।
"कन्दुपक्वानि तैलेन पायसं दधिशक्तवः ।
द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि ॥" * ॥
अन्यच्च ।
"शूद्रास्तु ये दानपरा भवन्ति
व्रतान्विता विप्रपरायणास्तु ।
अन्नं हि तेषां सततं सुभोज्यं
भवेद्द्विजैर्दृष्टमिदं पुरातनैः ॥
तस्माद्दानं प्रकर्त्तव्यं व्रतस्थेन प्रयत्नतः ।
सर्व्वपापविनाशाय महत्सुखविवृद्धये ॥"
इति वह्निपुराणे वृषदानाध्यायः ॥ * ॥
वैदिकेतरमन्त्रपाठे शूद्रादेरप्यधिकारः । वेद-
मन्त्रवर्ज्जं शूद्रस्येति छन्दोगाह्निकाचारचिन्ता-
मणिधृतस्मृतौ वेदेति विशेषणात् । एतच्च
पुराणमधिकृत्य ।
"अध्येतव्यं न चान्येन ब्राह्मणं क्षत्त्रियं विना ।
श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन ॥"
इति भविष्यपुराणवचनं पुराणमन्त्रेतरपरम् ॥
पञ्चयज्ञस्नानश्राद्धेषु पौराणिकमन्त्रोऽपि नि-
षिद्धः । शूद्रमधिकृत्य ।
"नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् ॥"
इति याज्ञवल्क्येन ॥
"ब्रह्मक्षत्त्रविशामेव मन्त्रवत् स्नानमिष्यते ।
तूष्णीमेव हि शूद्रस्य सनमस्कारकं मतम् ॥"
इति योगियाज्ञवल्क्येन ॥
श्राद्धमधिकृत्य ।
"अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्ज्जितः ।
अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥"
इति वराहपुराणेन च ॥

शीतलत्वम्। यथा,—
"शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन यस्यापरे।
किं वान्यत् कथयामि ते स्तुतिपदं त्वं जीविनां जीवनं
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निषेद्धुं क्षमः॥"
इति लक्ष्मणसेनः॥

शैथिल्यं, क्ली, (शिथिल+भावे ष्यञ्।) शिथिलत्वम्। शिथिलस्य भाव इत्यर्थे ष्यञ्प्रत्ययेन निष्पन्नम्॥ (यथा, मार्कण्डेये। १०६। २२।
"भवन्तु केशाः पलिताः वलयः सन्तु मे शुभे।
शैथिल्यमेतु मे कायः शतशत्योऽसि मानिनि॥")

शैनेयः, पुं, (शिनेर्गोत्रापत्यमिति। शिनि+"इतश्चानिञः।"४।१।१२२। इति ढक्।) सात्यकिः। स तु श्रीकृष्णसारथिः। इति त्रिकाण्डशेषः॥ (यथा, भागवते। १। ८। ७।
"आमन्त्र्य पाण्डुपुत्त्रांश्च शैनेयोद्धवसंयुतः।
द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः॥")

शैरीयकः, पुं, नीलझिण्टी॥ इति रत्नमाला॥ शैरेयकोऽपि पाठः। दन्त्यसादिश्च॥

शैलं, क्ली, (शिलाया भवम्। शिला+अण्।) शैलेयम्। तार्क्ष्यशैलम्। इति मेदिनी॥ शिलाजतु। इति राजनिर्घण्टः॥

शैलः, पुं, (शिलाः सन्त्यत्रेति। शिला+ज्योत्स्नादित्वादण्।) पर्व्वतः। इत्यमरः॥ (यथा, रघुः। ४। ७१।
"ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः।
वर्द्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः॥"
शिलासम्बन्धिनि, त्रि। यथा, भागवते। ११। २७। १२।
"शैली दारुमयी लौही लेप्या लेख्या च सैकती।
मनोमयी दारुमयी प्रतिमाष्टविधा स्मृता॥")

शैलकं, क्ली, (शैलमेव। स्वार्थे कन्।) शैलजम्। इति शब्दरत्नावली॥ (यथा, वृहत्संहितायाम्। ७७। १०।
"हरीतकीशङ्खघनद्रवाम्बुभि-
र्गुडोत्पलैः शैलकतस्करान्वितैः।
नवान्तपादादिविवर्द्धितैः क्रमात्
भवन्ति धूपा बहवो मनोहराः॥")

शैलगन्धं, क्ली, (शैलस्य गन्धो यत्र।) शावरचन्दनम्। इति राजनिर्घण्टः॥

शैलगर्भाह्वा, स्त्री, शिलावल्का। इति राजनिर्घण्टः॥

शैलजं, क्ली, (शैले पर्व्वते जायते इति। जन+डः।) सुगन्धिद्रव्यविशेषः। तत्पर्य्यायः। शीतशिवम् २ शैलेयम् ३ शिलासनम् ४ शिलेयम् ५ शीतलम् ६ शैलम् ७ कालानुसार्य्यम् ८ शैलकम् ९ वृद्धम् १० कालानुसारि ११ अश्मपुष्पम् १२ शैलाख्यम् १३ शिलापुष्पम् १४ वृषम् १५। इति रत्नमाला॥ अस्य गुणाः शैलेयशब्दे द्रष्टव्याः॥ पर्व्वतजाते, त्रि॥

शैलजा, स्त्री, (शैले जायतेऽसौ इति। जन+डः। टाप्।) सैंहली। गजपिप्पली। इति राजनिर्घण्टः॥ दुर्गा। हिमशैलजत्वात्। यथा,
"तत् श्रुत्वा भगवद्वाक्यं विस्मिता हिमशैलजा।"
इति शिवरात्रिव्रतकथा॥

शैलधन्वा, [न्] (पुं, (शैलवत् दृढं धनुरस्य। धनुषो धन्वन्नादेशः।) महादेवः। इति त्रिकाण्डशेषः॥

शैलधरः, पुं, (शैलस्य गोवर्द्धनस्य धरः।) श्रीकृष्णः। इति धनञ्जयः॥

शैलनिर्य्यासं, क्ली, (शैलस्य निर्य्यास इव रसो यत्र।) शैलेयम्। इति केचित्॥

शैलपत्त्रः, पुं, (शैलवत् सुगन्धि पत्त्रमस्य।) बिल्ववृक्षः। इति राजनिर्घण्टः॥

शैलबीजः, पुं, (शैलवत् कठिनं बीजमस्य।) भल्लातकवृक्षः। इति राजनिर्घण्टः॥

शैलभित्तिः, स्त्री, (शैलानां भित्तिर्भेदो यस्याः।) टङ्कः। इति जटाधरः॥

शैलराजः, पुं, (शैलानां राजा। "राजाहःसखिभ्यष्टच्।"५।४।९१। इति टच्।) हिमालयपर्व्वतः। (यथा, कुमारे। ७। ६८।
"मूर्द्धानमालि क्षितिधारणोच्च-
मुच्चैस्तरं वक्ष्यति शैलराजः॥")

शैलराजसुता, स्त्री, (शैलराजस्य सुता।) दुर्गा। यथा,—
"अरूपा परभावत्वाद्बहुरूपा क्रियात्मिका।
जाता शैलेन्द्रगेहे सा शैलराजसुता ततः॥"
इति देवीपुराणे ४५ अध्यायः॥
(गङ्गा। यथा, महाभारते। ३। १०९। ४।
"प्रयाचस्व महाबाहो शैलराजसुतां नदीम्।
पतमानां सरिच्छ्रेष्ठां धारयिष्ये त्रिविष्टपात्॥")

शैलवल्कला, पुं, (शैलं शिला वल्कलं यस्याः।) शिलावल्कला। इति राजनिर्घण्टः॥

शैलशिविरं, क्ली, (शैलानां शिविरमिव। समुद्रगर्भे बहुपर्व्वतावस्थानात्तथात्वम्।) समुद्रः। इति त्रिकाण्डशेषः॥

शैलसुता, स्त्री, (शैलस्य सुता।) पार्व्वती। यथा,—
"मातः शैलसुतासपत्नि वसुधाशृङ्गारहारावलि
स्वर्गारोहणवैजयन्ति भवतीं भागीरथीं प्रार्थये॥"
इति वाल्मिकीयगङ्गाष्टकम्॥
ज्योतिष्मती। इति राजनिर्घण्टः॥

शैलाख्यं, क्ली, (शैलमिति आख्या यस्य।) इति रत्नमाला॥

शैलाग्रं, क्ली, (शैलस्य अग्रम्।) शिखरम्। इति त्रिकाण्डशेषः॥

शैलाजं, क्ली, (शैलादाजायते इति। आ+जन्+डः।) शैलेयम्। इति राजनिर्घण्टः॥

शैलाटः, पुं, (शैले अटतीति। अट्+अच्।) देवलः। सिंहः। शुक्लकाचः। किरातः। इति मेदिनी॥

शैलादिः, पुं, नन्दी। यथा,—
"निमित्तानीदृशान् दृष्ट्वा भूतभव्यभवो विभुः।
शैलादिं प्राह वचनं सस्मितं शशिशेखरः॥
हर उवाच।
नन्दिन् जयोऽद्य भावी नो न कथञ्चित् पराजयः।
निमित्तानीह दृश्यन्ते शुभदानि गणेश्वर॥
तच्छम्भुवचनं श्रुत्वा शैलादिः प्राह शङ्करम्।
कः सन्देहो महादेव यत् त्वं जयसि शत्रवान्॥")
इति वामने ६५ अध्यायः॥

शैलाली, [न्] पुं, (शिलालिना प्रोक्तं नटसूत्रमधीते इति। शिलालि+"पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः।"४। ३। ११०। इति णिनिः।) नटः। इत्यमरः॥

शैलिक्यः, पुं, सर्व्वलिङ्गी। इति जटाधरः॥

शैली, स्त्री, (शीलस्येयमिति। शील+अण्। ङीष्।) सङ्केतः। यथा,—
"प्रज्ञप्तिः परिभाषा शैली सङ्केतसमयकाराश्च।"
इति त्रिकाण्डशेषः॥
"आचार्य्याणामियं शैली यत् सामान्येनाभिधाय विशेषेण विवृणोति।" इति मुग्धबोधटीकायां दुर्गादासः॥ (शिलाप्रतिमा। यथा, रामायणे। १। ६४। १२।
"यन्मां लोभयसे रम्भे कामक्रोधजयैषिणम्।
दशवर्षसहस्राणि शैली स्थास्यसि दुर्भगे॥")

शैलूषः, पुं, (शिलूषस्यापत्यमिति। शिलूष+अण्।) नटः। (यथा, माघे। १। ६९।
"अथोपपत्तिं छलनापरोऽपरा-
मवाप्य शैलूष इवैष भूमिकाम्॥")
बिल्ववृक्षः। इत्यमरः॥ धूर्त्तः। तालधारकः। इति शब्दरत्नावली॥

शैलूषिकः, पुं, नटवृत्त्यन्वेषी। यथा,—
"वृत्त्यन्वेषी नटानान्तु स तु शैलूषिकः स्मृतः॥"
इति ब्रह्मपुराणोक्तम्॥
इति प्रायश्चित्तविवेकः॥

शैलूषिकी, स्त्री, शैलूषिकजातिस्त्री। तद्गमनप्रायश्चित्तं यथा। संवर्त्तः।
"नटीं शैलूषिकीं चैव रजकीं वेणुजीविनीम्।
कामतस्तु यदा गच्छेच्चरेच्चान्द्रायणद्वयम्॥"
तत्राज्ञानतश्चान्द्रायणम्। चान्द्रायणे धेनुष्टकम्। इति प्रायश्चित्ततत्त्वम्॥

शैलेन्द्रः, पुं, (शैलानामिन्द्रः।) हिमालयः। यथा,—
"दृष्टमुक्तं ततो देवीमीषद्धासां व्यवस्थिताम्।
सिंहस्योपरिशैलेन्द्रशृङ्गे महति काञ्चने॥"
इति देवीमाहात्म्यम्॥

शैलेन्द्रस्थः, पुं, (शैलेन्द्रे तिष्ठतीति। स्था+कः।) भूर्जवृक्षः। इति राजनिर्घण्टः॥

शेफालि स्त्री, (शेरते इति शेफाः शयनशालिन्यः अलयो भृङ्गा यत्र ।) शेफालिका । इति शब्दरत्नावली ॥

शेफालिका, स्त्री, (शेफालि + स्वार्थे कन् ।) पुष्पवृक्षविशेषः । शिउली इति भाषा । (यथा,—
"शेफालिकां विदलितामवलोक्य तन्वी
प्राणान् कथञ्चिदपि धारयितुं प्रभुः सा ।
आकर्ण्य सम्प्रति रुतं चरणायुधानां
किं वा भविष्यति न वेद्मि तपस्विनी सा ॥"
इत्युद्भटः ।)
तत्पर्य्यायः । सुवहा २ निर्गुण्डी ३ नीलिका ४ । इत्यमरः ॥ चत्वारि शेफालिकामात्रे । शियलीति ख्यातनीलपुष्पायां शेफालिकायामिति केचित् । शेफालिकादिद्वयं शेफालिकामात्रे निर्गुण्ड्यादिद्वयं नीलपुष्पशेफालिकायामिति केचित् । इति तट्टीकायां भरतः ॥ शेफाली ५ मलिका ६ रजनीहासा ७ निशिपुष्पिका ८ । सा शुक्ला चेत् श्वेतसुरसा ९ भूतवेशी १० । इति शब्दरत्नावली ॥ शुक्लाङ्गी ११ शीतमञ्जरी १२ विजया १३ वातारिः १४ भूतकेशी १५ । अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । रूक्षत्वम् । वातकफाङ्गसन्धिवातगुदवातादिदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥

शेफाली, स्त्री (शेफालि + कृदिकारादिति वा ङीष् ।) शेफालिका । इति शब्दरत्नावली ॥ नीलसिन्धुवारः । इति भावप्रकाशः ॥

शेमुषी, स्त्री, (शेते इति शे मोहः । शी + विच् । तं मुष्णातीति । मुष स्तेये + मूलविभुजादित्वात् कः । गौरादित्वात् ङीष् । इत्यमरटीका ।) बुद्धिः । इत्यमरः । १ । ५ । १ ॥ (यथा, राजतरङ्गिण्याम् । ३ । २०६ ।
"क्लिष्टस्य हि विपर्य्येति सद्बुद्धस्यापि शेमुषी ॥")

शेल, ऋ चालगत्योः । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) ऋ, अशिशेलत् । इति दुर्गादासः ॥

शेलु, पुं, (शेलतीति । शेल गतौ + उः ।) बहुवारकवृक्षः । इत्यमरः ॥ (यथा, सुश्रुते । ४ । ३८ ।
"विदार्य्यैरावतीशेलुशाल्मलीधन्वनाङ्कुराः ॥"
तत्फलमपि । यथा मनुः । ५ । ६ ।
"शेलुं गव्यञ्च पेयूषं प्रयत्नेन विवर्ज्जयेत् ॥")

शेव पुं (शेते रेतः पातानन्तरमिति । शी + "इण्शीङ्भ्यां वन् ।" उणा० १ । १५२ । इति वन् ।) मेढ्रः । अहिः । उन्नतिः, स्त्री । इत्युणादिकोषः ॥ (क्ली, सुखम् । इति निघण्टुः । ३ । ६ ॥ त्रि, सुखकरम् । यथा, ऋग्वेदे । १ । ५८ । ६ ।
"मित्रं न शेवं दिव्याय जन्मने ।"
"मित्रं न शेवं यथा सखा सुखकारी भवति तद्वत् सुखकरमित्यर्थः ।" इति तद्भाष्ये सायणः ॥)

शेवधि, पुं (शेवं सुखं धीयतेऽस्मिन्निति । धा + कि ।) निधिः । इत्यमरः ॥ (यथा मनुः । २ । ११४ ।
"विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाय मां मादास्तथा स्यां वीर्य्यवत्तमा ॥")

शेवल क्ली, शैवालम् । इति शब्दरत्नावली ॥ (मनुष्यनाम । इति पाणिनिः । ५ । ३ । ८४ ॥)

शेवलिनी, स्त्री, (शेवलं शैवालमस्या अस्तीति । इनिः ।) नदी । इति राजनिर्घण्टः ॥

शेवाल क्ली, (शेते जले इति । शी + "शीङो धुक्लग्वलञ्वालनः ।" उणा० ४ । ३८ । इति वालन् ।) शैवालम् । इति शब्दरत्नावली ॥ (यथा, राजेन्द्रकर्णपूरे । २५ ।
"शृङ्गे शृङ्गे पतति यतते बालशेवालमूले
कूले लोलं किमपि कुरुते कर्म्म वैकुण्ठकूर्म्मः ॥")

शेवाली, स्त्री, आकाशमांसी । इति राजनिर्घण्टः ॥

शेष, क्ली, (शिष्यते यदिति । शिष + घञ् ।) प्रसादः । इति मेदिनी । षे २८ ॥

शेष पुं, (शेषति सङ्कर्षतीति । शिष हिंसायाम् + अच् ।) सङ्कर्षणः । स तु बलदेवः । (यथा, माघे । २ । ६८ ।
"निशम्य ताः शेषगवीरभिधातुमधोक्षजः ।
शिष्याय बृहतां पत्युः प्रस्तावमादिशद्दृशा ॥"
शिष वधे + भावे घञ् ।) वधः । अनन्तः । स च सर्पराजः । इति मेदिनी ॥ (यथा कुमारे । ३ । ३ ।
"आदिश्यते भूधरतामवेक्ष्य
कृष्णेन देहोद्वहनाय शेषः ॥")
तस्य ध्यानं यथा —
"पञ्चाशद्वदनयुक्तं चतुर्ब्बाहुं किरीटिनम् ।
नवाम्रपल्लवाकारं पिङ्गलश्मश्रुलोचनम् ॥
पीताम्बरधरं देवं शङ्खचक्रगदाधरम् ।
कराग्रे दक्षिणे पद्मं गदां तस्याप्यधः करे ।
दधानं सर्व्वलोकेशं सर्व्वाभरणभूषितम् ।
योगाश्रममध्ये श्रीमन्तमनन्तं पूजयेत्ततः ॥"
इति भविष्यपुराणम् ॥
गजः । नागः । स्वीकृतेतरवस्तु । इत्यजयपालः ॥ भगवतो द्वितीया मूर्त्तिः । यथा,—
"एका भगवतो मूर्त्तिर्ज्ञानरूपा शिवामला ।
वासुदेवाभिधाना सा गुणातीता सुनिष्कला ॥
द्वितीया कालसंज्ञान्या तामसी शेषसंज्ञिता ।
निहन्ति सकलांश्चान्ते वैष्णवी परमा तनुः ॥"
इति कौर्म्मे ४८ अध्यायः ॥
शेषशयनप्रकारो यथा —
'अनन्तस्तत्र गत्वा तु यत्र क्षीरोदसागरः ।
तत्र स्वयं श्रिया युक्तं सुषुप्तं जनार्द्दनम् ॥
तस्योपधानमकरोदनन्तो दक्षिणां फणाम् ।
उत्तरां पादयोश्चक्रे उपधानं महाबलः ।
तालवृन्तं तदा चक्रे स शेषः पश्चिमां फणाम् ॥
स्वयन्तु वीजयामास शेषरूपी जनार्द्दनम् ।
शङ्खं चक्रं नन्दकासिमिषुधी द्वे महाबलः ।
ऐशान्याञ्च फणया स दधे गरुडं तदा ॥
गदां पद्मञ्च शार्ङ्गञ्च तथैव विविधायुधम् ।
यानि चान्यानि तस्याथ प्राच्या फणया दधौ ॥
एवं कृत्वा स्वकं कार्य्यं शयनीयं तदा हरेः ।
भूत्वानन्तो जगन्नाथं परापरपतिं हरिम् ।
दधार शिरसानन्तः स्वयमेव स्वकां तनुम् ।
एवं ब्रह्मदिनस्यैव प्रमाणेन निशां हरिः ।
सन्ध्यासु समधिप्राप्य शेते नारायणोऽव्ययः ॥"
इति कालिकापुराणे २७ अध्यायः ॥

शेष, पुं क्ली, (शिष्यते इति । शिष + घञ् ।) उपयुक्तेतरवस्तु । इति मेदिनी ॥ शेषोऽवशिष्टमवशिष्टश्च शेषः शेषञ्चेत्यादि । अनन्ते तु शेषः पुंलिङ्ग एव शिष्टप्रयोगात् । उक्तञ्च शेषः । यथा । शङ्खपद्मौ निधिवाचकौ पुंलिङ्गौ जलजे तूभयलिङ्गौ । इति सर्व्वानन्दः । इत्यमरटीकायां भरतः ॥ ऋणादिशेषरक्षणनिषेधो यथा,—
"ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च ।
पुनः पुनः प्रवर्द्धन्ते तस्मात् शेषं न कारयेत् ॥"
इति गारुडे ११६ अध्यायः ॥
(अवशिष्टे, त्रि । यथा, रघुः । ४ । ६४ ।
"अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ॥"
तथाच रामायणे । २ । ९६ । ६२ ।
"दर्शितश्चास्तया नित्यं याः शेषा मम मातरः ॥")

शेषत्व क्ली, (शेषस्य भावः । शेष + त्व ।) उपकारित्वम् । पारार्थ्यम् । परोद्देश्यप्रवृत्तिकत्वम् । यथा,—
"शेषत्वमुपकारित्वं यथाह बादरिः ।
पारार्थ्यं शेषता तत्र सर्व्वेष्वस्तीति जैमिनिः ॥"
इत्यधिकरणमालायां माधवाचार्य्यः ॥
शेषस्य भावः । इति व्याकरणम् ॥

शेषरात्रि, स्त्री (शेषा अवशिष्टा रात्रिः ।) रात्रिशेषः । तत्पर्य्यायः । उषः २ अपररात्रः ३ । इति शब्दरत्नावली ॥

शेषा, स्त्री, (शिष्यतेऽसौ । शिष् + घञ् । टाप् ।) स्वनिर्माल्यार्पणम् । इति मेदिनी ॥ (यथा, कुमारे । ३ । २२ ।
"तथेति शेषामिव भर्त्तुराज्ञा-
मादाय मूर्ध्ना मदनः प्रतस्थे ॥")

शैक्ष, पुं (शिक्षामधीते इति । शिक्षा + अण् ।) प्राथमकल्पिकः । इत्यमरः ॥ हे प्रथमारब्धवेदाध्ययने । शिक्षणं शिक्षा । तामत्तात् अधीते इति अण् । शिक्षा प्रथमोपदेशः तस्मात् प्रभृति अन्योऽपि शिक्षां तामधीयते शैक्षः । ठचे कादिनि च प्रथमं शिक्षणीय कल्पं शास्त्रमधीयते प्राथमकल्पिकाः । इति भरतः ॥ (शिक्षा शीलमस्येति । 'छत्रादिभ्यो णः ।' ४ । ४ । ६२ । इति णः । शिक्षाशीले, त्रि ॥)

शैक्षिक, त्रि, शिक्षाशास्त्रवेत्ता । शिक्षां वेत्ति अधीते वा इत्यर्थे ष्णिकप्रत्ययेन निष्पन्नः ॥

शैखरिक, पुं (शिखरे प्रायेण भवतीति । शिखर + ठञ् ।) अपामार्गः । इत्यमरः ॥

शैखरेय, पुं, (शिखरे भवः । शिखर + ढञ् ।) अपामार्गः । इति भरतधृतरत्नकोषः ॥

शैत्य क्ली, (शीतस्य भावः । शीत + "वर्णदृढादिभ्यः ष्यञ् च ।" ५ । १ । १२३ । इति ष्यञ् ।)

शीतलत्वम् । यथा,—
"शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन यस्यापरे ।
किं वान्यत् कथयामि ते स्तुतिपदं त्वं जीविनां जीवनं
त्वञ्चेन्नीचपथेन गच्छसि पयः कस्त्वां निषेद्धुं क्षमः ॥"
इति काव्यसङ्ग्रहः ॥

शैथिल्यं, क्ली, ( शिथिल + भावे ष्यञ् । ) शिथिलत्वम् । शिथिलस्य भाव इत्यर्थे ष्यञ्प्रत्ययेन निष्पन्नम् ॥ ( यथा, मार्कण्डेये । १०८ । २२ ।
"भवन्तु केशाः पलिताः वलयः सन्तु मे शुभे ।
शैथिल्यमेतु मे कायः सत्यसन्धोऽस्मि मानिनि ॥")

शैनेयः, पुं, ( शिनेर्गोत्रापत्यमिति । शिनि + "इतश्चानिञः ।" ४।१।१२२। इति ढक् ।) सात्यकिः । स तु श्रीकृष्णसारथिः । इति त्रिकाण्डशेषः ॥ ( यथा, भागवते । १ । ८ । ७ ।
"आमन्त्र्य पाण्डुपुत्रांश्च शैनेयोद्धवसंयुतः ।
द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः ॥")

शैरीयकः, पुं, नीलझिण्टी । इति रत्नमाला ॥ शैरेयकोऽपि पाठः । इत्यमरादिश्च ॥

शैलं, क्ली, ( शिलाया भवम् । शिला + अण् । ) शैलेयम् । तार्क्ष्यशैलम् । इति मेदिनी ॥ शिलाजतु । इति राजनिर्घण्टः ॥

शैलः, पुं, (शिलाः सन्त्यत्रेति । शिला + "ज्योत्स्नादिभ्य" इत्यण् । ) पर्व्वतः । इत्यमरः ॥ ( यथा, रघुः । ४ । ७१ ।
"ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।
वर्द्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥"
शिलासम्बन्धिनि, त्रि । यथा, भागवते । ११ । २७ । १२ ।
"शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥")

शैलकं, क्ली, ( शैलमेव । स्वार्थे कन् । ) शैलजम् । इति शब्दरत्नावली ॥ ( यथा, बृहत्संहितायाम् । ७७ । १० ।
"हरीतकीशङ्खघनद्रवाम्बुभि-
र्गुडोत्पलैः शैलकमुस्तकान्वितैः ।
नवान्तपादादिविवर्द्धितैः क्रमात्
भवन्ति धूपा बहवो मनोहराः ॥")

शैलगन्धं, क्ली, ( शैलस्य गन्धो यत्र । ) शबरचन्दनम् । इति राजनिर्घण्टः ॥

शैलगर्भाह्वा, स्त्री, शिलावल्का । इति राजनिर्घण्टः ॥

शैलजं, क्ली, ( शैले पर्व्वते जायते इति । जन + डः । ) सुगन्धिद्रव्यविशेषः । तत्पर्य्यायः । शीतशिवम् २ शैलेयम् ३ शिलासनम् ४ शिलेयम् ५ शीतलम् ६ शैलम् ७ कालानुसार्य्यम् ८ शैलकम् ९ वृद्धम् १० कालानुसारि ११ अश्मपुष्पम् १२ शैलाख्यम् १३ शिलापुष्पम् १४ वृषभम् १५ । इति रत्नमाला । अस्य गुणाः शैलेयशब्दे द्रष्टव्याः ॥ पर्व्वतजाते, त्रि ॥

शैलजा, स्त्री, ( शैले जायतेऽसौ इति । जन + डः । टाप् । ) सैंहली । गजपिप्पली । इति राजनिर्घण्टः ॥ दुर्गा । हिमशैलजातत्वात् । यथा,
"तत् श्रुत्वा भगवद्वाक्यं विस्मिता हिमशैलजा ।"
इति शिवरात्रिव्रतकथा ॥

शैलधन्वा, [न्] पुं, ( शैलवत् दृढं धनुरस्य । धनुषो धन्वन्नादेशः । ) महादेवः । इति त्रिकाण्डशेषः ॥

शैलधरः, पुं, (शैलस्य गोवर्द्धनस्य धरः ।) श्रीकृष्णः । इति धनञ्जयः ॥

शैलनिर्य्यासं, क्ली, ( शैलस्य निर्य्यास इव रसो यत्र । ) शैलेयम् । इति केचित् ॥

शैलपत्रः, पुं, ( शैलवत् सुगन्धि पत्रमस्य ।) बिल्ववृक्षः । इति राजनिर्घण्टः ॥

शैलबीजः, पुं, ( शैलवत् काठिन्यं बीजमस्य । ) भल्लातकवृक्षः । इति राजनिर्घण्टः ॥

शैलभित्तिः, स्त्री, ( शैलानां भित्तिर्भेदो यस्याः । ) टङ्कः । इति जटाधरः ॥

शैलराजः, पुं, ( शैलानां राजा । "राजाहःसखिभ्यष्टच् ।" ५।४।९१। इति टच् ।) हिमालयपर्व्वतः । ( यथा, कुमारे । ७ । ६८ ।
"मूर्द्धाभिषिक्ता क्षितिधारणोच्च-
मुच्चैस्तरं वक्ष्यति शैलराजः ॥")

शैलराजसुता, स्त्री, (शैलराजस्य सुता ।) दुर्गा । यथा,—
"अरूपा परमा चाद्या स्वरूपा क्रियात्मिका ।
जाता शैलेन्द्रगेहे सा शैलराजसुता ततः ॥"
इति देवीपुराणे ४५ अध्यायः ॥
( गङ्गा । यथा, महाभारते । ३ । १०९ । ४ ।
"प्रयाचस्व महाबाहो शैलराजसुतां नदीम् ।
पतमानां सरिच्छ्रेष्ठां धारयिष्ये त्रिविष्टपात् ॥")

शैलवल्कला, पुं, ( शैलं शिला वल्कलं यस्याः । ) शिलावल्कला । इति राजनिर्घण्टः ॥

शैलशिविरं, क्ली, (शैलानां शिविरमिव । समुद्रगर्भे बहुपर्व्वतावस्थानत्वात्तथात्वम् ।) समुद्रः । इति त्रिकाण्डशेषः ॥

शैलसुता, स्त्री, ( शैलस्य सुता । ) पार्व्वती । यथा,—
"मातः शैलसुतासपत्नि वसुधाशृङ्गारहारावलि
स्वर्गारोहणवैजयन्ति भवतीं भागीरथीं प्रार्थये ॥"
इति वाल्मिकीयगङ्गाष्टकम् ॥
ज्योतिष्मती । इति राजनिर्घण्टः ॥

शैलाख्यं, क्ली, ( शैलमिति आख्या यस्य । ) इति रत्नमाला ॥

शैलाग्रं, क्ली, ( शैलस्य अग्रम् । ) शिखरम् । इति त्रिकाण्डशेषः ॥

शैलाजं, क्ली, (शैलादाजायते इति । आ + जन + डः । ) शैलेयम् । इति राजनिर्घण्टः ॥

शैलाटः, पुं, ( शैले अटतीति । अट् + अच् । ) देवलः । सिंहः । शुक्लकाचः । किरातः । इति मेदिनी ॥

शैलादिः, पुं, नन्दी । यथा,—
"निमित्तानीदृशान् दृष्ट्वा भूतभव्यभवो विभुः ।
शैलादिं प्राह वचनं सस्मितं शशिशेखरः ॥
हर उवाच ।
नन्दिन् जयोऽद्य भावी नो न कथञ्चित् पराजयः ।
निमित्तानीह दृश्यन्ते शुभदानि गणेश्वर ॥
तच्छम्भुवचनं श्रुत्वा शैलादिः प्राह शङ्करम् ।
कः सन्देहो महादेव यत् त्वं जयसि शत्रवान् ॥" )
इति वामने ६५ अध्यायः ॥

शैलाली, [न्] पुं, ( शिलालिना प्रोक्तं नटसूत्रमधीते इति । शिलालि + "पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः ।" ४ । ३ । ११० । इति णिनिः । ) नटः । इत्यमरः ॥

शैलिक्यः, पुं, सर्व्वलिङ्गी । इति जटाधरः ॥

शैली, स्त्री, ( शीलस्येयमिति । शील + अण् । ङीप् । ) सङ्केतः । यथा,—
"प्रश्नभिः परिभाषा शैली सङ्केतसमयकाराश्च ।"
इति त्रिकाण्डशेषः ॥
"आचार्य्याणामियं शैली यत् सामान्येनाभिधाय विशेषेण विवृणोति ।" इति मुग्धबोधटीकायां दुर्गादासः ॥ ( शिलाप्रतिमा । यथा, रामायणे । १ । ६४ । १२ ।
"वस्मां लोभयसे रम्भे कामक्रोधजयैषिणम् ।
दशवर्षसहस्राणि शैली स्थास्यसि दुर्भगे ॥" )

शैलूषः, पुं, (शिलूषस्यापत्यमिति । शिलूष + अण् ।) नटः । ( यथा, माघे । १ । ६९ ।
"जयोपपत्तिं छलनापरोऽपरा-
मवाप्य शैलूष इवैष भूमिकाम् ॥")
बिल्ववृक्षः । इत्यमरः ॥ धूर्त्तः । तालधारकः । इति शब्दरत्नावली ॥

शैलूषिकः, पुं, नटदृशान्वेषी । यथा,—
"दृशान्वेषी नटानान्तु स तु शैलूषिकः स्मृतः ॥"
इति ब्रह्मपुराणोक्तम् ॥
इति प्रायश्चित्तविवेकः ॥

शैलूषिकी, स्त्री, शैलूषिकजातिस्त्री । तद्गमनप्रायश्चित्तं यथा । संवर्त्तः ।
"नटीं शैलूषिकीं चैव रजकीं वेणुजीविनीम् ।
कामतस्तु यदा गच्छेच्चरेच्चान्द्रायणद्वयम् ॥"
ततश्चाज्ञानतश्चान्द्रायणम् । चान्द्रायणे धेनवष्टकम् । इति प्रायश्चित्ततत्त्वम् ॥

शैलेन्द्रः, पुं, ( शैलानामिन्द्रः । ) हिमालयः । यथा,—
"ददृशुस्ते ततो देवीमीषद्धास्यां व्यवस्थिताम् ।
सिंहस्योपरि शैलेन्द्रशृङ्गे महति काञ्चने ॥"
इति देवीमाहात्म्यम् ॥

शैलेन्द्रस्थः, पुं, ( शैलेन्द्रे तिष्ठतीति । स्था + कः ।) भूर्जवृक्षः । इति राजनिर्घण्टः ॥

शैलेय क्ली, (शिलायां भवम्। शिला+ढक्।) शैलजाख्यगन्धद्रव्यम्। शैलेयक इति दन्तू च इति छडिला इति च ख्यातम्। तत्पर्य्यायो यथा,—
'शैलेयं शैलजं वृद्धं शिलापुष्पं शिलोद्भवम्। स्थविरं पलितं चौर्य्यं तथा कालानुसार्य्यकम्। शिलोत्थञ्च शिलादद्रु शैलाख्यं गिरिपुष्पकम्। शिलाप्रसूनं सुभगं शैलकं षोडशाह्वयम्।' अस्य गुणाः। 'शैलेयं शिशिरं तिक्तं सुगन्धि कफपित्तजित्। दाहतृष्णावमिश्वासव्रणदोषविनाशनम्।" इति राजनिर्घण्टः। अपि च। "शैलेयन्तु शिलापुष्पं वृद्धं कालानुसार्य्यकम्। शैलेयं शीतलं हृद्यं कफपित्तहरं लघु। कण्डूकुष्ठाश्मरीदाहविषहृद्गुदरक्तहृत्।" इति भावप्रकाशः॥ ॥ तालपर्णी। सैन्धवम्। इति मेदिनी।

शैलेय, त्रि, (शैले भवम्। शैल+ढक्।) शैलसम्भवम्। इति हेमचन्द्रः॥ शिलातुल्यम्। इति शब्दरत्नावली॥ (शिलेव। शिला+"शिलाया ढ।" ५।३।१०२। इति योगविभागेन ढञ्।)

शैलेय पुं, (शैले भवः। शैल+ढक्।) सिंहः। भ्रमरः। इति शब्दरत्नावली॥

शैलेयी, स्त्री, (शैले भवा। शैल+ढक्। ङीष्।) पार्व्वती। इति त्रिकाण्डशेषः॥

शैलोद्भवा स्त्री (शैलात् उद्भवो यस्याः।) क्षुद्रपाषाणभेदी। इति राजनिर्घण्टः॥

शैल्य, त्रि, (शिला+ष्यञ्।) शिलासम्बन्धि। शिलायाः इदं इत्यर्थे ष्यञ्प्रत्ययेन निष्पन्नम्।

शैव क्ली, शैवालः। इति शब्दचन्द्रिका। (शिवमधिकृत्य कृतो ग्रन्थः। शिव+अण्।) शिवपुराणम्। यथा—
"अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते। ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा।" इति मलमासतत्त्वे विष्णुपुराणम्॥ (शिवस्येदमिति। शिव+अण्।) शिवसम्बन्धि, त्रि। (यथा कथासरित्सागरे।४०।९८। "प्रापदायतनं शैवं सद्यःसत्यास्थशोभितम्।")

शैव पुं, (शिव+अण्।) वस्तुकः। धुस्तूरः। इति राजनिर्घण्टः। आचारविशेषः। यथा—
"षडाद्ययोगयुक्तो यस्तेदेवीं विधानतः। यावद्धारं समाविष्य तावत् शैवं प्रचक्षते।" इत्याचारभेदतन्त्रम्॥ ॥ शिवोपासकः। तत्पर्य्यायः। चौर्ड्डशैवलिकः २। इति त्रिकाण्डशेषः। एतद्भेदा यथा,—
"तस्मात्तकार भगवान् चातुर्व्वर्ण्यं ददार्थिने। आश्रमान् येषां मुख्यानि नानोत्क्षिविदितानि च। आद्यं शैवं परिख्यातमन्यत् पाशुपतं मुने। अन्येयं कालवदनं चतुर्थञ्च कपालिकम्। शैवं आसीत स्वयं शक्तिमर्हिष्ठस्य प्रियः सुतः। तस्य शिष्यो बभूवाथ गोपायन इति श्रुतः। महापाशुपतश्चासीद्भारद्वाजस्तपोधनः। तस्य शिष्योऽप्यभूद्राजा ऋषभः सोमकेश्वरः। कालास्यो भगवानासीदापस्तम्बस्तपोधनः। तस्य शिष्यो वक्री वैश्यो नाम्ना क्राथेश्वरी मुने। महाव्रती च धनदस्तस्य शिष्यश्च वीर्य्यवान्। कर्णोदर इति ख्यातो जात्या शूद्रो महातपाः। एव स भगवान् ब्रह्मा पूजनाय शिवस्य च। कृत्वा तु चातुराश्रम्यं स्वमेव भवनं गतः।"
इति वामने ६ अध्यायः॥ ॥ तस्य स्वरूपं यथा। आयान्तं शैवमालोक्याह।
'श्रीमानवाप्रेति जटालमौलिं
आद्यन्तमालम्बितमध्यभागः।
विभूतिसम्भूषितभास्वदङ्गो
रुद्राक्षमालाकलितोर्द्धदेहः।"
इति दिङ्मोदतरङ्गिण्याः २ तरङ्गः।

शैवल, क्ली, (शेते इति। शी+"शीङो धुक्लक्वलञ्वालनः।"उणा० ४।३८। इति वलञ्।) पद्मकाष्ठम्। शैवाले, पुं। इति मेदिनी। (यथा, कुमारे।५।९।
"न षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते।")
विश्वसमीपस्थितप्रभागवर्तिगिरिविशेषः। यथा, रामायणे।७।८८।१३।
'शैवलस्योत्तरे पार्श्वे रम्ये सुमहत् सरः।")

शैवलिनी, स्त्री, (शैवलमस्या अस्तीति। इनि।) नदी। इत्यमरः॥

शैवाल क्ली, (शी+बाहुलकात् वालञ्।) जलजद्रव्यविशेषः। शेयाला इति भाषा। (यथा महाभारते।४।१०।१०।
"प्रावर्त्तयन्नदीं घोरां शोणितोदां तरङ्गिणीम्। कचशैवालसम्बाधां युगान्ते कालनिर्मिताम्।')
तत्पर्य्यायः। जलनीली २ शैवलः ३ इत्यमरः। शेपालम् ४ प्रवलम् ५ शीवलम् ६ शेपाल ७ जलनीलिका ८। इति वाचस्पतिः॥ जलनील ९। इति मुकुटादयः। इति भरतः॥ सेवालम् १० शैवालम् ११ वारिकाभरं १२ शैवलम् १३ सलिलकुन्तलम् १४ कटपर्णी १५ अम्बुतालम् १६। इति शब्दरत्नावली॥ वारक १७ जलकेश १८ कावारम् १९। इति हारावली॥ जलजम् २०। अस्य गुणाः। शीतलत्वम्। स्निग्धत्वम्। सन्तापशमनाशित्वञ्च। इति राजनिर्घण्टः॥

शैव्य, पुं श्रीकृष्णस्य घोटकविशेषः। यथा,—
"तुरगा शैव्यसुग्रीवमेघपुष्पवलाहकाः।"
इति त्रिकाण्डशेषः॥
(यथा च महाभारते।१।२२१।१।
"रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि। शैव्यसुग्रीवयुक्तेन किङ्किणीजालमालिना।")
मालववंशेनापतिविशेषः। यथा,—
"धृष्टकेतुश्चेकितानः काशीराजश्च वीर्य्यवान्। पुरुजित् कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः।"
इति श्रीभगवद्गीतायाम्।१।५।
(स्त्री, शतीषस्य राज्ञः पत्नी। इति महाभारतम्।१५।४४। सगरस्य राज्ञः पत्नी। सा तु असमञ्जसो जननी। यथा, महाभारते। ३।१०७।३६।
"असमञ्जा इति ख्यातः सगरस्य सुतोऽभवत्। य शैव्यां जनयामास पौराणां स हि दारकान्। गलेषु क्रोशतो गृह्य नद्यां चिक्षेप दुर्ब्बलान्।")
शिवसम्बन्धि, त्रि।

शैशव, क्ली शिशोर्भावः। (शिशु+"इगन्ताच लघुपूर्व्वात्।" ५।१।१३१। इति अण्।) बाल्यम्। इत्यमरः॥ यथा,
"शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्। वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्।"
इति रघुवंशे १ सर्गः॥

शैशिर पुं (शिशिरे काले भवः। शिशिर+अण्।) श्यामचटकः। इति राजनिर्घण्टः॥ शिशिरसम्बन्धि, त्रि। यथा। श्रुतिः। तप तपस्यौ शैशिरावृतू। इति तिथ्यादितत्त्वम्॥

शैष्योपाध्यायिका, स्त्री, (शिष्योपाध्यायानां भावः कर्म वा। शिष्योपाध्याय+"द्वन्द्वमनोज्ञादिभ्यश्च।"५।१।१३३। इति वुञ्।) शिष्याध्यापना। इति सिद्धान्तकौमुदी॥

शो, य निशाने। इति कविकल्पद्रुमः॥ (दिवा० पर० सक० अनिट्।) निशानमिह तनूकरणम्। य, श्यति शस्त्रं शूरः। इति दुर्गादासः॥

शोक, पुं, (शुच+घञ्।) चित्तविकलता। इष्टवियोगादुचित्तजम्। इति नागोजीभट्टः॥ बन्धादिवियोगजनिता मनःपीडा। इति भावप्रकाशः॥ तत्पर्य्यायः। मन्युः २ शुक् ३। इत्यमरः॥ शुचा ४ खेदः ५। इति शब्दरत्नावली॥ शोचनम् ६ खेदः ७। इति हेमचन्द्रः॥ तन्निवारणहेतुर्य्यथा,—
"भरत पतितं दीनं शोचन्तं सुभृशं तदा। शोचमानं वशिष्ठस्तु वारयामास हेतुभिः॥ शोचमानास्तु यत्स्नेहा बान्धवाः सुहृदस्तथा पातयन्ति गतं स्वर्गादश्रुपातेन राघव। भूरिद्युम्नो गतः स्वर्गं पुत्त्रेण पतितः पुनः। शोचितो बन्धुभिश्च स्नेहात् परित्यज।"
इति वह्निपुराणम्॥
अपि च। अथ शोकापनोदनम्। याज्ञवल्क्यः
"क्षतोदकान् समुत्तीर्णान् मृद्वाद्वलसंस्थितान्। स्नातानपवदेयुस्तानितिहासैः पुरातनैः। मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम्। य करोति स सम्मूढो जलबुद्बुदसन्निभे। पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः। कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना। गन्त्री वसुमती नाशमुदधिर्दैवतानि च। फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति। श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः। अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः।"
इति शुद्धितत्त्वम्॥

अन्यच्च ।

श्रीभगवानुवाच ।

"अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥
अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि ॥
देही नित्यमवध्योऽयं देहे सर्व्वस्य भारत ।
तस्मात् सर्व्वाणि भूतानि न त्वं शोचितुमर्हसि ।"

इति श्रीभगवद्गीतायाम् २ अध्यायः ॥

शोकनाशः, पुं, ( शोकस्य नाशो यस्मात् । ) अशोकवृक्षः । इति राजनिर्घण्टः ॥

शोकहारी, स्त्री, ( शोकं हरतीति । हृ + अण् । ङीष् । ) वनबर्व्वरिका । इति राजनिर्घण्टः ॥

शोकारिः, पुं, ( शोकस्य अरिः । ) कदम्बवृक्षः । इति शब्दचन्द्रिका ॥

शोचनं, क्ली, ( शुच् + ल्युट् । ) शोकः । इति हेमचन्द्रः ॥ ( शोचतीति । शुच शोके + "लुट-ङ्क्रम्यदन्द्रम्यच्चरमीति ।" ३ । २ । १५० । इति युच् । शोकशीले, त्रि ॥ )

शोचना, स्त्री, शोकोत्पादना । शोचि णिङन्तात् ङनप्रत्ययान्तादाप्प्रत्ययनिष्पन्ना । इति संक्षिप्तसारव्याकरणम् ॥

शोचिः, [स्] क्ली, (शुच्यत्यनेनेति । शुच + "अर्चिशुचिहुसृपीति ।"उणा० २।१०८। इति इसिः ।) प्रभा । इत्यमरः ॥ ( यथा, भागवते ।३।१५।२६।

"तद्विश्वगुर्व्वधिकृतं भुवनैकवन्द्यं
दिव्यं विचित्रविबुधाग्र्यविमानशोचिः ॥")

शोचिष्केशः, पुं, (शोचींषि केशा इव यस्य । नियतं समासेऽनुत्तरपदस्थस्येति षत्वम् । ) अग्निः । चित्रकवृक्षः । इत्यमरः ॥ ( क्वचित् वाच्यलिङ्गोऽपि । यथा, ऋग्वेदे । १ । ४५ । ६ ।

"शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे ।"
"शोचिष्केशं दीप्तिरूपकेशोपेतम् ।" इति तद्भाष्ये सायणः ॥ )

शोच्यः, त्रि, अवरः । क्षुद्रः । इति शब्दमाला ॥

शोटीर्य्यं, क्ली, वीर्य्यम् । इति शब्दरत्नावली ॥

शोठः, त्रि, मूर्खः । अलसः । इति मेदिनी ॥ धूर्त्तः । नीचः । पामरः । इति शब्दरत्नावली ॥

शोण, ऋ गतौ । वर्णे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-वर्णे अक०-सेट् ।) वर्णेऽत्र रक्तीभावः । शोणति सूर्य्यः सन्ध्यायाम् । इति दुर्गादासः ॥

शोणं, क्ली, (शोणतीति । शोण वर्णे + पचाद्यच् ।) सिन्दूरम् । रुधिरम् । इति राजनिर्घण्टः ॥

शोणः, पुं, ( शोण वर्णे + अच् । ) रक्तोत्पलतुल्यवर्णः । तत्पर्य्यायः । कोकनदच्छविः २ । इत्यमरः ॥ रक्तोत्पलनिभः ३ । इति शब्दरत्नावली ॥ रक्तोत्पलाभः ४ । इति जटाधरः ॥ ( यथा, भागवते । १ । ११ । २ ।

"स उच्चकाशे धवलोदरोदरो-
ऽप्युरुक्रमस्याधरशोणशोणिमा ॥")

नदविशेषः । तत्पर्य्यायः । हिरण्यवाहुः । इत्यमरः ॥ हिरण्यवाहः ३ । इति भरतः ॥ स तु अमरकण्टकदेशात् पाटलिपुत्रे गङ्गायां मिलितः । तज्जलगुणाः । रुचिदत्वम् । सन्तापशोषापहत्वम् । पथ्यत्वम् । वह्निकरत्वम् । बलवीर्य्याङ्गपुष्टिप्रदत्वञ्च । इति राजनिर्घण्टः ॥ अग्निः । श्योनाकः । लोहिताश्वः । कोकनदच्छाये, त्रि । इति मेदिनी ॥ समुद्रविशेषः । इति धरणिः ॥ रक्तेक्षुः । श्योनाकप्रभेदः । इति राजनिर्घण्टः ॥ ( रक्तवर्णे, त्रि । यथा, कुमारे । १ । ७ ।

"न्यस्ताक्षरा धातुरसेन यत्र
भूर्ज्जत्वचः कुञ्जरबिन्दुशोणाः ॥")

शोणकः, पुं, ( शोण एव । स्वार्थे कन् । ) श्योनाकवृक्षः । इत्यमरः ॥

शोणझिण्टिका, स्त्री, ( शोणा रक्तवर्णा झिण्टिका । ) रक्तसैरेयः । इति राजनिर्घण्टः ॥

शोणझिण्टी, स्त्री, ( शोणा रक्तवर्णा झिण्टी । ) कुरुवकः । कण्टकिनी । इति राजनिर्घण्टः ॥

शोणपत्रः, पुं, ( शोणवत् रक्तानि पत्राणि यस्य । ) रक्तपुनर्नवा । इति राजनिर्घण्टः ॥

शोणपद्मकं, क्ली, (शोणं रक्तवर्णं पद्मकम् ।) रक्तकमलम् । इति राजनिर्घण्टः ॥

शोणपुष्पकः, पुं, ( शोणं पुष्पं यस्य । कन् । ) कोविदारः । इति राजनिर्घण्टः ॥

शोणपुष्पी, स्त्री, ( शोणवत् पुष्पमस्याः । ङीष् । ) सिन्दूरपुष्पी । इति राजनिर्घण्टः ॥

शोणरत्नं, क्ली, ( शोणं रक्तवर्णं रत्नम् । ) महारागमणिः । इत्यमरः ॥

शोणा, स्त्री, ( शोणो रक्तवर्णोऽस्त्यस्या इति । अच् । टाप् ।) शोणवर्णयुक्ता । इति जटाधरः ॥

शोणाकः, पुं, वृक्षविशेषः । शोणा इति ख्यातः । तत्पर्य्यायः । श्योनाकः २ शुकनासः ३ ऋक्षः ४ दीर्घवृन्तः ५ कुटन्नटः ६ अरलुः ७ स्वर्णवल्कलः ८ भ्रान्तशात्त्रवः ९ । इति शब्दमाला ॥ मण्डूकपर्णः १० पत्रोर्णः ११ नटः १२ कट्वङ्गः १३ टुण्टुकः १४ शोणकः १५ अरलः १६ । इत्यमरः ॥ स्योनाकः १७ अरटुः १८ । इति तट्टीका ॥

शोणितं, क्ली, ( शोण वर्णे + क्तः । ) शोण + जातार्थे इतच् वा । ) रक्तम् । इत्यमरः ॥ ( यथा, मनुः । ११ । २०८ ।

"शोणितं यावतः पांशून् संगृह्णाति महीतले ।
तावन्त्यब्दसहस्राणि तत्कर्त्ता नरके वसेत् ॥")

तस्योत्पत्तिर्गर्भस्थस्य पञ्चमे मासि भवति । इति सुखबोधः ॥ कुङ्कुमम् । इति राजनिर्घण्टः ॥

शोणितचन्दनं, क्ली, ( शोणितवत् चन्दनम् । ) रक्तचन्दनम् । इति राजनिर्घण्टः ॥

शोणितपुरं, क्ली, ( शोणिताख्यं पुरम् । ) वाणपुरम् । इति त्रिकाण्डशेषः ॥

शोणिताह्वयं, क्ली, ( शोणितं आह्वयो यस्य । ) कुङ्कुमम् । इति रत्नमाला ॥

शोणितोत्पलं, क्ली ( शोणितवत् रक्तमुत्पलम् । ) रक्तोत्पलम् । इति केचित ॥

शोणी, स्त्री, ( शोणं + "शोणात् प्राचाम् ।" ४ । १ । ४३ । इति ङीष् । ) रक्तोत्पलतुल्यवर्णा स्त्री । इति व्याकरणं जटाधरश्च ॥ ( वड़वा । इति काशिका ॥ )

शोणोपलः, पुं, (शोणो रक्तवर्ण उपलः ।) माणिक्यम् । इति राजनिर्घण्टः ॥

शोथः, पुं, ( श्ववतीति । श्वि गतौ + बाहुलकात् थन् । इत्युणादिवृत्तौ उज्ज्वलः । २ । ४ । ) रोगविशेषः । तत्पर्य्यायः । शोफः २ श्वयथुः ३ । इत्यमरः ॥ शोथकः ४ । इति शब्दरत्नावली ॥ अथ शोथाधिकारः । तत्र शोथस्य विप्रकृष्टनिदानमाह ।

"शुद्धामयाभक्तकृशाबलानां
क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ।
दध्याममृच्छाकविरोधिपिष्ट-
गरोपसृष्टान्ननिषेवणञ्च ॥
अर्शांस्यचेष्टा वपुषो ह्यशुद्धि-
र्म्मर्म्मोपघातो विषमा प्रसूतिः ।
मिथ्योपचारः प्रतिकर्म्मणाञ्च
निजस्य हेतुः श्वयथोः प्रदिष्टः ॥"

शुद्धिर्व्वमनविरेकादि । आमयाः पाण्डुरोगादयः । अभक्तं अभोजनम् । आमः अपक्वो भक्तस्य रसः । पिष्टगरोपसृष्टान्नं पिष्टो यो गरः संयोगजं विषं तेन उपसृष्टमन्नम् । वपुषो ह्यशुद्धिः शोधनार्हस्य वपुषोऽशोधनम् । मर्म्मोपघातः दोषकृत एव ज्ञेयः । बाह्यहेतुकृतस्तु मर्म्मोपघातः आगन्तुजशोथहेतुरेव । विषमा प्रसूतिः आमगर्भपतनादिना । प्रतिकर्म्मणां वमनादीनां पञ्चकर्म्मणाम् । मिथ्योपचारः असम्यक्करणम् । श्वयथोः शोथस्य । निजस्य आत्मीयस्य । सन्निकृष्टस्य हेतोर्व्वातादेः । हेतुः रूक्षोष्णमधुरादि ॥ * ॥ सन्निकृष्टनिदानमाह ।

"दोषैः पृथक् द्वयैः सर्व्वैरभिघाताद्विषादपि ।
सर्व्वो हेतुविशेषैस्तु रूपभेदो नवात्मकः ॥"*॥

संप्राप्तिपूर्व्वकं सामान्यं लक्षणमाह ।

"रक्तपित्तकफान् वायुर्दुष्टो दुष्टान् बहिःशिराः ।
नीत्वा रुद्धगतिस्तैर्हि कुर्य्यात् त्वङ्मांससंश्रयम् ।
उत्सेधं संहतं शोथं तमाहुर्निचयादतः ॥
सगौरवं स्यादनवस्थितत्वं
सोत्सेधमुष्माथ शिरातनुत्वम् ।
सलोमहर्षश्च विवर्णता च
सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥"

उत्सेधः उन्नतत्वं किं विशिष्टमुत्सेधं यतः पूर्व्वोक्तान्निचयात् रक्तपित्तकफवातानां सङ्घातात् । संहतं घनम् । तमुत्सेधं शोथमाहुरित्यन्वयः ॥ * ॥ तस्य शोथस्य किं स्यादित्या-

शुष्कमूलकतैलम् । इति शोथाधिकारः । इति भावप्रकाशः ॥

शोथकः, पुं, ( शोथ इव । स्वार्थे कन् । ) शोथः । इति शब्दरत्नावली ॥

शोथघ्नी, स्त्री, (शोथं हन्तीति । हन् + "अमनुष्य-कर्त्तृके च ।" ३।२।५३ । इति टक् । ) पुनर्नवा । इत्यमरः ॥ शालपर्णी । इति राजनिर्घण्टः ॥ शोथनाशके, त्रि ॥

शोथजित्, पुं, ( शोथं जयतीति । जि + क्विप् । ) भल्लातकः । इति त्रिकाण्डशेषः ॥

शोथजिह्मः, पुं, ( शोथे जिह्मः कुटिल इव । तन्नाशकत्वात् । ) पुनर्नवा । इति त्रिकाण्डशेषः ॥

शोथहृत्, पुं, ( शोथं हरति नाशयतीति । हृ + क्विप् । ) भल्लातकः । इति रत्नमाला ॥ शोथहारके, त्रि ॥

शोधनं, क्ली, (शोधयतीति । शुध + णिच् + ल्युः ।) कङ्कुष्ठम् । इति राजनिर्घण्टः ॥ ( शुध + भावे ल्युट् । ) शौचम् । इति शुधधात्वर्थदर्शनात् ॥ ( प्रायश्चित्तम् । यथा, मनुः । ११ । १६१ ।

"अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता ।
अज्ञानभुक्तन्तूत्तार्य्यं शोध्यं वाप्याशु शोधनैः ॥")

विष्ठा । इति शब्दचन्द्रिका ॥ कासीसम् । इति राजनिर्घण्टः ॥ विहिताविहितमासादिविचारणम् । यथा,—

"सूर्य्यग्रहणकालेन समानो नास्ति कश्चन ।
तत्र यद्यत् कृतं सर्व्वमनन्तफलदं भवेत् ।
न मासतिथिवारादिशोधनं सूर्य्यपर्व्वणि ॥"

इति मलमासतत्त्वम् ॥ * ॥

धातुनिर्दोषीकरणम् । यथा,—

"पत्तलीकृतपत्राणि हेम्नो वह्नौ प्रतापयेत् ।
निषिञ्चेत्तप्ततप्तानि तैलतक्रे च काञ्जिके ॥
गोमूत्रे च कुलत्थानां कषाये तु त्रिधा त्रिधा ।
एवं हेम्नः परेषाञ्च धातूनां शोधनं भवेत् ॥" * ॥

व्रणादिपरिष्करणम् । यथा,—

"व्रणस्य त्वविशुद्धस्य क्वाथः शुद्धिकरः परः ।
पटोलनिम्बपत्रस्य सर्व्वत्रैव प्रयुज्यते ॥
वातिके दशमूलानां क्षीरिणां पैत्तिके व्रणे ।
आरग्वधादेः कफजे कषायः शोधनं हितम् ॥"

अपि च ।

"अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा ।
अथवा क्वाथनेनैव सिद्धमुष्णोदकं वदेत् ।
श्लेष्मामवातमेदोघ्नं वस्तिशोधनदीपनम् ॥"

इति च भावप्रकाशः ॥ * ॥

लिखितपत्रादेः प्रमाणीकरणम् । यथा । लेख्यशोधनमाह कात्यायनः ।

"स्वहस्तलेख्यसन्देहे जीवतो वा मृतस्य च ।
तत् स्वहस्तकृतैरन्यैः पत्रैस्तल्लेखनिर्णयः ॥" * ॥

विरुद्धलिखितस्य शुद्धीकरणम् । यथा । तच्छोधनमाह बृहस्पतिः ।

"न्यूनाधिकं पूर्व्वपक्षं तावद्वादी विशोधयेत् ।
न दद्यादुत्तरं यावत् प्रत्यर्थी सभ्यसन्निधौ ॥"

कात्यायनः ।

"शोधयेत् पूर्व्वपक्षन्तु यावन्नोत्तरदर्शनम् ।
उत्तरेणावरुद्धस्य निवृत्तं शोधनं भवेत् ॥"

इति व्यवहारतत्त्वम् ॥ * ॥

अङ्कस्य हरणम् । यथा,—

"भाज्याद्धरः शुध्यति यद्गुणः स्या-
दन्त्यात् फलं तत् खलु भागहारे ।
समेन केनाप्यपवर्त्त्य हार-
भाज्यौ भवेद्वा सति सम्भवे तु ॥"

इति लीलावती ॥

अन्यत् शुद्धिशब्दे द्रष्टव्यम् ॥

शोधनः, पुं, ( शोधयतीति । शुध + णिच् + ल्युः ।) निम्बूकः । इति राजनिर्घण्टः ॥

शोधनः, त्रि, (शोधयतीति । शुध + णिच् + ल्युः ।) शुद्धिकारकः । यथा,—

"महासान्तपनः शुद्धो तप्तकृच्छ्रस्तु पावकः ।
जलोपवासकृच्छ्रस्तु ब्रह्मकूर्चस्तु शोधनः ॥"

इति प्रायश्चित्ततत्त्वधृतविश्वामित्रवचनम् ॥

यथा च ।

"तैलसैन्धवयष्ट्याह्वनिम्बपत्रनिशायुतैः ।
त्रिवृद्दन्तयुतैः पिष्टैः प्रलेपो व्रणशोधनः ॥"

इति भावप्रकाशः ॥

शोधनी, स्त्री, ( शोध्यतेऽनयेति । शुध शौचे + णिच् + करणे ल्युट् । ङीप् । ) संमार्ज्जनी । इत्यमरः ॥ ताम्रवल्ली । नीली । इति राजनिर्घण्टः ॥

शोधनीबीजं, क्ली, (शोधन्या बीजमिव बीजं यस्य ।) जयपालः । इति राजनिर्घण्टः ॥

शोधनीयः, त्रि, शोधितव्यः । शोध्यः । शुधधातोरनीयप्रत्ययेन निष्पन्नः ॥ ( यथा, कथासरित्सागरे । ५३ । १४१ ।

"भुक्तं मया तदन्नं यत् शोधनीयं मयापि तत् ॥")

शोधितं, त्रि, (शोध्यते स्मेति । शुध + णिच् + क्तः ।) मक्षिकाद्यपनयनेन कृतशोधनव्यञ्जनादि । तत्पर्य्यायः । संस्पष्टम् २ । इत्यमरभरतौ ॥ अपि च ।

"व्यञ्जने केशकीटादिशुद्धे संस्पष्टशोधिते ॥"

इति शब्दरत्नावली ॥

अपनीतमलम् । तत्पर्य्यायः । निर्णिक्तम् २ मृष्टम् ३ निःशोध्यम् ४ अनवस्करम् ५ । इत्यमरभरतौ ॥

शोफः, पुं, (शु गतौ । बाहुलकात् फः ।) शोथः । इत्यमरः ॥ ( यथा, सुश्रुते । १ । १४ ।

"तद्दुष्टं शोणितमनिर्ह्रियमाणं कण्डूशोफरागदाहपाकवेदना जनयेत् ॥")

शोफघ्नी, स्त्री, ( शोफं हन्तीति । हन + टक् । ङीप् । ) शालपर्णी । रक्तपुनर्नवा । इति राजनिर्घण्टः ॥

शोफनाशनः, पुं, ( शोफं नाशयतीति । नश + णिच् + ल्युः ।) नीलवृक्षः । इति राजनिर्घण्टः ॥ शोथनाशके, त्रि ॥

शोफहृत्, पुं, (शोफं हरतीति । हृ + क्विप् ।) भल्लातकः । इति भावप्रकाशः ॥ शोथहारके, त्रि ।

शोभनं, क्ली, ( शोभते इति । शुभ + ल्युः । ) पद्मम् । इति शब्दचन्द्रिका ॥ ( शुभ + भावे ल्युट् । ) शुभम् । यथा, भागवते ।५।१६।२१।

"अहो वतैषां किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः ॥" )

शोभनः, पुं, (शुभ + ल्युः ।) ग्रहः । इति धरणिः ॥ विष्कम्भादिसप्तविंशतियोगान्तर्गतपञ्चमयोगः । इति मेदिनी ॥ तत्र जातफलम् ।

"स्याच्छोभनः शोभनयोगजन्मा
दक्षो विपक्षप्रतिलब्धवित्तः ।
सद्वृत्तरम्याङ्गवपुः सुधीरः
संमानयुक्तो मनुजः प्रवीणः ॥"

इति कोष्ठीप्रदीपः ॥

शोभनः, त्रि, ( शोभते इति । शुभ + ल्युः । ) सुन्दरः । इति मेदिनी ॥ अस्य पर्य्यायो मनोज्ञशब्दे द्रष्टव्यः ॥

शोभनकः, पुं, ( शोभते इति । शुभ + ल्युः । ततः कन् । ) शोभाञ्जनवृक्षः । इति शब्दचन्द्रिका ॥ शोभनशब्दकारके, त्रि ॥

शोभना, स्त्री, (शोभन + टाप् ।) हरिद्रा । गोरोचना । इति राजनिर्घण्टः ॥

शोभा, स्त्री, शोभन्तेऽनया । ( शुभ + करणे घञ् । टाप् ।) दीप्तिः । तत्पर्य्यायः । कान्तिः २ द्युतिः ३ छविः ४ । इत्यमरः ॥ द्युती ५ छवी ६ । इति तट्टीका ॥ अभिख्या ७ । इति जटाधरः ॥ शुभा ८ भाः ९ श्रीः १० भासा ११ भा १२ । इति शब्दरत्नावली ॥ सुषमा १३ छाया १४ विभा १५ रुक्प्रिया १६ भानम् १७ भातिः १८ कमा १९ रमा २० । इति राजनिर्घण्टः ॥ तस्या लक्षणम् ।

"सा शोभा रूपभोगाद्यैर्यत् स्यादङ्गविभूषणम् ।
शोभैव कान्तिराख्याता मन्मथाप्यायनोज्ज्वला ॥"

इत्युज्ज्वलनीलमणिः ॥ * ॥

गोपीविशेषः । यथा,—

"दृष्ट्वा शोभया गोप्या युक्तं चन्दनकानने ।
सद्यो मच्छन्दमात्रेण तिरोधानं कृतं त्वया ॥
शोभा देहं परित्यज्य जगाम चन्द्रमण्डलम् ।
ततस्तस्याः शरीरञ्च स्निग्धं तेजो बभूव ह ॥
संविभज्य त्वया दत्तं हृदयेन विदूयता ।
रत्नाय किञ्चित् स्वर्णाय किञ्चिन्मणिवराय च ॥
किञ्चित् स्त्रीणां मुखाब्जेभ्यः किञ्चिद्राजाय किञ्चन ।
किञ्चित् किशलयेभ्यश्च पुष्पेभ्यश्चापि किञ्चन ॥
किञ्चिच्चन्दनपङ्केभ्यस्तोयेभ्यश्चापि किञ्चन ।
किञ्चित् फलेभ्यः शस्येभ्यः सुपक्वेभ्यश्च किञ्चन ।
किञ्चिन्नूतनवस्त्रेभ्यो दुग्धेभ्यश्चापि किञ्चन ॥"

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ६ अध्यायः ॥ * ॥

हरिद्रा । गोरोचना । इति राजनिर्घण्टः ॥

शोभाञ्जनः, पुं, ( शोभं रुचिरं अञ्जनं यस्मात् । ) वृक्षविशेषः । शजिना इति भाषा । तत्पर्य्यायः । शिग्रुः २ तीक्ष्णगन्धकः ३ अक्षीवः ४ मोचकः ५ । इत्यमरः ॥ तीक्ष्णगन्धः ६ सुतीक्ष्णः ७ घन-

अपि च।
"उद्धृताभिर्मृत्तिकाभ्यामित्थं नारद यत्नतः।
कृत्वोत्सर्गं ततः कुर्य्यात् शौचं मूत्रपुरीषयोः॥"
इति पाद्मोत्तरखण्डे १०६ अध्यायः॥
प्रसङ्गादशौचमत्र लिख्यते।
व्यास उवाच।
"दशाहं प्राहुरशौचं सपिण्डेषु विपश्चितः।
मृतेषु वाथ जातेषु ब्राह्मणानां द्विजोत्तमाः॥
नित्यानि चैव कर्म्माणि काम्यानि च विशेषतः।
न कुर्य्याद्विहितं किञ्चित् स्वाध्यायं मनसापि च॥
शुचीनक्रोधनान् भव्यान् शालाग्नौ भावयेद्द्विजान्।
शुष्कान्नेन फलैर्व्वापि वैतानान् जुहुयात्ततः॥
न स्पृशेयुरिमानन्ये न च तेभ्यः समाहरेत्।
चतुर्थे पञ्चमे वाह्नि संस्पर्शः कथितो बुधैः॥
सूतके तु सपिण्डानां संस्पर्शो न प्रदुष्यति।
सूतकं सूतिकाञ्चैव वर्जयित्वा नृणां पुनः॥
दशाहं निर्गुणे प्रोक्तमशौचं चातिनिर्गुणे।
एकद्वित्रिगुणैर्युक्तं चतुस्त्र्येकदिनैः शुचिः॥
दशाहात्तु परं सम्यगधीयीत जुहोति च।
चतुर्थे तस्य संस्पर्शं मनुः प्राह प्रजापतिः॥
क्रियाहीनस्य मूर्खस्य महारोगिण एव च।
यथेष्टाचरणस्याहुर्मरणान्तमशौचकम्॥
त्रिरात्रं दशरात्रं वा ब्राह्मणानान्तु शावकम्।
प्राक् संस्कारात् त्रिरात्रं स्याद्दशाहादूर्द्ध्वं दशाहकम्॥
ऊनद्विवार्षिके प्रेते मातापित्रोस्तदिष्यते।
त्रिरात्रेण शुचिस्त्वन्यो यदि ह्यत्यन्तनिर्गुणः॥
अदन्तजातमरणे पित्रोरेकाहमिष्यते।
जातदन्ते त्रिरात्रं स्याद्यदि स्यातान्तु निर्गुणौ॥
आदन्तजननात् सद्य आचूडादेकरात्रकम्।
त्रिरात्रमौपनयनात् सपिण्डानामुदाहृतम्॥
जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः।
सद्यःशौचं सपिण्डानां कर्त्तव्यं सोदरस्य च॥
ऊर्द्ध्वं दशाहादेकाहं सोदरो यदि निर्गुणः।
अथोर्द्ध्वं दन्तजननात् सपिण्डानामशौचकम्॥
एकाहं निर्गुणानान्तु चूडादूर्द्ध्वं त्रिरात्रिकम्।
अदन्तजातमरणं सम्भवेद्यदि सत्तमाः॥
एकरात्रं सपिण्डानां यदि तेऽत्यन्तनिर्गुणाः।
व्रतादेशात् सपिण्डानामर्व्वाक् स्नानं विधीयते।
सर्व्वेषामेव गुणिनामूर्द्ध्वन्तु विषमं पुनः॥
अर्व्वाक् षण्मासतः स्त्रीणां यदि स्याद्गर्भसंस्रवः।
तदा माससमैस्तासामशौचं दिवसैः स्मृतम्॥
अत ऊर्द्ध्वन्तु पतने स्त्रीणां स्याद्दशरात्रकम्।
सद्यःशौचं सपिण्डानां गर्भस्रावाच्च वा ततः॥
गर्भच्युतावहोरात्रं सपिण्डेऽत्यन्तनिर्गुणे।
यथेष्टाचरणे ज्ञातौ त्रिरात्रमिति निश्चयः॥
यदि स्यात् सूतके सूतिर्म्मरणे वा मृतिर्भवेत्।
शेषेणैव भवेच्छुद्धिरहःशेषे त्रिरात्रकम्।
मरणोत्पत्तियोगे तु मरणाच्छुद्धिरिष्यते॥
अघवृद्धिमदाशौचमूर्द्ध्वं चेत्तेन शुध्यति।
अथ चेत् पञ्चमीं रात्रिमतीत्य परतो भवेत्।
अघवृद्धिमदाशौचं तदा पूर्व्वेण शुध्यति॥
देशान्तरगतं श्रुत्वा सूतकं शावमेव तु।
तावदप्रयतो मर्त्त्यो यावच्छेषः समाप्यते॥
अतीते सूतके प्रोक्तं सपिण्डानां त्रिरात्रकम्।
तथैव मरणे स्नानमूर्द्ध्वं संवत्सराद्यदि॥
वेदार्थविदधीयानो योऽग्निमान् वृत्तिकर्षितः।
सद्यःशौचं भवेत्तस्य सर्व्वावस्थासु सर्व्वदा॥
स्त्रीणामसंस्कृतानान्तु प्रदानात् परतः सदा।
सपिण्डानां त्रिरात्रं स्यात् संस्कारो भर्त्तुरेव च॥
अहस्त्वदत्तकन्यानामशौचं मरणे स्मृतम्।
ऊनद्विवर्षमरणे सद्यःशौचमुदाहृतम्॥
आदन्तात् सोदरे सद्य आचौडादेकरात्रकम्।
आप्रदानात् त्रिरात्रं स्याद्दशरात्रमतः परम्॥
मातामहानां मरणे त्रिरात्रं स्यादशौचकम्।
एकोदकानां मरणे सूतके चैतदेव हि॥
पक्षिणी योनिसम्बन्धे बान्धवेषु तथैव च॥
एकरात्रं समुद्दिष्टं गुरौ सब्रह्मचारिणाम्।
प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितिः॥
गृहे मृतासु दत्तासु कन्यकासु त्र्यहं पितुः।
परपूर्व्वासु भार्य्यासु पुत्त्रेषु कृतकेषु च॥
त्रिरात्रं स्यात्तथाचार्य्यभार्य्यास्वन्यगतासु च।
आचार्य्यपुत्त्रे पत्न्याञ्च अहोरात्रमुदाहृतम्॥
एकाहं स्यादुपाध्याये स्वग्रामे श्रोत्रियेऽपि च।
त्रिरात्रमसपिण्डेषु स्वगृहे संस्थितेषु च॥
एकाहं वा स्वसुर्य्यां स्यादेकरात्रञ्च शिष्यके।
त्रिरात्रं श्वश्रूमरणे श्वशुरे चैतदेव हि॥
सद्यःशौचं समुद्दिष्टं सगोत्रे संस्थिते सति॥
शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति॥
क्षत्रविट्शूद्रदायादा ये स्युर्विप्रस्य बान्धवाः।
तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते॥
राजन्यवैश्यावप्येवं हीनवर्णासु योनिषु।
स्वमेव शौचं कुर्य्यातां विशुद्ध्यर्थं न संशयः॥
सर्व्वे तूत्तमवर्णानां शौचं कुर्य्युरतन्द्रिताः।
तद्वर्णविधिदृष्टेन स्वन्तु शौचं स्वयोनिषु॥
षड्रात्रं वा त्रिरात्रं स्यादेकरात्रं क्रमेण तु।
वैश्यक्षत्रियविप्राणां शूद्रेष्वाशौचमेव तु॥
अर्द्धमासोऽथ षड्रात्रं त्रिरात्रं द्विजपुङ्गवाः।
शूद्रक्षत्रियविप्राणां वैश्येष्वाशौचमिष्यते॥
षड्रात्रं द्वादशाहञ्च विप्राणां वैश्यशूद्रयोः।
अशौचं क्षत्रिये प्रोक्तं क्रमेण द्विजपुङ्गव॥
शूद्रविट्क्षत्रियाणान्तु ब्राह्मणे संस्थिते सति।
दशरात्रेण शुद्धिः स्यादित्याह कमलोद्भवः॥
असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत्।
अशित्वा च सहोषित्वा दशरात्रेण शुध्यति॥
यद्यन्नमत्ति तेषान्तु त्रिरात्रेण ततः शुचिः।
अन्नदन्नमदन्नैव न च तस्मिन् गृहे वसन्॥
सोदरेष्वेतदेव स्यान्मातुराप्तेषु बन्धुषु।
दशाहेन शवस्पर्शी सपिण्डश्चैव शुध्यति॥
षड्रात्रेणाथवा सर्व्वे त्रिरात्रेणाथवा पुनः।
अनाथञ्चैव निर्हृत्य ब्राह्मणं धनवर्ज्जितम्॥
स्नात्वा संप्राश्य तु घृतं शुध्यन्ति ब्राह्मणादयः।
अवरश्चेद्वरं वर्णमवरं वा वरो यदि॥
अशौचे संस्पृशेत् स्नेहात्तदाशौचेन शुध्यति॥
प्रेतीभूतं द्विजं विप्रो योऽनुगच्छति कामतः।
स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति॥
एकाहात् क्षत्त्रिये शुद्धिर्वैश्यानां स्यात् द्व्यहेन तु।
शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः॥
अनस्थिसञ्चिते शूद्रे रौति चेद्ब्राह्मणः स्वकः।
त्रिरात्रं स्यात्तथाशौचमेकाहं त्वन्यथा स्मृतम्॥
अस्थिसञ्चयनादर्व्वागेकाहं वैश्यशूद्रयोः।
अन्यथा चैव सज्योतिर्ब्राह्मणे स्नानमेव तु॥
अनस्थिसञ्चिते विप्रे ब्राह्मणो रौति चेत्तदा।
स्नानेनैव भवेच्छुद्धिः सचैलेन न संशयः॥
यस्तैः सहाशनं कुर्य्याच्छयनादीनि चैव हि।
बान्धवो वा परो वापि स दशाहेन शुध्यति॥
यस्तेषामन्नमश्नाति सकृदेवापि कामतः।
तदाशौचे निवृत्तेऽसौ स्नानं कृत्वा विशुध्यति॥
यावत्तदन्नमश्नाति दुर्भिक्षोपहतो नरः।
तावन्त्यहान्यशौचं स्यात् प्रायश्चित्तं ततश्चरेत्॥
दाहाद्यशौचं कर्त्तव्यं द्विजानामग्निहोत्रिणाम्।
सपिण्डानान्तु मरणे मरणादितरेषु च॥
सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
समानोदकभावस्तु जन्मनाम्नोरवेदने॥
पिता पितामहश्चैव तथैव प्रपितामहः।
लेपभागश्चतुर्थाद्याः सापिण्ड्यं साप्तपौरुषम्॥
अनूढानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्।
जायानां भर्त्तृसापिण्ड्यं प्राह देवः पितामहः॥
ये चैकजाता बहवो भिन्नयोनय एव च।
भिन्नवर्णास्तु सापिण्ड्यं भवेत्तेषां त्रिपौरुषम्॥
कारवः शिल्पिनो वैद्या दासी दासस्तथैव च।
दातारो नियमी चैव ब्रह्मविद्ब्रह्मचारिणौ॥
सत्रिणो व्रतिनस्तावत् सद्यःशौचा उदाहृताः।
राजा चैवाभिषिक्तश्च विप्राः सत्रिण एव च॥
यज्ञे विवाहकाले च दैवयागे तथैव च।
सद्यःशौचं समाख्यातं दुर्भिक्षे वाप्युपद्रवे॥
डिम्बाहवहतानाञ्च विद्युता पार्थिवैर्द्विजैः।
सद्यःशौचं समाख्यातमज्ञातिमरणे तथा॥
अग्नौ मरुप्रपतने वीराध्वन्यप्यनाशके।
ब्राह्मणार्थे च संन्यस्ते सद्यःशौचं विधीयते॥
नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम्।
नाशौचं कीर्त्त्यते सद्भिः पतिते च तथा मृते॥
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः।
न चाश्रुपातः पिण्डो वा कार्य्यं श्राद्धादिकं क्वचित्॥
व्यापादयेत्तथात्मानं स्वयं योऽग्निविषादिभिः।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकादिकम्॥
अथ कश्चित् प्रमादेन म्रियतेऽग्निविषादिभिः।
तस्याशौचं विधातव्यं कार्य्यञ्चैवोदकादिकम्॥
जाते कुमारे तदहः कामं कुर्य्यात् प्रतिग्रहम्।
हिरण्यधान्यगोवासस्तिलान्नगुड़सर्पिषः॥
फलानि पुष्पं शाकञ्च लवणं काष्ठमेव च।
तोयं दधि घृतं क्षीरमौषधं तैलमेव च।

"सत्त्वेन वीर्य्येण पराक्रमेण
धैर्य्येण शौर्य्येण च तेजसा च ॥")

आरभटी । इति मेदिनी ॥

शौल्कं, त्रि, शुल्कसम्बन्धि । शुल्कशब्दात् ष्णप्रत्ययेन निष्पन्नम् ॥

शौल्किकः, पुं, (शुल्के अधिकृतः । शुल्क+ठञ् ।) शुल्काध्यक्षः । इति हेमचन्द्रः ॥ (यथा, याज्ञवल्क्ये । २ । १७६ ।

"शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्व्वाक् संवत्सरात् स्वामी हरेत परतो नृपः ॥")

शौल्किकेयः, पुं, विषभेदः । इत्यमरः ॥ शुल्किको देशभेदस्तत्र भवः शौल्किकेयः । ष्णेयः । तालव्यादिः । इति भरतः ॥

शौलफं, क्ली, शाकविशेषः । शुलफा इति भाषा । भूतचतुर्द्दश्यां चतुर्द्दशशाकमध्ये तद्भक्षणीयम् । यथा, निर्णयामृते ।

"ओलं केमुकवास्तूकं सर्षपं कालश्च निम्बं जयां
शालञ्चीं हिलमोचिकाश्च पटुकं शौलफं गुडूचीन्तथा
भण्टाकीं सुनिषण्णं शिवदिने खादन्ति ये मानवा
प्रेतत्वं न च यान्ति कार्त्तिकदिने कृष्णे च भूते तिथौ ॥"

इति तिथ्यादितत्त्वम् ॥

अस्य पर्य्यायगुणाः शतपुष्पाशब्दे द्रष्टव्याः ॥

शौल्विकः, पुं, कांस्यकारः । काँसारि इति भाषा । तत्पर्य्यायः । ताम्रकुट्टकः २ । इत्यमरः ॥ कामन्दमी ३ कांस्यकारः ४ । इति जटाधरः ॥ ताम्रिकः ५ ताम्रकारकः ६ । इति शब्दरत्नावली ॥

शौवं, क्ली, (श्वन्+"शुनः सङ्कोच उपसंख्यानम् ।" ६ । ४ । १४४ । इत्यस्य वार्त्तिकोक्त्या अणि साधु ।) शुनः सङ्कोचः । शुनो वृन्दम् । श्वोभवम् । इति संक्षिप्तसारव्याकरणम् ॥

शौवनं, क्ली, (श्वन्+अण् ।) शुनो भावः । शुनोऽपत्यम् । इति संक्षिप्तसारव्याकरणम् ॥ (शुनः समूहः । श्वन्+"खण्डिकादिभ्यश्च ।" ४।२।४५। इत्यञ् । कुक्कुरसमूहः । इति व्याकरणम् ॥ शुनो मांसम् । इति काशिका ।६। ४ । १३३ ॥)

शौवस्तिकं, त्रि, (श्वो भवम् । श्वस्+"श्वसस्तुट् च ।" ४ । ३ । १५ । इति ठञ् तुडागमश्च ।) भाविदिनस्थायिवस्तु । यथा,—

"आलम्भरिस्त्वं पिशितैर्नराणां
फलेग्रहीन् हंसि वनस्पतीनाम् ।
शौवस्तिकत्वं विभवा न येषां
व्रजन्ति तेषां दयसे न कस्मात् ॥"

इति भट्टौ २ सर्गः ॥

"येषां विभवाः सम्पदः शौवस्तिकत्वं भाविदिनस्थितत्वं न व्रजन्ति तेषां कस्मान्न दयसे । श्वोभवः शौवस्तिकः श्वसो भवार्थे कर्णविधानात् कचि मनीषादित्वात् ष्णागमः हारस्तरेति उम्शिल्वे त्रिरिति त्रिः स्वतौ भावे इति त्वम् ।"

इति तट्टीका ॥

शौवापदं, त्रि, (श्वापदस्येदमिति । श्वापद+अण् । "पादान्तस्यान्यतरस्याम् ।" ७।३।६। इति पक्षे ऐच् ।) श्वापदसम्बन्धि । श्वापदशब्दात् ष्णप्रत्ययेन निष्पन्नम् । इति मुग्धबोधव्याकरणम् ॥ (यथा, अनर्घराघवे । १ । ७५ ।

"कच्चित् कान्तारभाजां भवति परिभवः
कोऽपि शौवापदो वा
प्रत्यूहेन क्रतूनां न खलु मखभुजो भुञ्जते
वा हवींषि ॥")

शौष्कलः, पुं, (शुष्कलं पण्यमस्येति । अण् ।) शुष्कमांसस्य पणकः । इति मेदिनी ॥

शौष्कलः त्रि, (शुष्कलीमत्तीति । शुष्कली+अण् ।) आमिषाशी । इत्यमरः ॥ मत्स्यमांसभोजनशीलः । आमिषं अश्नाति आमिषाशी ग्रहादित्वाण्णिन् । शुष्कली शुष्कमांसे स्यात् मांसमात्रेऽपि दृश्यते । तामत्ति शौष्कलः णः । तालव्यादिर्न्तःस्थमध्यः । शुष्कं मांसं लाति इति शुष्कलः प्रज्ञादित्वात् अणि शौष्कलः । इति विद्याविनोदः । शाष्कलः इति पाठः । इति स्वामी । इति भरतः ॥

श्चुत } ,इर् क्षरणे । इति कविकल्पद्रुमः ॥
श्चुत } (भ्वा०-पर०-अक०-सेट् ।) द्वौ तालव्यवर्गाद्युक्ततालव्यादी । शेषोऽन्तःस्थादियुक्तश्च । नकारजावनुस्वारपञ्चमाविभ्यादिनियमेऽप्यनयोस्तालव्यादित्वं तद्वचनस्य व्यभिचारसूचनार्थं तेन चुलुम्प लोपे इत्यादीनामोष्ठ्यवर्गशेषोपधत्वं सङ्गच्छते । तेन क्विपि संयोगान्तलोपे चुलुम् इत्यादि सिद्धम् । किन्तु द्वौ दन्त्यादी इति धातुप्रदीपक्रमदीश्वरौ । तेन घृतं श्चोतति इति घृतश्चुत् तमाचष्टे इति णौ णौमंघेति टिलोपे घृतश्चयति पुनः क्विपि णेर्लोपे घृतश्च इति स्थिते संयोगादेः सस्य लोपे घृतक् इति केचित् ॥ इर्, अश्चुतत् अश्चोतीत् । अश्चुतत् अश्चोतीत् । क्षर इति आसेचनं क्षरणञ्च । रक्तमाश्चोतति च्युर इति । इदं कवचमश्चोतीदिति । निश्चोतन्ते सुतनुकबरी बिन्दवो यावदेते । इति मालत्यां गयक्तानित्यत्वम् । इति दुर्गादासः ॥

श्चोतः, पुं, (श्चोतनमिति । श्चुत+घञ् ।) प्राधारः । इत्यमरः ॥

श्म, [न्] क्ली, सुखम् । इति अमरशब्दटीकायां भरतः ॥ (शरीरम् । इति निरुक्तिः । ३ । ५ ॥ शवः । इति पुराणम् । अस्य प्रमाणं श्मशानशब्दे द्रष्टव्यम् ॥)

श्मशानं, क्ली, (श्मनो शवानां शानं शयनं यत्र । यद्वा, शवानां शयनमिति । "पृषोदरादीनि यथोपदिष्टानि ।" ६ । ३ । १०९ । इति शवशब्दस्य श्मादेशः शयनशब्दस्यापि शानशब्द आदेशः ।) शवदाहस्थानम् । तत्पर्य्यायः । पितृवनम् २ । इत्यमरः ॥ शतानकम् ३ रुद्राक्रीडः ४ दाहसरः ५ । इति त्रिकाण्डशेषः ॥ अन्तशय्या ६ पितृकाननम् ७ । इति जटाधरः ॥ ॥ तस्य व्युत्पत्तिर्यथा,—

"श्मशब्देन शवः प्रोक्तः शानं शयनमुच्यते ।
निर्व्वचन्ति श्मशानार्थं मुने शब्दार्थकोविदाः ॥
महान्त्यपि च भूतानि प्रलये समुपस्थिते ।
शेरतेऽत्र शवा भूत्वा श्मशानन्तु ततो भवेत् ॥"

महाश्मशानं यथा,—

"वाराणसीति विख्याता रुद्रावास इति द्विजाः ।
महाश्मशानमित्येवं प्रोक्तमानन्दकाननम् ॥"

इति श्रीस्कान्दे काशीखण्डे ३० अध्यायः ॥ ॥

"उत्सवे व्यसने चैव दुर्भिक्षे शत्रुविग्रहे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥"

इति चाणक्यम् । १७ ॥ ॥

श्मशाने गत्वा विष्णुस्पर्शे दोषो यथा,—

वराह उवाच ।

"श्मशानं यो नरो गत्वा अस्नात्वैव तु मां स्पृशेत् ।
मम दोषापराधस्य शृणु तस्येन यत् फलम् ॥
जम्बुको जायते भूमे वर्षाणां नव पञ्च च ।
गृध्रस्तु सप्तवर्षाणि जायते खचरेश्वरः ॥
चरन्तौ मानुषं मांसं उभौ तौ गृध्रजम्बुकौ ।
पिशाचो जायते तत्र वर्षाणि नव पञ्च च ॥
ततस्तु कृष्णपौण्ड्रिश्च त्रिंशद्वर्षाणि खादति ।
ततो नारायणाच्छ्रुत्वा धरणी वाक्यमब्रवीत् ॥
एतन्मे परमं गुह्यं लोकनाथ जनार्द्दन ।
परं कौतूहलं देव निखिलं वक्तुमर्हसि ॥
श्मशानं पुण्डरीकाक्ष ईश्वरेण प्रशंसितम् ।
तत्र किं विगुणं देव पावित्रे शिवभाषिते ॥
स तत्र रमते नित्यं भगवांस्तु महाद्युतिः ।
कपालं गृह्य देवोऽत्र दीप्तिमन्तं महौजसम् ॥
प्रशंसितश्च रुद्रेण भवता किं विनिन्दितम् ।
श्मशाणं पद्मपत्राक्ष रुद्रस्य च निशि प्रियम् ॥

वराह उवाच ।

शृणु तत्त्वेन मे देवि इदमाख्यानमुत्तमम् ।
यद्यापि ते न जानन्ति अनघे शंसितव्रताः ॥
कृत्वा सुदुष्करं कर्म्म सर्व्वभूतपतिर्हरः ।
हत्वा च वालवृद्धाणि त्रिपुरे स्त्रपिणीः स्त्रियः ।
तेन पापेन संवद्धो न शक्नोति विचेष्टितुम् ॥
तत ईशो मया चोक्तो वाक्यमेव सुखावहम् ।
किमिदं तिष्ठसे रुद्र कश्मलेन समावृतः ।
तव चैव प्रियार्थाय वेगाद्धमिदमागतः ॥
ततो मम वचः श्रुत्वा लब्धसंज्ञो महेश्वरः ।
उवाच मधुरं वाक्यं पापसन्तप्तलोचनः ॥
तव विष्णो प्रसादेन मया तत्त्रिपुरं हतम् ।
निहता दानवास्तत्र गर्भिण्यश्च निपातिताः ॥
वालवृद्धा हतास्तत्र विस्फुरन्तो दिशो दश ।
तस्य पापस्य दोषेण न शक्नोमि विचेष्टितुम् ॥
प्रनष्टयोगमायश्च नष्टैश्वर्य्यश्च माधव ।
किं मया विप्रकर्त्तव्यमेनोऽवस्थेन माधव ॥
विष्णो तत्त्वेन मे ब्रूहि शोधनं पापनाशनम् ।
येन वै कृतमात्रेण शीघ्रं मुच्येत किल्बिषात् ॥

पिकवकोपकुटूश्यामाशुरुपापतमोनिशाः ॥
मसीपङ्कमदाम्भोधियमुनाघमकोकिलाः ।
गोलाङ्गूलाख्यगुञ्जास्ये कण्ठः खञ्जनकेकिनोः ॥
शैवलं तालतापिञ्छनिलेन्दीवरवलयः ।
रसविद्भूतपद्मारौ कटाक्षोऽलिः कनीनिका ॥
नीली जम्बूफलं मुस्ता काककन्या कुकोकिलः ।
भिन्नच्छाया गजाङ्गारखलान्तःकरणादयः ॥”
इति कविकल्पलतायां श्यामस्तवके ४कुसुमम् ॥
श्यामकं, क्ली, (श्याम + संज्ञायां कन् ।) रोहिष-तृणम् । इति राजनिर्घण्टः ॥ ( श्यामवर्णे, त्रि । यथा, हरसंहितायाम् । ६९ । ८ ।
“श्यामकपुष्पचिताङ्गो
भस्मारुणसन्निभो विडालाक्षः ॥” )
श्यामकः, पुं, (श्यामं तद्वर्णं अकनीति । अक गतौ + अण् । शकन्ध्वादित्वात् साधु ।) श्यामाकः । इति हेमचन्द्रः ॥ (शूरस्य पुत्रविशेषः । स तु वसुदेवस्य भ्राता । इति भागवतम् ।९।२४।२८।)
श्यामकण्ठः, पुं, ( श्यामः कण्ठो यस्य । ) मयूरः । इति हलायुधः ॥ शिवः । पक्षिविशेषः । इति नीलकण्ठशब्ददर्शनात् ॥
श्यामकन्दा, स्त्री, ( श्यामः कन्दो यस्याः । ) अतिविषा । इति राजनिर्घण्टः ॥
श्यामकाण्डा, स्त्री, ( श्यामः काण्डो यस्याः । ) गण्डदूर्व्वा । इति राजनिर्घण्टः ॥
श्यामग्रन्थिः, स्त्री, ( श्यामो ग्रन्थिर्यस्य । ) गण्डदूर्व्वा । इति राजनिर्घण्टः ॥
श्यामपत्रः, पुं, (श्यामानि पत्राणि यस्य ।) तमालवृक्षः । इति शब्दचन्द्रिका ॥
श्यामलः, पुं, (श्यामो वर्णः अस्त्यस्येति । श्याम + “सिध्मादिभ्यश्च ।”५।२।९७। इति लच् ।) कृष्णवर्णः । पिप्पलः । इति मेदिनी ॥ कृष्णगुणवति, त्रि । इत्यमरः ॥ (यथा, मुकुन्दमालायाम् ।२।
“जयतु जयतु मेघश्यामलः कोमलाङ्गो
जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥”)
श्यामलचूडा, स्त्री, ( श्यामला चूडा यस्याः । ) गुञ्जा । इति राजनिर्घण्टः ॥
श्यामलता, स्त्री, ( श्यामा लता ।) स्वनामख्यातलता । तत्पर्य्यायः । यथा, शब्दरत्नावल्याम् ।
“गोपी गोपा गोपवल्ली सारिवोत्पलसारिवा ।
अनन्ता शारिवा श्यामा स्फोटा श्यामलताह्वये ॥”
अपि च ।
“कालपेषी महाश्यामा सुभद्रोत्पलसारिवा ।
दीर्घमूला च मालिन्दी मसृरविदला च सा ॥”
इति रत्नमाला ॥
राजनिर्घण्टोक्तपर्य्यायगुणौ सारिवाशब्दे द्रष्टव्यौ ॥
श्यामला, स्त्री, पार्व्वती । श्यामं श्रीकृष्णं लाति ददातीति व्युत्पत्तिसिद्धा । इति केचित् ॥ कस्तूरी-गन्धा । कटभी । जम्बूः । कस्तूरी । इति राजनिर्घण्टः ॥
श्यामलिका, स्त्री, नीली । इति राजनिर्घण्टः ॥
श्यामलेक्षुः, पुं, ( श्यामलः कृष्णवर्णः इक्षुः । ) कृष्णेक्षुः । इति राजनिर्घण्टः ॥

श्यामसुन्दरः, पुं, ( श्यामः सुन्दरश्च । ) श्रीकृष्णः । यथा,—
“यावन्ति च शरीराणि भोगार्हाणि महामुने ।
प्राकृतानि च सर्व्वाणि श्रीकृष्णविग्रहं विना ॥
ध्यायन्ति योगिनस्तच्च शुद्धं ज्योतिःस्वरूपिणम् ।
एकपादादिरहितं निर्गुणं प्रकृतेः परम् ॥
वैष्णवास्तं न मन्यन्ते तद्भक्ताः सूक्ष्मदर्शिनः ।
कुतो बभूव तज्ज्योतिरहो तेजस्विनं विना ।
ज्योतिरभ्यन्तरे नित्यं शरीरं श्यामसुन्दरम् ॥”
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ४१ अध्यायः ॥*॥
अन्यच्च ।
“श्यामसुन्दर ते दास्यः करवाम तवोदितम् ।
देहि वासांसि धर्म्मज्ञ नो चेद्राज्ञे ब्रुवामहे ॥”
इति श्रीभागवते दशमस्कन्धे २२ अध्यायः ॥*॥
अपि च ।
“ददर्श श्रीहरिं ब्रह्मा शङ्करश्च सुरैः सह ।
वसन्तं तन्मध्यदेशे यथेन्दुं तारकावृतम् ॥
अमूल्यरत्ननिर्म्माणसर्व्वभूषणभूषितम् ।
किरीटिनं कुण्डलिनं वनमालाविभूषितम् ॥
शङ्खचक्रगदापद्मधारिणञ्च चतुर्भुजम् ।
नवीननीरदश्यामसुन्दरं सुमनोहरम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे १४ अध्यायः ॥
श्यामा, स्त्री, (श्यामो वर्णोऽस्त्यस्या इति । अच् । टाप् ।) शारिवौषधी । अप्रसूताङ्गना । प्रियङ्गुः । वाकुचिः । यमुना । रात्रिः । कृष्णत्रिवृतिका । नीलिका । इति मेदिनी ॥ गुग्गुलुः । सोमलता । गुन्द्रा । कृष्णा । अम्बिका । इति विश्वः ॥ गुडूची । कस्तूरी । वटपत्री । वन्दा । नीलपुनर्नवा । पिप्पली । हरिद्रा । नीलदूर्व्वा । तुलसी । पद्मबीजम् । गौः । स्त्री । छाया । कृष्णसारिवा । शिंशपा । इति राजनिर्घण्टः ॥ ( नारीविशेषः । यथा, भट्टिः । ५ । १८ ।
“योषिद्वृन्दारिका तस्य दयिता हंसगामिनी ।
दूर्व्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥”
तल्लक्षणं यथा, तट्टीकायाम् ।
“शीते सुखोष्णसर्व्वाङ्गी ग्रीष्मे च सुखशीतला ।
तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते ॥”)
पक्षिविशेषः । श्यामा इति भाषा । तत्पर्य्यायः । वराही २ शकुनी ३ कुमारी ४ दुर्गा ५ देवी ६ चटका ७ कृष्णा ८ पोतकी ९ भारद्वाजिका १० वामा ११ कालिका १२ शिलिम्बिनी १३ । इति राजनिर्घण्टः ॥*॥ श्यामाया उत्पत्तिर्यथा,
“ततः सा कालिका देवी योगनिद्रा जगन्मयी ।
पूर्व्वत्यक्तसतीरूपा जन्मार्थं मेनकां ययौ ॥
समयस्यानुरूपेण मेनकाजठरे शिवा ।
सम्भूय च समुत्पन्ना सा लक्ष्मीरिव सागरात् ॥
वसन्तसमये देवी नवम्यां मृगयोगतः ।
अर्द्धरात्रौ समुत्पन्ना गङ्गेव शशिमण्डलात् ॥
ततस्तस्यान्तु जातायां प्रसन्नाश्चाभवन् दिशः ।
सानुकूलो ववौ वायुर्गम्भीरो गन्धिलः शुभः ॥

बभूव पुष्पवृष्टिश्च तोयवृष्टिः परा तथा ।
अप्सरसो ननृतुश्च जगुर्गन्धर्व्वकिन्नराः ॥
तस्यान्तु जायमानायां सर्व्वे लोकास्तमपहत ।
तान्तु दृष्ट्वा यथाजातां नीलोत्पलदलाद्युतिम् ॥
श्यामां सा मेनका देवी मुदमापातिहर्षिता ।
देवाश्च हर्षमतुलं प्रापुस्तत्र मुहुर्मुहुः ॥
तुष्टुवुस्तामन्तरीक्षे गन्धर्व्वाप्सरोगणाः ।
तान्तु नीलोत्पलदलश्यामां हिमवतः सुताम् ॥
कालीति नाम्ना हिमवानाजुहाव ततो दिने ।
यान्यथास्तु स्वसन्तानां नाम्ना तां पार्व्वतीति
च ।
कालीति च तथा नाम्ना कीर्त्तिता गिरि-
नन्दिनी ॥”
इति कालिकापुराणे ४० अध्यायः ॥*॥
अथ श्यामामन्त्रः । क्रीं क्रीं क्रीं हूँ हूँ ह्रीँ ह्रीँ दक्षिणे कालिके क्रीं क्रीं क्रीं हूँ हूँ ह्रीँ ह्रीँ स्वाहा । यथा, कालीतन्त्रे ।
“कामबीजं वह्निसंस्थं रतिविन्दुसमन्वितम् ।
कूर्च्चयुग्मं तथा लज्जायुग्मं तदनन्तरम् ॥
दक्षिणे कालिके चेति पूर्व्वबीजानि चोच्चरेत् ।
अन्ते वह्निवधूं दद्यात् विद्या राज्ञी प्रकीर्त्तिता ॥”
गन्धर्व्वस्य यामले ।
“ककारात्सत्स्वरूपत्वात् केवलं मोक्षदायिनी ।
ज्वलनार्णसमायोगात् सर्व्वतेजोमयी शुभा ।
मायाचयेण देवेशि स्थितिस्थित्यकारिणी ॥
बिन्दूनां निष्कलत्वाच्च कैवल्यफलदायिनी ।
बीजत्रयात् प्राक्भवी सा केवलं ज्ञानचित्कला ॥
शुद्धबीजद्वयेनैव शब्दराशिप्रबोधिनी ।
लज्जाबीजद्वयेनैव सृष्टिस्थित्यन्तकारिणी ॥
सम्बोधनपदेनैव सदा सन्निधिकारिणी ।
स्वाहया जगतां माता सर्व्वपापप्रणाशिनी ॥”
अस्याः पूजाप्रयोगः । प्रातःकृत्यादिकं कृत्वा मन्त्राचमनं कुर्य्यात् । यथा,—
“कालिकाभिः त्रिभिः पीत्वा काल्यादिभि-
रुपस्पृशेत् ।
द्वाभ्यामोष्ठौ हिरुन्मृज्य चक्रेन चालयेत् करम् ॥
मुखप्राणचक्षुःश्रोत्रनाभ्युरस्कं मुखौ क्रमात् ।
आचम्यैवं भवेत् कालो वत्सराचां प्रपश्यति ॥”
कं शिरः । तद्यथा । क्रीमिति त्रिराचामेत् । ॐ काल्यै नमः कपालिन्यै नमः इति ओष्ठौ द्विरुन्मृजेत् । ॐ कुल्लायै नमः इति वारं चालयेत् । ॐ कुरुकुल्लायै नमः इति मुखे । ॐ विरोधिन्यै नमः इति दक्षिणनासायाम् । ॐ विप्रचित्तायै नमः इति वामनासायाम् । ॐ उग्रायै नमः ॐ उग्रप्रभायै नमः इति नेत्रयोः । ॐ दीप्तायै नमः ॐ नीलायै नमः इति श्रोत्रयोः । ॐ घनायै नमः इति नाभौ । ॐ बलाकायै नमः इति वक्षसि । ॐ मात्रायै नमः इति शिरसि । ॐ मुद्रायै नमः ॐ मितायै नमः इत्यंसयोः । इति मन्त्राचमनम् ।*। ततो भूतशुद्धान्तं विधाय मायाबीजेन यथाविधि

यन्त्रान्तरमाह तन्त्रे ।
'शक्तयग्निभ्याञ्च षट्कोणं शक्तिभिश्च नवात्मकम् ।
पद्मे वसुदले भूमिपूश्चतुर्द्वारसंयुतेति ॥*॥
पीठपूजां ततः कुर्य्यादाधारशक्तिपूर्व्वकम् ।
प्रकृतिं कमठञ्चैव शेषं पृथ्वीं तथैव च ॥
सुधाम्बुधिं मणिद्वीपं चिन्तामणिगृहं तथा ।
श्मशानं पारिजातञ्च तन्मूले रत्नवेदिकाम् ॥
तस्योपरि मणेः पीठं न्यसेत् साधकसत्तमः ।
चतुर्द्दिक्षु मुनीन् देवान् शिवांश्च शवमुण्ड-
कान् ॥"

धर्म्मादधर्म्मादींश्चेत्यादि ह्रीँ ज्ञानात्मने नमः इत्यन्तं संपूज्य केशरेषु पूर्व्वादिक्रमेण पूजयेत् ।
"इच्छा ज्ञाना क्रिया चैव कामिनी काम-
दायिनी ॥
रती रतिप्रिया नन्दा मध्ये चैव मनोन्मनी ॥"
सर्व्वत्र प्रणवादिनमोऽन्तेन पूजयेत् । तदुपरि ह्सौः सदाशिवमहाप्रेतपद्मासनाय नमः ॥*॥ ततः पुनर्ध्यात्वा पुष्पाञ्जलावानीय मूलमन्त्रकल्पितमूर्त्तावावाहयेत् ।
"ॐ देवेशि भक्तिसुलभे परिवारसमन्विते ।
यावत्त्वां पूजयिष्यामि तावत् त्वं सुस्थिरा भव ॥"
ततो मूलमुच्चार्य्य अमुकीदेवि इहावह इह तिष्ठ इह सन्निधेहि इह सन्निरुध्यस्व इह सन्निहिता भव । ततः हूमित्यवगुण्ठ्य अङ्गमन्त्रैः सकलीकृत्य धेनुमुद्रया अमृतीकृत्य परमीकरणमुद्रया परमीकृत्य भूतिन्याकर्षिणीयोनिमुद्राः प्रदर्श्य प्राणप्रतिष्ठां विधाय मूलेन पाद्यादिभिः पूजयेत् । ततो मूलमुच्चार्य्य एतत् पाद्यममुकदेवतायै नमः । इदमर्घ्यं स्वाहा । आचमनीयं स्वधा । स्नानीयं निवेदयामि । पुनराचमनीयं स्वधा । एष गन्धो नमः । एतानि पुष्पाणि वौषट् । ततो मूलेन पञ्च पुष्पाञ्जलीन् दत्त्वा धूपदीपौ दद्यात् । वनस्पतीत्यादि पठन् मूलमुच्चार्य्य एष धूपो नमः । दीपमन्त्रस्तु ।
"सुप्रकाशो महादीपः सर्व्वतस्तिमिरापहः ।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥"
मूलमुच्चार्य्य एष दीपो नमः । ततः ॐ जयध्वनिमन्त्रमातः स्वाहा इति घण्टां संपूज्य वामहस्तेन तां वादयन् नीचैर्धूपं दत्त्वा दृष्टिपर्य्यन्तं दीपं दद्यात् । ततो मूलेन पुष्पाञ्जलित्रयं दत्त्वा यथोपपन्नं नैवेद्यं दत्त्वा आवरणपूजां कुर्य्यात् ॥ श्रीअमुकीदेवि आवरणं ते पूजयामि इत्याज्ञां गृहीत्वा केशरेष्वग्न्यादिकोणेषु ॐ ह्रां हृदयाय नमः । ॐ ह्रीँ शिरसे स्वाहा । ॐ ह्रूँ शिखायै वषट् । ॐ ह्रैँ कवचाय हूँ । ॐ ह्रौँ नेत्रत्रयाय वौषट् । चतुर्दिक्षु ॐ ह्रः अस्त्राय फट् । बहिःषट्कोणे ॐ काल्यै नमः । सर्व्वत्र प्रणवादिनमोऽन्तेन कपालिन्यै कुल्लायै कुरुकुल्लायै विरोधिन्यै विप्रचित्तायै उग्रायै उग्रप्रभायै दीप्तायै इत्यन्तत्र्यस्रे । ॐ नीलायै नमः । एवं घनायै बलाकायै इति द्वितीयत्र्यस्रे । एवं मात्रायै मुद्रायै मितायै इति तृतीयत्र्यस्रे ।

"सर्व्वाः श्यामा असिकरा मुण्डमालाविभूषिताः ।
तर्ज्जनीं वामहस्तेन धारयन्त्यः शुचिस्मिताः ॥
दिगम्बर्य्यो हसन्मुख्यः स्वस्ववाहनभूषिताः ॥"
एवं ध्यात्वार्चयेत् ॥ * ॥ ततोऽष्टपत्रेषु पूर्व्वादिक्रमेण ॐ ब्राह्म्यै नमः । एवं नारायण्यै माहेश्वर्य्यै चामुण्डायै कौमार्य्यै अपराजितायै वाराह्यै नारसिंह्यै एता गन्धादिभिः पूजयेत् । पत्राग्रे असिताङ्गादिभैरवान् पूजयेत् । ततो मूलेन पुष्पाञ्जलित्रयं दत्त्वा पाद्यादिना महाकालं पूजयेत् ॥ * ॥ तस्य ध्यानम् ।
"महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकम् ।
बिभ्रतं दण्डखट्टाङ्गौ दंष्ट्राभीममुखं शिशुम् ॥
व्याघ्रचर्म्मावृतकटिं तुन्दिलं रक्तवाससम् ।
त्रिनेत्रं मुक्तकेशञ्च मुण्डमालाविभूषितम् ॥
जटाभारलसच्चन्द्रखण्डमुग्रं ज्वलन्निभम् ॥"
तथा च कुमारीकल्पे ।
"देव्यास्तु दक्षिणे भागे महाकालं प्रपूजयेत् ।"
हूँ च्रौँ यां रां लां वां आं क्रों महाकालभैरव सर्व्वविघ्नान्नाशय नाशय ह्रीँ श्रीँ फट् स्वाहा इत्यनेन पाद्यादिभिराराध्य त्रिस्तर्पयित्वा मूलेन देवीं पञ्चोपचारैः पूजयेत् । तथा च कालीतन्त्रे ।
"महाकालं यजेद्यत्नात् पश्चाद्देवीं प्रपूजयेत् ।"
कालीकल्पे ।
"कवचं च्रौं समुद्धृत्य यां रां लां वां आं च
क्रोन्ततः ।
महाकालभैरवेति सर्व्वविघ्नान्नाशयेति च ॥
नाशयेति पुनः प्रोच्य मायां लक्ष्मीं समुद्धरेत् ।
फट् स्वाहया समायुक्तो मन्त्रः सर्व्वार्थसाधकः ॥"
ततो देवीं ध्यात्वा यथाशक्ति जप्त्वा गुह्यातीत्यादिना वामहस्ते जपं समर्प्य आत्मसमर्पणं कुर्य्यात् । ततः स्तुत्वा प्रदक्षिणीकृत्य अष्टाङ्गप्रणामं कृत्वा त्रैलोक्यमङ्गलं नाम कवचं पठेत् ॥ * ॥ ततो आवरणदेवता देव्यङ्गे विलोप्य संहारमुद्रया अमुकीदेवि क्षमस्वेति विसृज्य तत्तेजःपुष्पेण समं स्वहृद्यारोपयेत् ।
"उत्तरे शिखरे देवि भूम्यां पर्व्वतवासिनि ।
ब्रह्मयोनिसमुत्पन्ने गच्छ देवि ममान्तरम् ॥"
इति मन्त्रेण ॥*॥
ततस्तन्नैवेद्यं किञ्चिदुच्छिष्टचाण्डालिन्यै नमः इत्यैशान्यां दिशि दत्त्वा शेषमिष्टेभ्यो दत्त्वा किञ्चित् स्वीकृत्य पादोदकं पीत्वा निर्म्माल्यं शिरसि विधृत्य यथेच्छं विहरेत् ॥ * ॥ ततो यन्त्रलेपं वामहस्ते कृत्वा सव्यहस्तकनिष्ठया मायाबीजं विलिख्य तया तिलकं कुर्य्यात् । तथा च ।
"वामे कृत्वा यन्त्रलेपं मायां सव्यकनिष्ठया ।
विलिख्य तिलकं कुर्य्यात् मन्त्रेणानेन साधकः ॥
ॐ यं यं स्पृशामि पादेन यो मां पश्यति
चक्षुषा ।
स एव दासतां यातु राजानो दुष्टदस्यवः ॥"
जपकाले तु कर्पूरयुक्ता शिखा कार्य्या ।

"कर्पूराढ्या सदा शिखा कर्त्तव्या जपकर्म्मणि ।"
इति विश्वसारवाक्यात् इयं काम्यजप इति तत्त्वम् । ततो मूलेनाष्टोत्तरशताभिमन्त्रितं पुष्पं चन्दनञ्च धृत्वा त्रैलोक्यं वशमानयेत् ।
"सर्व्वसिद्धियुतो भूत्वा भैरवो वत्सराद्भवेत् ।"
अस्य पुरश्चरणं लक्षद्वयजपः । तथा च कालीतन्त्रे ।
"लक्षमेकं जपेन्मन्त्रं हविष्याशी दिवा शुचिः ।
रात्रौ ताम्बूलपूरास्यः शय्यायां लक्षमानतः ॥"
व्यवस्थामाह स्वतन्त्रे ।
"दिवा लक्षं शुचिर्भूत्वा हविष्याशी जपेन्नरः ।
ततस्तु तद्दशांशेन होमयेत् हविषा प्रिये ॥"
अत्राङ्गस्य कालान्तरमाह नीलसारस्वते ।
"लक्षमेकं जपेन्मन्त्रं हविष्याशी दिवा शुचिः ।
अशुचिश्च तथा रात्रौ लक्षमेकं तथैव च ॥"
"दशांशं होमयेन्मन्त्री तर्पयेदभिषेचयेत् ।"इति साम्प्रदायिकाः । वस्तुतस्तु कुमारीकल्पे ।
"लक्षमेकं जपेद्विद्यां हविष्याशी दिवा शुचिः ।
रात्रौ ताम्बूलपूरास्यः शय्यायां लक्षमानतः ॥"
रात्रिजपे तु कालो मुण्डमालायाम् ।
"गते तु प्रथमे यामे तृतीयप्रहरावधि ।
निशायान्तु प्रजप्तव्यं रात्रिशेषे जपेन्न तु ॥
एवं लक्षद्वयं जप्त्वा तद्दशांशेन मन्त्रवित् ।
अयुतं होमयेद्देवि दिवारात्रिविभेदतः ॥"
तेन दिवा लक्षं जप्त्वा तद्दशांशं होमं कुर्य्यात् । रात्रौ लक्षं जप्त्वा तद्दशांशं होमं कुर्य्यादिति रहस्यार्थः ।
"द्विजातीनाञ्च सर्व्वेषां दिवा विधिरिहोच्यते ।
शूद्राणाञ्च तथा प्रोक्तं रात्रावेव महाफलम् ॥"
अन्यत्र च ।
"दिवैव प्रजपेन्मन्त्रं न तु रात्रौ कदाचन ॥"*॥

अथ मन्त्रभेदाः ।

क्रीँ । १ । क्रीँ क्रीँ क्रीँ । ३ । अनयोः पूजाप्रयोगः सर्व्वं पूर्व्ववत् । ध्यानं सिद्धेश्वरतन्त्रे ।
"शवारूढ़ां महाभीमां घोरदंष्ट्रां वरप्रदाम् ।
हास्ययुक्तां त्रिनेत्राञ्च कपालकर्त्तृकाकराम् ॥
मुक्तकेशीं ललज्जिह्वां पिबन्तीं रुधिरं मुहुः ।
चतुर्ब्बाहुयुतां देवीं वराभयकरां स्मरेत् ॥"
अनयोः पुरश्चरणं लक्षजपः ॥ * ॥ ॐ ह्रीँ ह्रीँ हूँ हूँ क्रीँ क्रीँ क्रीँ दक्षिणे कालिके क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ । २१ । अस्याः पूजादिकं दक्षिणावत् कार्य्यम् । पुरश्चरणं लक्षजपः ॥*॥ ॐ ह्रीँ ह्रीँ हूँ हूँ क्रीँ क्रीँ क्रीँ दक्षिणे कालिके क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ स्वाहा । २३ ॥ * ॥ ह्रीँ ह्रीँ हूँ हूँ क्रीँ क्रीँ क्रीँ दक्षिणे कालिके क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ स्वाहा । २२ ॥ * ॥ ह्रीँ ह्रीँ हूँ हूँ क्रीँ क्रीँ क्रीँ दक्षिणे कालिके क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ ।२०। ध्यानपूजादिकं दक्षिणावत् ॥*॥ क्रीँ क्रीँ क्रूँ ।३॥ * ॥ ॐ ह्रीँ क्रीँमे स्वाहा ।६। अस्याः पूजाप्रयोगः । अस्य भैरव ऋषिर्व्विराट् छन्दः सिद्धकाली ब्रह्मरूपा संवनेश्वरी देवता

श्यामा
श्यामा

भूतेत्यनेनार्द्धरात्रे जन्मश्रवणात् तत्रैव पूजा मुख्येति । तथा बृहद्धर्म्मपुराणे ।
"रात्रौ निशीथव्याप्तायाममावास्यामिहैव तु ।
पृथ्वीतलं समायाता काली हिमवताम्बिका ॥
अतस्तामत्र वै भक्त्या देवदेवीं द्विजातयः ।
पूजयेदात्मनो भक्त्या पशुपुष्पार्घ्यसम्पदा ॥" इति ॥
तथा गुप्तसाधनतन्त्रे ।
"निशा तु परमेशानि सूर्य्ये चास्तमुपागते ।
प्रहरे च गते रात्रौ घटिके द्वे परे च ये ॥
महानिशा समाख्याता तत्रस्थातिमहानिशा ।
अर्द्धरात्रे गते देवि पशुभावो न पूजयेत् ॥"
अर्द्धरात्रे गते अर्द्धरात्रात् परम् । तथा ।
"दशदण्डे तु या पूजा तत् सर्व्वमक्षयं भवेत् ।
षष्ठक्रोशे महेशानि तत् सर्व्वमन्नोपमम् ॥
सप्तमक्रोशके देवि सर्व्वं क्षीरोपमं भवेत् ।
अष्टमक्रोशके देवि ! दधितुल्यं न संशयः ॥
अतः परं महेशानि विषतुल्यं न संशयः ।
एतत् सर्व्वं महेशानि पशुभावे मयोदितम् ॥"
अर्द्धरात्रस्य गौणत्वश्रवणात् पशूनां यत्र पूर्व्वदिने अर्द्धरात्रव्यापिन्यमावास्या न तु तत्पूर्व्वं प्राप्तिः परदिने च रात्रेः पञ्चममुहूर्त्तव्यापिनी तदा परेद्युः पूजेति चेन्न गुप्तसाधनतन्त्रोक्तवचनस्य नित्यपूजादिपरम् । कार्त्तिकामावास्याया-मर्द्धरात्रे जन्मनिमित्तकपूजाया निशेषेणाभिधानात् । पशुभिरपि एवंभूतस्थले पूर्व्वदिने अर्द्धरात्र एव पूजा कार्य्या । यथा श्रीकृष्णपूजायाः सामान्यतो निशायामकर्त्तव्यत्वेऽपि जन्माष्टम्यामर्द्धरात्रकर्त्तव्यता मुख्यमेति । परन्तु यत्र पूर्व्वदिने अर्द्धरात्रात् परममावास्या परदिने अर्द्धरात्रात् पूर्व्वमेव तत्र पशुभाविनः परदिने वीरदिव्ययोश्च पूर्व्वदिने पूजा कार्य्या इति । प्रमाणं गोप्यगोपनलीलागमीयषष्ठपटले । एवं यत्र पूर्व्वदिने अर्द्धरात्रव्यापिन्यमावास्या परदिने तथा भूतापि कुजवारादियुक्ता तत्रापि पूर्व्वदिने पूजा गुणफलकुजवारादिकमपेक्ष्य चतुर्द्दशीयोगस्य मुख्यत्वात् । तथोक्तं व्योमकेशतन्त्रे ।
"कुजवारे लक्षगुणं पूर्व्वविद्धा ततोऽधिकेति ।"
कुजवार इति शनिवारोपलक्षणम् ।
"शनिभौमदिने चेत् स्यात्ततः शतगुणं फलम् ।"
इति श्रवणात् ॥
कार्त्तिकामावास्यायां कालीपूजाया नित्यतामाह मायातन्त्रे ।
"वर्षे वर्षे च कर्त्तव्यं कालिकाया महोत्सवम् ।
कार्त्तिके तु विशेषेण अमावास्यां निशार्द्धके ॥"
इति ॥
देव्यागमे च ।
"प्रतिसंवत्सरं कुर्य्यात् कालिकाया महोत्सवम् ।
कार्त्तिके तु विशेषेण अमावास्यां निशार्द्धके ।
तत्र संपूजयेद्देवीं भोगमोक्षप्रदायिनीम् ॥"
इति ।
एवञ्चात्र कार्त्तिकपदं गौणचान्द्रकार्त्तिकपरं जन्मतिथिकृत्यत्वात् । न तु नानावचने तुलार्कश्रवणात् सौरकार्त्तिकपरम् । तथा सति यस्मिन् वर्षे तुलार्के रात्रौ नामावास्याप्राप्तिस्तद्वर्षे कृत्यलोपः स्यात् । एवं यत्र वर्षे तुलार्के दर्शद्वयं तत्रानध्यवसायापत्तेः । स्पष्टमुक्तं विद्योत्पत्तितन्त्रे ।
"कार्त्तिकस्याप्यमावास्या गौणचान्द्रप्रमाणतः ।
निशीथव्यापिनी या तु तस्यां पूजां समाचरेत् ॥"
निशीथमर्द्धरात्रम् । एवं यत्र पूर्व्वदिने निशीथव्यापिन्यमावास्या कन्यार्के परदिने च तुलार्केऽर्द्धरात्रात् परं मुहूर्त्तादिव्यापिनी तत्रापि पूर्व्वदिने निशीथस्य मुख्यकालत्वानुरोधात् भूततिथियोगानुरोधाच्च तुलार्कस्य दिनभेदनियामकत्वेनाश्रुतत्वात् । परन्तु तुलार्कपदं नानावचने यदस्ति तत्प्रायिकाभिप्रायेण गुणफलाभिप्रायेण वा बोध्यम् । अतएव तिथितत्त्वधृतमादिपुराणम् ।
"ऋक्षराशिविशेषेण यत् कर्म्म विहितं नरैः ।
दैवं वाप्यथवा पैत्रं तदन्यत्रापि दृश्यते ॥"
इति ।
अगस्त्यसंहितायाम् ।
"मेषं पूषणि संप्राप्ते लग्ने कर्कटकाह्वये ।
आविरासीत् सकलया कौशल्यायां परः पुमान् ॥"
इति ॥
अत्र मेषार्के जन्मश्रवणं मीनार्केऽपि कदाचित् उपवासः । यत्तु तन्त्रीयमिति कृत्वा पठन्ति ।
"तुलार्के त्वर्द्धरात्रे या दीपयात्रातिथिर्भवेत् ।
तत्र संपूजयेत् कालीं सर्व्वकामार्थसिद्धये ॥
निशार्द्धे सा तिथिर्नास्ति तदधः कालसंयुता ।
तत्रापि पूजयेत् कालीं तुलार्कं नैव लङ्घयेत् ॥"
इति तदमूलम् । समूलकत्वेऽपि तुलार्के इत्यत्र तुशब्दः कन्यार्कग्राहकः । तेन तुलार्के कन्यार्के वा इत्यर्थः । तुलार्कमात्रपरत्वे प्रतिसंवत्सर इत्यस्य बाधापत्तिरुक्तत्वात् । तुलार्कं नैव लङ्घयेदित्यस्य तुलार्कविहितपूजां न त्यजेत् इत्यर्थः । तुलार्कविहितपूजाया गौणकार्त्तिकत्वेन कर्त्तव्यतायां विधेस्तात्पर्य्यस्योक्तत्वात् । यद्वा सर्व्वत्र तुलार्कघटितवचनेषु तुलार्कस्यामावास्यायामुपलक्षणतयान्वयः । न तु विशेषणतया । न वा पूजायामपि तदन्वयः । तेन तुलार्कोपलक्षितामावास्यायां निशीथे कालीं पूजयेत् इति विधिस्तेन गौणचान्द्रकार्त्तिकामावास्यालाभः । तस्यामेव तुलार्कसम्बन्धनियमात् । अन्यथा तुलास्थरव्यारब्धत्वाभावेन कदाचित् तत्परप्रतिपदादिदर्शान्तस्य मुख्यकार्त्तिकत्वानुपपत्तिः । मुख्यकार्त्तिकामावास्यायाः कदाचित् वृश्चिके सत्त्वात् न तु तुलार्के नियमः । तथा च तुलार्कनियतामावास्यायां निशीथे कालीं पूजयेदिति पर्य्यवसितम् । तुलार्कं नैव लङ्घयेदित्यत्र तुलार्कपदस्य तुलार्कोपलक्षितामावास्यापूजापरम् । संकल्पवाक्ये तु कार्त्तिके मासीत्युल्लेख्यं न तु राश्युल्लेखोऽपि गौणचान्द्रेण विधानात् । केचित्तु उपलक्षणतया अमावास्यायां अन्वयतात्पर्य्येण तुलाराशिस्थे भास्करे इत्युल्लेख्यं इति भास्करपदोत्तरसप्तम्या उपलक्षणतया तत्कालसम्बन्धबोधनसामर्थ्यात् इति वदन्ति ॥ * ॥ तन्त्रान्तरे ।
"तुलाराशिं गते भानौ दीपयात्रानिशासु च ।
पूजयेत् कालिकां देवीं धर्म्मकामार्थसिद्धये ॥"
तन्त्रे ।
"अर्द्धरात्रात् पुरस्तात्तु यावद्वे घटिकाद्वयम् ।
सा महारात्रिरुद्दिष्टा यद्दत्तमक्षयं भवेत् ॥
महानिशात्र विज्ञेया अर्द्धरात्रात् परं शिवे ।
नाडीचतुष्टयं शस्तं तत्र पूजा महाफला ॥"
विद्योत्पत्तितन्त्रे ।
"दीपोत्सवचतुर्द्दश्याममाया योग एव च ।
कालरात्रिर्म्महेशानि काली तारा प्रियङ्करी ॥"
ज्ञानार्णवे ।
"महारात्रावमावास्यां दक्षिणायाः प्रपूजनम् ।
कार्त्तिके मासि सुश्रोणि कालीप्रीतिकरं परम् ॥
तत्रापि च निशीथे तन्महासिद्धिप्रदं नृणाम् ।
निशीथात् परतो देवि यत्तु नाडीचतुष्टयम् ॥
सा महारात्रिरुत्कृष्टा तत्र पूजा महाफला ।
तारतम्येन देवेशि पूजायाः फलकल्पनम् ॥"
कुलार्णवेऽपि ।
"भूतयुक्ता महेशानि महारात्रौ तु या कुहूः ।
सा कालरात्रिरुद्दिष्टा काली तारा प्रियङ्करी ॥
तत्र पूजा तयोः कार्य्या नानापशुविहिंसनम् ।
बलिदानं बलितिथावात्मनाशकरं शिवे ! ॥"
कुलचूडामणौ ।
"तिथिभ्यः शतगुणं पर्व्व दर्शः कोटिगुणोत्तरः ।
फलोपचारबहुले ज्येष्ठे सूर्य्येन्दुसङ्गमे ।
पूजयित्वा महाकालीं नरो निर्व्वाणमृच्छति ॥
चतुर्वर्गप्रदं दर्शे कार्त्तिके कालिकार्च्चनम् ।
अनन्तफलदं तत्र पर्व्वयुक्ते च पर्व्वणि ॥
निशार्द्धे पूजयेद्देवीं नृमुण्डां मुण्डमालिनीम् ।
पश्चाच्छिवारवे घोरे सर्व्वप्राणिभयङ्करे ॥"
कालीकुलसद्भावे ।
"दीपोत्सवचतुर्द्दश्या संमिश्रा या भवेत् कुहूः ।
तस्यां या तामसी रात्रिः सोच्यते कालरात्रिका ॥
तस्यां पूजा प्रकर्त्तव्या काली तारा प्रियङ्करी ॥
तुलामकरमेषेषु कन्यायां मिथुने तथा ।
भूतविद्धाप्यमावास्या पूज्या भवति यत्नतः ॥"
इति जीमूतवाहनकृतधर्म्मरत्ने कालविवेकधृतहारीतवचनम् ॥ * ॥ शिवरात्रिप्रकरणे देवलोक्तमहानिशा यथा,—
"महानिशे द्वे घटिके रात्रेर्म्मध्यमयामयोः ।"
इति गङ्गामाहात्म्यप्रकरणे गङ्गावाक्याकरधृता तु ।
"महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।
तत्र स्नानं न कुर्व्वीत नित्यनैमित्तिकादृते ॥"
ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ।
"षण्मुहूर्त्ते व्यतीते तु रात्रावेव महानिशा ।"
कृत्यतत्त्वार्णवे बौधायनः ।
"महानिशा तु विज्ञेया मध्यं मध्यमयामयोः ।"

"श्यावंतनुः स्फुटितः स्फुरणो वा
क्षुत्समरामयचौरभयाय ॥")

श्यावदन्, [त्] त्रि, (श्यावा दन्ता यस्य ।"विभाषा श्यावारोकाभ्याम् ।"५ । ४ । १४४ । इति दन्तादेशः । ) कृष्णपीतमिश्रितवर्णदन्तयुक्तः । इति सिद्धान्तकौमुदी ॥

श्यावदन्तः, श्यावदन्तकः, त्रि, (श्यावा दन्ता यस्य । "विभाषा श्यावारोकाभ्याम् ।" ५ । ४ । १४४ । इति विभाषया दन्तादेशो न । स्वार्थे कन् च । ) स्वाभाविककृष्णवर्णदशनयुक्तः । प्रधानदन्तद्वयमध्यस्थक्षुद्रदन्तविशिष्टः । प्रधानदन्तोपरिदन्तान्तरयुक्तः। यथा विष्णुः । अथ नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मानुष्ये लक्षणानि भवन्ति । कुष्ठातिपातकी । ब्रह्महा यक्ष्मी । सुरापः श्यावदन्तकः । सुवर्णहारी कुनखी । गुरुतल्पगो दुश्चर्म्मा इत्यादि । श्यावदन्तकः स्वभावकृष्णदन्तः । प्रधानदन्तद्वयमध्यवर्त्तिक्षुद्रदन्तः । प्रधानदन्तोपरि दन्तान्तरमिति केचित् ॥ कुनखी सङ्कुचितनखः । दुश्चर्म्मा स्वभावतः अनावृतमेढ्रः । अतएव महारोगिणो यावज्जीवमशौचमाह कूर्म्मपुराणम् ।

"क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।
यथेष्टाचरणस्याहुर्म्मरणान्तमशौचकम् ॥"

क्रियाहीनस्य नित्यनैमित्तिकक्रियाननुष्ठायिनः । मूर्खस्य गायत्त्रीरहितस्य । सार्थगायत्त्रीरहितस्येति रुद्रधरः ॥ महारोगिणः पापरोगाष्टकान्यतमरोगवतः । ते च उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासो मधुमेहो भगन्दर उदरोऽश्मरी इत्यष्टौ पापरोगा नारदोक्ताः । यथेष्टाचरणस्य मृतवेश्याद्यासक्तस्य । एवञ्च भविष्यपुराणोक्तं यतिचान्द्रायणप्रायश्चित्तं अकृतप्रायश्चित्तानां कुष्ठादीनां दाहे बोद्धव्यम् । अन्यथैषां प्रायश्चित्तोपदेशो विफलः स्यात् । यथा विष्णुः । कुनखी श्यावदन्तश्च द्वादशरात्रं कृच्छ्रं चरित्वोद्धरेयातां तद्दन्तनखौ इति । अत्र द्वादशरात्रं पराकरूपं तत्र पञ्च धेनवः । न तु प्राजापत्यम् । द्वादशकृच्छ्रैर्यतिचान्द्रायणेन विषमशिष्टत्वात् । अत्र बहूनामेकधर्म्मावधारणात् आकाङ्क्षितत्वात् कुष्ठादीनामपि प्रायश्चित्तम् । अतएव प्रायश्चित्तविवेकेऽप्युक्तं एवं दुश्चर्म्मादिष्वप्यूह्यमिति । महापातकादतिपातकस्य गुरुत्वात् तच्चिह्नेऽपि प्रायश्चित्तं द्विगुणम् । इति शुद्धितत्त्वम् ॥

श्येतः, पुं, ( श्यै ङ गतौ+"हृश्याभ्यामितन् ।" उणा० ३ । ९३ । इति इतन् । ) शुक्लवर्णः । तद्वति, त्रि । इत्यमरः ॥

श्येतकोलकः, पुं, ( श्येतः कोलः क्रोडदेशो यस्य ; कन् । ) मत्स्यविशेषः । पुंटी इति भाषा । यथा । सफरः श्वेतकोलकः । इति हारावली ॥

श्येनः, पुं, ( श्यै ङ गतौ+"श्यास्त्याहृञ्विभ्य इनच् ।" उणा० २ । ४६ । इति इनच् । ) पाण्डुरवर्णः । इति मेदिनी ॥ पक्षिविशेषः । सचान इति बाज् इति च भाषा । तत्पर्य्यायः । शशादनः २ पत्त्री ३ । इत्यमरः ॥ कपोतारिः ४ पतङ्गीरुः ५ । इति शब्दरत्नावली । घातिपक्षी ६ ग्राहकः ७ मारकः ८ । इति जटाधरः ॥ शशादः ९ क्रव्यादः १० क्रूरः ११ वेगी १२ खगान्तकः १३ करणः १४ नीलपिच्छः १५ लम्बकर्णः १६ रणप्रियः १७ रणपक्षी १८ पिच्छवाणः १९ स्थूलनीलः २० भयङ्करः २१ । इति राजनिर्घण्टः ॥ शशघातकः २२ । इति भावप्रकाशः ॥ अस्य मांसगुणाः पक्षशब्दे द्रष्टव्याः ॥*॥ तस्य शुभाशुभसूचकत्वं यथा,—

"प्रदक्षिणीकृत्य नरं व्रजन्तो
यात्रासु वामेन गताः प्रवेशे ।
श्येनाः प्रशस्ताः प्रकृतस्वरास्ते
शान्ताः प्रदीप्ता विततस्वरास्ते ।
श्येनो नृणां दक्षिणवामपृष्ठ-
भागेषु भाग्यैः स्थितिमादधाति ।
तिष्ठन् पुरस्तान्मृतये करोति
युद्धे जयं छत्रध्वजगस्यः ॥"

इति वसन्तराजशाकुने अष्टमवर्गः ॥

श्येनघण्टा, स्त्री, दन्तीवृक्षः । इति राजनिर्घण्टः ॥

श्येनचित्, पुं, ( श्येनेन चयति अन्यपक्षिण इति । चि+क्विप् ।) श्येनपक्षिरक्षकः । इति केचित् ॥ ( श्येन इव चीयते इति । "कर्म्मण्यग्न्याख्यायाम् ।" ३ । २ । ९२ । इति क्विप् । अग्न्यर्थे इष्टकाचयः । इति काशिका ॥ )

श्येनी, स्त्री, श्वेतवर्णा । इति जटाधरः ॥ श्येनपत्नी च ॥ ( सा तु कश्यपात् दक्षकन्यायां ताम्रायां समुत्पन्ना । यथा, मार्कण्डेये ।१०४।८।
"ताम्रा च सुषुवे श्येनीप्रमुखाः कन्यका द्विज ।
यासां प्रसूताः खगमाः श्येनभासप्रका-
द्यः ॥")

श्यै, ङ गतौ । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-सक०-अनिट् । ) तालव्यादिरन्तस्थायोपधः । ङ, श्यायते । इति दुर्गादासः ॥

श्येनम्पाता, स्त्री, ( श्येनपातोऽस्यां वर्त्तते इति । "घञः सास्यां क्रियेति ञः ।" ४ । २ । ५८ । इति ञः । "श्येनतिलस्य पाते ञे ।"६।३।७१ । इति मुमागमः । ) मृगया । इत्यमरः ॥ (यथा, नैषधे । १९ । १२ ।
"नभसि महसां ध्वान्तध्वाङ्क्षप्रमापणपत्त्रिणामिह विहरणैः श्येनम्पातां रवेरवधारयन् ॥")

श्यो(शो)नाकः, पुं, (श्यायते इति । श्यै ङ गतौ+पिनाकादयश्चेति निपातनात् साधुः । ) वृक्षविशेषः । शोनागाछ इति भाषा । तत्पर्य्यायः । मण्डूकपर्णः २ पत्त्रोर्णः ३ नटः ४ कट्वङ्गः ५ टुण्टुकः ६ शुकनासः ७ ऋक्षः ८ दीर्घवृन्तः ९ कुटन्नटः १० शोषकः ११ अरलुः १२ । इत्यमरः ॥ स्योनाकः १३ । इति भरतः ॥ शोषः १४ अवटुः १५ दीर्घवृन्तकः १६ । इति शब्दरत्नावली ॥ पृथुशिम्बिः १७ भल्लूकः १८ । इति जटाधरः ॥ कटम्भरः १९ मयूरजङ्घः २० अरलुकः २१ प्रियजीवः २२ । तद्भेदा यथा,—

"श्योनाकः पृथुशिम्बोऽन्यो भल्लूको दीर्घवृन्तकः ।
टेन्टुकः पीतवृक्षश्च भूतसारो सुनिद्रुमः ॥
निःसारः फलवृन्ताकः पूतिपत्त्रो वसन्तकः ।
मण्डूकवर्णः पीताङ्गो जम्बुकः पीतपादकः ॥
वातारिः पीतकः शोषः कुलटश्च विरोचनः ।
भ्रमरेष्टो वह्निजङ्घो नेत्रनेत्रमिताभिधः ॥"

पुस्तकान्तरे टेन्टुकस्थाने टुण्टुकः फलवृन्ताकस्थाने फलगुवृन्ताकः पीतपादकस्थाने पीतपादपः कुलटस्थाने कुनटः वह्निजङ्घस्थाने बर्हिजङ्घ इति च पाठः ॥ तयोर्गुणाः ।

"श्योनाकयुगलं तिक्तं शीतलञ्च त्रिदोषजित् ।
पित्तश्लेष्मातिसारघ्नं सन्निपातज्वरापहम् ॥"

इति राजनिर्घण्टः ॥*॥

अपि च ।

"श्योनाकः शोषणश्च स्यान्नटकट्वङ्गटुण्टुकाः ।
मण्डूकपर्णपत्त्रोर्णशुकनासकुटन्नटाः ॥
दीर्घवृन्तोऽरलुश्चापि पृथुशिम्बः कटम्भरः ।
श्योनाको दीपनः पाके कटुकस्तुवरो हिमः ॥
ग्राही तिक्तोऽनिलश्लेष्मपित्तकासप्रणाशनः ।
कटुकस्य फलं बालं रूक्षं वातकफापहम् ॥
हृद्यं कषायं मधुरं रोचनं लघु दीपनम् ।
गुल्मार्शःकृमिहृत् प्रोक्तं गुरु वातप्रकोपणम् ॥"

इति भावप्रकाशः ॥

श्रकि, इ ङ सर्पे । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-सक०-सेट् ।) रेफयुक्ताद्यः । इ, श्रङ्क्यते । ङ, श्रङ्कते । सर्पो गतिः । इति दुर्गादासः ॥

श्रग, इ श्रगे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-क्षुतौ अक०-सेट् । ) रेफान्ततालव्यादिः । अयं क्षुतगताविति भट्टमल्लः । इ, श्रङ्गते । इति दुर्गादासः ॥

श्रण, क दाने । इति कविकल्पद्रुमः ॥ ( चुरा०-पर०-सक०-सेट् । ) क, श्राणयति । श्रमते अस्य मादि पुस्तविकल्पनेऽप्यष्टमस्वरानुबन्धाभावोऽन्येषामनुरोधात् । इति दुर्गादासः ॥

श्रण, म दाने । इति कविकल्पद्रुमः ॥ (भ्वा० पर०-सक०-सेट् । ) तालव्यादी रेफयुक्तः । म, श्रणयति । इति दुर्गादासः ॥

श्रत्, अ, श्रद्धा । इति मुग्धबोधटीकायां दुर्गादासः ॥ ( सत्यम् । इति निघण्टुः । ३ । १० ॥ )

श्रथ, इ ङ शैथिल्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सक० च-सेट् । ) शैथिल्यमिह शिथिलीभावस्तत्करणञ्च । इ, श्रन्थ्यते । ङ, श्रन्थते वस्त्रं शिथिलं स्यादित्यर्थः । श्रन्थते वस्त्रं लोकः शिथिलं करोति इत्यर्थः । इति दुर्गादासः ॥

श्रथ, क यत्ने । प्रतिहर्षे । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-यत्ने अक०-प्रतिहर्षे सक०-सेट् ।) क, श्राथयति पठितुं शिष्यः । श्राथयति शिशु लोकः पुनःपुनर्हर्षयति इत्यर्थः । इति दुर्गादासः ॥

श्रथ कि सर्गे । मोक्षे । वधे । इति कविकल्पद्रुम ॥ (चुरा० पक्षे भ्वा० सक० सेट ।) कि, श्राथयति श्रथयति । श्लाघ्यं आथयति स्फटार्थं मधुरं सन्दर्भं पदं यस्य भावालङ्कृतिपेशलं श्रथयति सदाक्षरं नाटकम् । श्रथ्नाति पथि तावदातपहरं श्रान्तं विचिन्त्य च इति हलायुधोक्तं श्रथयतीति श्रथ त क दौर्ब्बल्ये इत्यदन्तस्य रूपम् । अनेकार्थत्वात् यत्नार्थे । इति दुर्गादास ॥

श्रथ त क दौर्ब्बल्ये । इति कविकल्पद्रुम ॥ (अदन्त चुरा० पर० अक० सेट ।) श्रथयति । इति दुर्गादास ॥

श्रथ, म वधे । इति कविकल्पद्रुम ॥ (भ्वा० पर० सक० सेट ।) म, श्रथयति । इति दुर्गादास ॥

श्रथन क्ली, (श्रथ+ल्युट ।) वध । यत्न । पुन पुनर्हर्षणम् । बन्धनम् । मोचनम् । शिथिलीकरणम् । इति श्रथधातोरनटप्रत्ययेन निष्पन्नम् ॥

श्रद्दधान, त्रि (श्रद्दधाति इति । श्रत्+धा+शानच ।) श्रद्धायुक्त । यथा —

“तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया ॥”

इति श्रीभागवते १ स्कन्ध २ अध्याय ॥

श्रद्धा, स्त्री (श्रद्दधानमिति । श्रत्+धा+“षिद्भिदादिभ्योऽङ् ।” ३ । ३ । १०४ । इत्यङ् । टाप ।) सम्प्रत्यय । स्पृहा । इत्यमर ॥ (यथा रामायणे २ । २८ । २ ।

‘चिच्छेद जीविते श्रद्धां धर्म्मे यशसि चात्मन ॥’)

आदर । शुद्धि । इति शब्दरत्नावली ॥ शास्त्रार्थे दृढप्रत्यय । यथा —

“प्रत्ययो धर्म्मकार्य्येषु तथा श्रद्धेत्युदाहृता ।
नास्ति ह्यश्रद्दधानस्य धर्म्मकृत्ये प्रयोजनम् ॥”

इति स्मृति ॥

(यथा, रघु । २ । १६ ।

‘बभौ च सा तेन सतां मतेन
श्रद्धेव साक्षात् विधिनोपपन्ना ॥’)

चेतस प्रसाद । इति पातञ्जलभाष्ये वदव्यास ॥ सा त्रिविधा । यथा,—

श्रीभगवानुवाच ।

“त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥
सत्त्वानुरूपा सर्व्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्ध स एव स ॥
यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसा ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जना ॥”

इति श्रीभगवद्गीतायां १७ अध्याय ॥

तस्या प्रशंसा यथा —

ब्रह्मोवाच ।

“श्रद्धापूर्व्वा इमे धर्म्मा श्रद्धा मध्यान्तसंस्थिता ।
श्रद्धा नित्या प्रतिष्ठाश्च धर्म्मा श्रद्धैव कीर्त्तिता ।
श्रुतिमात्ररसा सूक्ष्मा प्रधानपुरुषेश्वरा ।
श्रद्धामात्रेण गृह्यन्ते न करेण न चक्षुषा ॥
कायक्लेशैर्न बहुभिस्तथैवार्थस्य राशिभि ।
धर्म्म सम्प्राप्यते सूक्ष्म श्रद्धाहीनै सुरैरपि ॥
श्रद्धा धर्म्म पर सूक्ष्म श्रद्धा ज्ञानं हुतं तप ।
श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्व्वमिदं जगत् ॥
सर्व्वस्वं जीवितं वापि दद्यादश्रद्धया यदि ।
नाप्नुयात्तत्फलं किञ्चित् श्रद्धादानं ततो भवेत् ॥
एवं श्रद्धान्वया सर्व्वे सर्व्वधर्म्मा प्रकीर्त्तिता ।
केशव श्रद्धया गम्यो ध्येय पूज्यश्च सर्व्वदा ॥”

इति वह्निपुराणे धेनुदानमाहात्म्याध्याय ॥

देवल ।

‘यथावदाहृदिते पात्रे श्रद्धया प्रतिपादनम् ।
दानमित्यभिनिर्द्दिष्टं व्याख्यानन्तस्य वक्ष्यते ॥”

उद्दिष्टे शास्त्रकथिते । श्रद्धा देवलोक्ता यथा,

प्रतुकतिष्ठानस्या च सदा श्रद्धेति कीर्त्तिता ।’

अतएव भगवद्गीतासु ।

‘अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् ।
असदित्युच्यते पार्थ न च तत् प्रेत्य नेह च ॥”

हरिवंशे बलिं प्रति भगवद्वाक्यम् ।

अश्रोत्रियं श्राद्धमधीतमव्रतं
त्वदक्षिणं यज्ञमनृत्विजा हुतम् ।
अश्रद्धया दत्तमसंस्कृतं हवि
भागा षडेते तव दैत्यपुङ्गव ॥”

इति शुद्धितत्त्वम् ॥

याज्ञवल्क्य ।

“श्रद्धाविधिसमायुक्तं कर्म्म यत् क्रियते नृभि ।
सुविशुद्धेन भावेन तदानन्त्याय कल्पते ॥”

योगियाज्ञवल्क्य ।

विधिहीनं भवेद्दुष्टं कृतमश्रद्धया च तत् ।
तद्धरन्त्यसुरास्तस्य मूढस्य दुष्कृतात्मन ॥’

इति प्रायश्चित्ततत्त्वम् ॥

श्रद्धालु स्त्री (श्रद्दधातीति । श्रत्+धा+“स्पृहिगृहिपतिदयिनिद्रेति ।” ३ । २ । १५८ । इति आलुच ।) दोहदवती । श्रद्धायुक्ते, त्रि । इत्यमर ॥ (यथा भागवते । १ । ८ । १० ।

“सोऽहं तवैतत् कथयामि वत्स
श्रद्धालवे नित्यमनुव्रताय ॥”)

श्रद्धावान्, [त्] त्रि (श्रद्धा विद्यतेऽस्येति । श्रद्धा+मतुप । मस्य व ।) श्रद्धायुक्त । यथा,—

“श्रद्धावान् लभते ज्ञानं तत्पर संयतेन्द्रिय ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥”

इति भगवद्गीतायां ४ अध्याय ॥

श्रन्थ, कि दर्भे । वधे । इति कविकल्पद्रुम ॥ (चुरा० पक्षे भ्वा० सक० सेट ।) कि श्रन्थयति श्रन्थति । दर्भो ग्रन्थनम् । इति दुर्गादास ॥

श्रन्थ श मोचे । प्रतिहर्षे । इति कविकल्पद्रुम ॥ (क्र्या० पर० सक० सेट ।) श श्रथ्नाति वत्स लोक मोचयतीत्यर्थ । श्रथ्नाति शिशु लोक पुन पुनर्हर्षयति इत्यर्थ । शश्रन्थ । इति दुर्गादास ॥

श्रन्थ पुं (श्रथ्नाति मोचयति भक्तान् संसारादिति । श्रन्थ+अच ।) विष्णु । इति त्रिकाण्डशेष ॥ (श्रन्थ+भावे घञ् ।) श्रन्थधात्वर्थोऽप्यत्र ॥

श्रन्थन क्ली, (श्रन्थ+भावे ल्युट ।) ग्रन्थनम् । यथा —

सन्दर्भो रचना गुम्फ श्रन्थनं ग्रन्थनं समा ।

इति हेमचन्द्र ॥

श्रन्थित त्रि ग्रन्थित । बद्ध । सन्दर्भ । मुक्त । हर्षित । इति श्रन्थधातो क्तप्रत्ययेन निष्पन्न ॥

श्रपित त्रि (श्रप+क्त ।) घृतदुग्धजलमिश्रपक्वद्रव्यम् । यथा —

‘निष्पक्वं क्वथिते पक्वस्वान्यं चौरं पय शृतम् ।
चन्यत्तु श्रपितं श्राणं स्यादुत्तोहृते मले ।

इति जटाधर ॥

श्रपिता स्त्री (श्रप+क्त । टाप ।) काञ्जिकम् । इति कश्चित ॥

श्रम उ भ य जि इर तप खेदयो । इति कविकल्पद्रुम ॥ (दिवा० पर० अक० सेट क्त्वावेट ) उ श्रमित्वा श्रान्त्वा । भ य श्राम्यति लोक तप करोति खिद्यति वेत्यर्थ । जि श्रान्तोऽस्ति । इर, अश्रमत् अश्रमीत । अस्मात् पुषादित्वाद्विश्व इत्यन्ये । श्रम्यात् विश्रामश्चेति च इति रघो श्राम तु क मर्षे इत्यदन्तस्य रूपम् । इति दुर्गादास ॥

श्रम, पुं (श्रम+घञ् । मोदात्तोपदेशस्येति वृद्ध्यभाव ।) तप । खेद । इति श्रमधात्वर्थदर्शनात् । क्लान्ति । तत्पर्य्याय । क्लम २ क्लेश ३ परिश्रम ४ प्रयास ५ आयास ६ व्यायाम ७ । इति हेमचन्द्र ॥ क्लमथ ८ । इत्यमर ॥ (यथा, भागवते । ५ । १६ । १४ ।

“यथेहिकामुष्मिककामलम्पट
सुतेषु दारेषु धनेषु चिन्तयन् ।
शङ्केत विद्वान् कुकलेवरात्ययात्
यस्तस्य यत्न श्रम एव केवलम् ॥”)

शास्त्राभ्यास । तत्पर्य्याय । खुरली २ योग्य ३ अभ्यास ४ । इति च हेमचन्द्र ॥

श्रमण, पुं (श्राम्यति तपस्यतीति । श्रम+ल्यु ।) यतिविशेष । इति मेदिनी ॥ (स तु बौद्धसन्न्यासी ।) तत्पर्य्याय ।

“सुक्तिर्मोचोऽपवर्गोऽथ मुमुक्षु श्रमणो यति ।
वाचयमो व्रती साधुरनगार ऋषिर्मुनि ।
निर्ग्रन्थो भिक्षुरस्य तु तपोयोगसमादय ॥”

इति हेमचन्द्र ॥

(यथा, रामायणे । १ । १४ । १२ ।

“तापसा भुञ्जते चापि श्रमणाश्चैव भुञ्जते ॥”)

निन्द्यजीविनि, त्रि । इति मेदिनी ॥

श्रमणा स्त्री, सुदर्शना । मांसी । मुण्डीरी । शबरीभेद । इति मेदिनी ॥

श्रमी [न्] त्रि, श्रमविशिष्ट । श्रमशब्दादस्त्यर्थे इनप्रत्ययेन निष्पन्न । (यद्वा, श्राम्यतीति ।

श्रम तपःखेदयोः + "श्रमित्वराभ्यो घिनुण् ।" ३ । २ । १४१ । इति घिनुण् ।)

श्रयः, पुं, ( श्रि + "एरच् ।" ३ । ३ । ५६ । इति अच् ।) आश्रयः । श्रिधातोरल्प्रत्ययेन निष्पन्नः ॥

श्रयणं, क्ली, (श्रि + ल्युट् ।) आश्रयः । तत्पर्य्यायः । आयः २ । इत्यमरः ॥ ( यथा, भागवते । ८ । ६ । २८ ।
"तत्रामृतं सुरगणाः फलमञ्जसापु-
र्यत्पादपङ्कजरजःश्रयणान्न दैत्याः ॥")

श्रवः, पुं, ( श्रूयतेऽनेनेति । श्रु + "ऋदोरप् ।" ३ । ३ । ५७ । इत्यप् ।) कर्णः । ( यथा, कथासरित्सागरे । १०३ । १५८ ।
"तुमुलप्रोल्लसच्छङ्खदुन्दुभिध्वानरुद्धश्रवः ।
चचाल स बलाम्भोधिस्तूर्य्यगम्भीरभीषणः ॥"
श्रु + भावे अप् ।) श्रवणम् । इत्यमरटीकायां भरतः ॥ ( यथा, रघुः । ११ । ७१ ।
"सुप्तसर्प इव दण्डघट्टनात्
रोषितोऽस्मि तव विक्रमश्रवात् ॥"
श्रूयते इति । कर्म्मणि अप् । शब्दः । यथा, वाजसनेयसंहितायाम् । १६ । ३४ ।
"नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च ॥" )

श्रवः, [स्] क्ली, ( श्रूयतेऽनेनेति । श्रु + "सर्व्वधातुभ्योऽसुन् ।" इत्यसुन् । ) कर्णः । इत्यमरः ॥ (अन्नम् । इति निघण्टुः । २ । ७ ॥ यथा, ऋग्वेदे । ३ । १६ । ५ ।
"अधिश्रवांसि धेहि नस्तनूषु ॥"
धनम् । इति निघण्टुः । २ । १० ॥ यशः । यथा, भागवते । ४ । १७ । ६ ।
"श्रवः सुश्रवसः पुण्यं सर्व्वदेवकथाश्रयम् ॥"
शब्दः । यथा, तत्रैव । ५ । ११ । ६ ।
"गन्धाकृति स्पर्शरसश्रवांसि
विसर्गरत्यर्त्त्यभिजल्पशिल्पाः ॥")

श्रवणं, क्ली, ( श्रूयतेऽनेनेति । श्रु + करणे ल्युट् ।) कर्णः । इत्यमरः ॥ न स्त्रियां श्रवणः कर्णः । इति हेममाली । इति तट्टीकायां भरतः ॥ यत्त्वाचाभ्यन्तरे श्रवणयोश्छिद्रं भवति । इति सुखबोधः ॥ श्रुतिः । सा तु कर्णेन्द्रियज्ञानम् । इति मेदिनी ॥ शोना इति भाषा ॥ ( यथा, मनुः । ८ । ७४ ।
"समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिध्यति ॥"
तत्तु नीतिशास्त्रोक्तधीगुणानामन्यतमम् । यथा, कामन्दकीये । ४ । २२ ।
"शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा ।
ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः ॥")
षड्विधलिङ्गैरशेषवेदान्तानामद्वितीये वस्तुनि तात्पर्य्यावधारणम् । लिङ्गानि तु उपक्रमोपसंहारावभ्यासोऽपूर्व्वता फलार्थवादोपपत्त्याख्यानि । इति वेदान्तसारः ॥

श्रवणः, पुं क्ली, श्रवणानक्षत्रम् । इति मेदिनी ॥ ( यथा च स्मृतिः ।
"अमार्कपाते श्रवणं यदि स्यादिति ॥")

श्रवणद्वादशी, स्त्री, ( श्रवणयुक्ता द्वादशी । ) श्रवणानक्षत्रयुक्तभाद्रशुक्लद्वादशी । यथा,—
पितामह उवाच ।
"श्रवणद्वादशीं वक्ष्ये भुक्तिमुक्तिप्रदायिनीम् ।
एकादशी द्वादशी च श्रवणेन च संयुता ॥
विजया सा तिथिः प्रोक्ता हरिपूजादि चाक्षयम् ।
एकभक्तेन नक्तेन तथैवायाचितेन च ॥
उपवासेन भक्ष्येण नैवाद्वादशिको भवेत् ।
कांस्यं माषं तथा क्षौद्रं लोभं वितथभाषणम् ।
व्यायामञ्च व्यवायञ्च दिवास्वप्नमथाञ्जनम् ।
शिलापिष्टं मसूरञ्च द्वादश्यां वर्ज्जयेन्नरः ॥
मासि भाद्रपदे शुक्ले द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥
सङ्गमे सरितः स्नानं बुधयुक्ता महाफला ।
कुम्भे सरत्ने सजले यजेत् स्वर्णन्तु वामनम् ॥
सितवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितम् ।
ॐ नमो वासुदेवाय शिरः संपूजयेत्ततः ॥
श्रीधराय मुखं तद्वत् कण्ठं कृष्णाय वै नमः ।
नमः श्रीपतये वक्षो भुजौ सर्व्वास्त्रधारिणे ॥
व्यापकाय नमः कुक्षौ केशवायोदरं बुधः ।
त्रैलोक्यपतये मेढ्रं जङ्घां सर्व्वभृते नमः ॥
सर्व्वात्मने नमः पादौ नैवेद्यं घृतपायसम् ।
कुम्भांश्च मोदकान् दद्यात् जागरं कारयेन्निशि ॥
स्नात्वा प्रातोऽर्च्चयित्वा तु कृतपुष्पाञ्जलिर्व्वदेत् ।
नमो नमस्ते गोविन्द बुध श्रवणसंज्ञक ॥
अघौघसंक्षयं कृत्वा सर्व्वसौख्यप्रदो भव ।
प्रीयतां देव देवेशो विप्रेभ्यः कलसान् ददेत् ।
नद्यास्तीरेऽथवा कुर्य्यात् सर्व्वान् कामानवा-
प्नुयात् ॥"
इति गारुडे १४१ अध्यायः ॥
अन्यत् द्वादशीशब्दे द्रष्टव्यम् ॥

श्रवणशीर्षिका, स्त्री, श्रावणीवृक्षः । इति राजनिर्घण्टः ॥

श्रवणा, स्त्री पुं, नक्षत्रविशेषः । इति मेदिनी ॥ सा तु अश्विन्याद्यन्तर्गतद्वाविंशनक्षत्रम् । तस्याः स्वरूपं शराकारतारात्रयात्मकम् । तस्याधिदेवो हरिः । यथा,—
"तारकात्रयमिते शराकृतौ
केशवे गगनमध्यवर्त्तिनि ।
मत्तवारणगतेऽनलप्रभो
निर्व्ययुर्गजमहीशलिप्सिकाः ॥" दं १ । पं १८
इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥ * ॥
तत्र जातफलम् ।
"शास्त्रानुरक्तो बहुपुत्रमित्रः
सत्पुत्रभक्तिर्विजितारिवर्गः ।
चेज्जन्मकाले श्रवणा हि यस्य
प्रेमा पुराणश्रवणे प्रवीणः ॥"
इति कोष्ठीप्रदीपः ॥ * ॥
तत्र गृहारम्भार्थतृणकाष्ठादिच्छेदनसंग्रहदक्षिणादिक्गमननिषेधो यथा,—
"छेदनं संग्रहञ्चैव काष्ठादीनां न कारयेत् ।
श्रवणादौ बुधः षट्के न गच्छेद्दक्षिणां दिशम् ॥
अग्निपीडा भयं शोको राजपीडा धनक्षयः ।
संग्रहे तृणकाष्ठानां कृते वस्वादिपञ्चके ॥"
इति ज्योतिस्तत्त्वम् ॥

श्रवणा, स्त्री, मुण्डतिकावृक्षः । इति रत्नमाला ॥

श्रवाय्यः, पुं, ( श्रु श्रवणे + "श्रुदक्षिस्पृहिगृहिभ्य आय्यः ।" उणा० ३ । ९६ । इति आय्यः । ) बलियोग्यपशुः । यज्ञियपशुः । इति सिद्धान्तकौमुदी ॥ ( श्रवणीये, त्रि । यथा, ऋग्वेदे । १ । २७ । ८ ।
"वाजो अस्ति श्रवाय्यः ॥"
"श्रवाय्यः श्रवणीयो वाजोऽस्ति बलविशेषोऽस्ति ।" इति तद्भाष्यम् ॥ )

श्रविष्ठा, स्त्री, ( श्रवणमिति श्रवः । सोऽस्या अस्तीति । मतुप् । अतिशयेन श्रववती । अस्ति श्रयणे तमाविष्ठनौ इति इष्ठन् । विन्मतोर्लुगिति मतुपो लुक् । ) धनिष्ठानक्षत्रम् । इत्यमरः ॥ ( यथा, वामनपुराणे १७ अध्याये ।
"श्रविष्ठायां तथा एवं शालिभक्तञ्च दोहदे ।
पूषे सुखं पुनश्चैव दोहदे घृतपायसम् ॥")

श्रविष्ठाजः, पुं, ( श्रविष्ठायां जायते इति । जन् + डः । ) बुधग्रहः । इति त्रिकाण्डशेषः ॥ तत्र जाते, त्रि ॥

श्रव्यः, त्रि, श्रोतव्यः । श्रवणार्हवाक्यादिः । श्रुधातोर्यप्रत्ययेन निष्पन्नः ॥ ( यथा, राधातन्त्रे । ६ । ३ ।
"यच्छ्रुत्वा परमेशानि श्रव्यमन्यन्न रोचते ॥")

श्रा, ल खेदे । इति कविकल्पद्रुमः ॥ ( अदा०-पर०-अक०-अनिट् । ) रेफयुक्तसात्वयादिः । ल, श्राति । इति दुर्गादासः ॥

श्रा, ल म पाके । इति कविकल्पद्रुमः ॥ ( अदा०-पर०-सक०-अनिट् । ) रेफयुक्तसात्वयादिः । ल, श्राति । म, श्रपयति । इति दुर्गादासः ॥

श्राणं, त्रि, ( श्रा + क्तः । ) पक्वम् । इति मेदिनी ॥ एतद्दुग्धजलभिन्नपक्वद्रव्यम् । इति जटाधरः ॥

श्राणा, स्त्री, ( श्रायते स्मेति । श्रा + क्तः । ) यवागूः । इत्यमरः ॥

श्राद्धं, क्ली, (श्रद्धा प्रयोजनमस्य । श्रद्धा + "चूडादिभ्य उपसंख्यानम् ।" ५ । १ । ११० । इत्यस्य वार्त्तिकोक्त्या अण् । ) शास्त्रोक्तविधानेन पितृकर्म्म । इत्यमरः ॥ पितृनुद्दिश्यकश्रद्धयान्नादिदानम् । तस्य लक्षणम् । यथा,—
"संस्कृतव्यञ्जनाढ्यञ्च पयोदधिघृतान्वितम् ।
श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते ॥"
इति पुलस्त्यवचनात् श्रद्धया अन्नादेर्दानं श्राद्धम् इति वैदिकप्रयोगाधीनयौगिकम् । इति श्राद्धतत्त्वम् ॥ अपि च । सम्बोधनपदोपनीतान् पित्रादीन् चतुर्थ्यन्तपदेनोद्दिश्य हविस्त्यागः श्राद्धम् । तच्च द्वादशविधं यथा । विश्वामित्रः ।
"नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्व्वणञ्चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥
कर्म्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रार्थैकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥

एतद्भविष्यपुराणे विवृतम्। यथा भविष्ये
अहन्यहनि यच्छ्राद्धं तन्नित्यमभिधीयते।
वैश्वदेवविहीनं तन्मशक्तावुदकेन तु॥
एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते।
तदप्यदैवं कर्त्तव्यमयुग्मानाशयेद्द्विजान्॥
कामाय तु हितं काम्यमभिप्रेतार्थसिद्धये।
पार्व्वणेन विधानेन तदप्युक्तं खगाधिप॥
वृद्धौ यत् क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते।
सर्व्वं प्रदक्षिणं कार्य्यं पूर्व्वाह्णे तूपवीतिना।
गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयम्।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्।
ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम्।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि॥
अमावास्यां यत् क्रियते तत् पार्व्वणमुदाहृतम्।
क्रियते वा पर्व्वणि यत् तत् पार्व्वणमिति स्थितिः।
गोष्ठ्यां यत् क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते।
बहूनां विदुषां सम्यक्सुखाय पितृतृप्तये॥
क्रियते शुद्धये यत्तु ब्राह्मणानान्तु भोजनम्।
शुद्ध्यर्थमिति तत् प्रोक्तं वैनतेय मनीषिभिः॥
निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने चैव श्राद्धं कर्म्माङ्गमेव च॥
देवानुद्दिश्य यच्छ्राद्धं तद्दैविकं मिहोच्यते।
हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः॥
गच्छन् देशान्तरं यस्तु श्राद्धं कुर्य्यात्तु सर्पिषा।
यात्रार्थमिति तत् प्रोक्तं प्रवेशे च न संशयः॥
शरीरोपचये श्राद्धमर्थोपचय एव च।
पुष्ट्यर्थमेतद्विज्ञेयमौपचायिकमुच्यते॥ *॥
तस्य पञ्चविधत्वं यथा कूर्म्मपुराणे
नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च।
पार्व्वणञ्चेति मनुना श्राद्धं पञ्चविधं स्मृतम्॥'
कूर्म्मपुराणे।
अहन्यहनि नित्यं स्यात् काम्यं नैमित्तिकं पुनः।
एकोद्दिष्टन्तु विज्ञेयं वृद्धिश्राद्धञ्च पार्व्वणम्॥
एतत् पञ्चविधं श्राद्धं मनुना परिकीर्त्तितम्॥"
मत्स्यपुराणे त्रैविध्यमुक्तं यथा —
नित्यं नैमित्तिकं काम्यं त्रिविधं श्राद्धमुच्यते॥"
तस्य त्रैविध्यम्। त्रिधाना नित्यकाम्यरूपतया
द्वैविध्यं वक्ष्यते। तत्र नित्यपदमावश्यकत्वपरतया
पार्व्वणैकोद्दिष्टयोरपि परिभाषायाम्। काम्य
पदमनावश्यकत्वार्थम् इति श्राद्धविवेकः॥*॥
आदावाश्चर्य्यमुनिपुत्रस्य निमिना तत्पुत्रस्य
श्राद्धं कृतम् यथा —
धरण्युवाच।
"को गुणः पितृयज्ञस्य कथमेव प्रपूज्यते।
केन चोत्पादितं श्राद्धं कस्मिन् काले किमात्मकम्॥
एतदिच्छाम्यहं श्रोतुं विस्तरेण वदस्व मे।
वराह उवाच।
ममोद्भवे ब्रह्मणस्तु आत्रेय इति विश्रुतः।
आत्रेयस्यात्मजो विप्रो निमिर्नाम तपोधनः॥
निमिपुत्रस्तु धर्म्मात्मा नियुक्तोऽभूत् विश्रुतः।
वर्षाणाञ्च सहस्राणि सम्पूर्णानि वसुन्धरे।
कृत्वा तपश्च घोरमसौ पञ्चत्वमागतः॥
नष्टञ्च तं सुतं दृष्ट्वा निमेः शोक उपाविशत्।
पुत्रशोकाभिसन्तप्तो दिवा रात्रौ च चिन्तयन्॥
निमिः कृत्वा ततः शोकं विधिना तत्र माधवि।
तमेव गतसङ्कल्पश्चिरात्रे प्रत्यपद्यत॥
तस्य प्रतिविशुद्धस्य माघमासे तु द्वादशीम्।
मनः सहृत्य विषयं बुद्धिविस्तारगामिनी॥
स निमिश्चिन्तयामास श्राद्धकल्पं समाहितः।
यानि तस्यैव भोज्यानि मूलानि च फलानि च॥
यानि कानि च भक्ष्याणि यच्च रससम्भवम्।
यानि तस्यैव पेयानि सर्व्वमेतदुदाहरत्॥
आमन्त्र्य ब्राह्मणं पूर्व्वं शुचिर्भूत्वा समाहितः।
दक्षिणावर्त्तितं सर्व्वं बुधिः स्वयमकुर्व्वत॥
सप्त कृत्वा ततस्तत्र युगपत् समुपाविशत्।
दत्त्वा तु माषशाकानि मूलानि च फलानि च।
पूजयित्वा तु विप्रान् स सप्त तत्र सुन्दरि॥
कृत्वा तु दक्षिणाग्रांश्च कुशांश्च प्रयतः शुचिः।
प्रददौ श्रीमतः पिण्डं नामगोत्रमुदाहरन्॥
एतस्मिन्नन्तरे देवि नारदो द्विजसत्तम।
जगाम तापसारण्यं स्वच्छाश्रमविभूषितम्॥
स दृष्ट्वा पूजयामास स्वागतेनाथ माधवि।
भीतो गद्गदया वाचा निश्वसंश्च मुहुर्मुहुः॥
सर्व्वोऽहं भाषतः विप्र कारुण्येन समन्वितः।
कृतं स्नेहाच्च पुत्रार्थं मया सकरुणं यत् कृतम्॥
तर्पयित्वा द्विजान् सप्त अन्नाद्येन फलेन च।
पश्चाद्विसर्ज्जितं पिण्डं दर्भानास्तीर्य्य भूतले॥
उदकानयनञ्चैव अपसव्येन पातितम्।
शोकस्नेहप्रभावेण एतत् कर्म्म मया कृतम्॥
न च श्रुतं मया पूर्व्वं न दैवैरृषिभिः कृतम्।
भयं तीव्रं प्रपद्यामि मुनिशापात् सुदारुणात्॥
नारद उवाच।
न भेतव्यं द्विजश्रेष्ठ पितरं शरणं व्रज।
अधर्म्मं न च पश्यामि धर्म्मश्चैवात्र संशयः॥
नारदेनैवमुक्तस्तु निमिध्यानमुपाविशत्।
कर्म्मणा मनसा वाचा पितरं शरणं गतः॥
ततोऽसौ चिन्तयामास वंशकर्त्तारमात्मनः।
ध्यायमानस्ततोऽभ्यासं आजगाम तपोधनः॥
पुत्रशोकेन सन्तप्तं दृष्ट्वा तपोधनः।
पुत्रमाश्वासयामास वाग्भिरिष्टाभिरव्ययैः॥
निमे सङ्कल्पितश्चायं पितृयज्ञस्तपोधन।
पितृयज्ञेति निर्दिष्टो धर्म्मोऽयं ब्रह्मणा स्वयम्॥
ततो व्यतिक्रम्य धर्म्मं क्रतुरेकः प्रतिष्ठितः।
कृतः स्वयम्भुवा पूर्व्वं श्रेष्ठो यो विधिरुत्तमः॥"
इति वाराहे श्राद्धोत्पत्तिनामाध्यायः॥*॥
अपि च।
अपसव्येन दातव्यं माघि माघि तिलोदकम्।
प्रणम्य शिरसा देवीर्न्निर्व्वापस्य च धारिणी।
वैष्णवी काश्यपी चेति अभया चेति नामतः॥
एवं स्मृतः प्रीयन्ते पितरश्च न संशयः।
परमात्मा शरीरस्थो देवतानां मया कृतः॥
अयमत्र वरारोहे देवताभ्यादिनि कृताः।
पितृदेवा भविष्यन्ति भोक्तारः पितृपिण्डकान्॥
देवतासुरगन्धर्व्वा यक्षराक्षसपन्नगाः।
पिण्डं श्राद्धस्य पश्यन्ति वायुभूता न संशयः॥
पितृयज्ञं विधानाद्धि ये कुर्व्वन्ति विदो जनाः।
आयुः कीर्त्तिर्व्वलं तेजो धनं पुत्रपशुस्त्रियः॥
ददन्ति पितरस्तस्य आरोग्यं नात्र संशयः।
आत्मकर्म्मवशाल्लोकान् प्राप्नुवन्तीह शोभनान्।
तिर्य्यक्त्वं च विमुच्यन्ते पितृभावाच्च मानवाः।
नरके पच्यमानानां त्राता भवति मानवः॥
पूजकः पितृदेवानां सर्व्वकालं यशस्विने।
द्विजातीस्तर्पयित्वा तु पूर्व्वेण विधिना नरः॥
अर्च्चयेत्तस्य मन्यन्ते पितरः श्राद्धतर्पिताः।
वरा ये पितृभक्तास्ते प्राप्नुवन्ति परां गतिम्॥*॥
यथार्हं तत्र वै कार्य्यं सुविश्लेषं शृणुष्व मे।
रत्ने तु तत्र मध्याह्ने श्राद्धारम्भन्तु कारयेत्॥
स्वागतञ्च तथा कृत्वा पाद्यार्थं मण्डलं शुचि।
पाद्यं दत्त्वा तु विप्राय गृहस्याभ्यन्तरं नयेत्॥
आसनं कल्पयित्वा तु आवाह्य तदनन्तरम्।
अर्घ्यं दद्याद्विधानेन गन्धमाल्यैः प्रपूज्य च॥
धूपं दीपं तथा वस्त्रं तिलोदकमथापि वा।
पात्रञ्च भोजनस्यार्थे विप्राग्रे धारयेत्तथा॥
भक्षणं मण्डलं कार्य्यं पङ्क्तिदोषनिवारकम्।
अभिकाय्य ततः कृत्वा अन्नञ्च परिवेशयेत्॥
तच्च काम्यन्तु सङ्कल्प्य पितॄनुद्दिश्य सुन्दरि। \
यथासुखेन भोक्तव्यमिति ब्रूयाद्द्विजान् प्रति।
रक्षोघ्नमन्त्रपाठोऽथ आचमेत विचक्षणः।
तृप्तांस्तु ब्राह्मणान् ज्ञात्वा दद्याद्वै विकिरं
ततः॥
उत्तरापोशनं दत्त्वा पिण्डपूजान्तु कारयेत्।
दक्षिणाभिमुखो भूत्वा दर्भानास्तीर्य्य भूतले॥
पिण्डदानं प्रकुर्व्वीत पित्रादित्रितयं तथा।
पिण्डानां पूजनं कार्य्यं तन्मुद्रैर्यथाविधि॥
ब्राह्मणस्य च हस्ते तु दद्यान्मध्यमात्मवान्।
पिण्डाक्षयस्तु वसुधे यावत्तिष्ठन्ति भूतले।
आप्यायमानाः पितरस्तावत्तिष्ठन्ति वै शुभे।
उपस्पृश्य शुचिर्भूत्वा दद्यात् प्राग्दक्षिणानि च॥
प्रणम्य शिरसा भूमौ निर्व्वापस्य च धारिणी।
वैष्णवी काश्यपी चेति अभया चेति नामतः॥
भक्षयेत् प्रथमं पिण्डं मन्त्रैः देवञ्च मध्यमम्।
तृतीयमुदके दद्यात् श्राद्धे एवं विधिः स्मृतः।
पितृदेव विसृज्याथ भक्त्या तु प्रणमेत्तान्।
एवं कृते तुष्यन्ति पितृदेवा न संशयः॥
आयुष्यं प्रयच्छन्ति पुत्रपौत्रधनानि च।
तथोत्तमेषु विप्रेषु दद्यात् श्राद्धं विधानतः॥
अन्यथा तत्तु वै श्राद्धं निष्फलं नास्ति संशयः।
मन्त्रहीनं क्रियाहीनं यत् श्राद्धं कुरुते द्विजः।
मन्त्रत्रयासुरैन्द्रस्य फलं भवति भामिनि॥"
इति वाराहे पितृयज्ञनिर्णयनामाध्यायः॥*॥
तस्याधिकारिक्रमो यथा —
पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृ
सन्ततिः।
सपिण्डसन्ततिर्व्वापि क्रियार्हो नृप जायते।
तेषामभावे सर्व्वेषां समानोदकसन्ततिः।
मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेन वा।

कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्य्या क्रिया नृप ।
संघातान्तर्गतैर्व्वापि कार्य्याः प्रेतस्य याः क्रियाः ॥
उत्सन्नबन्धुरिक्थाद्वा कारयेदवनीपतिः ।
पूर्व्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ॥
त्रिप्रकाराः क्रियास्त्वेतास्तासां भेदं शृणुष्व मे ।
आदाहवार्य्यायुधादिस्पर्शाद्यन्तास्तु याः क्रियाः ॥
ताः पूर्व्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ।
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ॥
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ।
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा ॥
संघातान्तर्गतैश्चैव राज्ञा वा धनहारिणा ।
पूर्व्वाः क्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः ।
दौहित्रैर्व्वा नरश्रेष्ठ कार्य्यास्तत्तनयैस्तथा ।
मृताहनि च कर्त्तव्याः स्त्रीणामप्युत्तराः क्रियाः ॥
प्रतिसंवत्सरं राजन्नेकोद्दिष्टं विधानतः ॥"

इति विष्णुपुराणे ३ अंशे १३ अध्यायः ॥ * ॥

याज्ञवल्क्य उवाच ।

"अथ श्राद्धविधिं वक्ष्ये सर्व्वपापप्रणाशनम् ।
अमावास्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत् सूर्य्यसंक्रमः ।
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः ॥
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः ॥ * ॥
अग्र्यः सर्व्ववेदेषु श्रोत्रियो वेदविद्युवा ।
वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णिकः ॥
स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः ।
त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः ॥
कर्म्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धदेवताः ॥ * ॥
रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
अवकीर्णादयो ये च ये चाचारविवर्ज्जिताः ।
अवेक्ष्याश्च ये सर्व्वे न श्राद्धार्हाः कदाचन ॥ * ॥
निमन्त्रयेच्च पूर्व्वेद्युर्ब्राह्मणांश्च संयतैः ।
आयातांश्चैव पूर्व्वाह्णे ह्यासने उपवेशयेत् ॥
युग्मान्दैवे तथा पित्र्ये सुप्रदेशे स्वशक्तितः ।
द्वौ दैवे प्रागुदक् पित्र्ये त्रीण्येकं चोभयोः पृथक् ॥
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ।
हस्तप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि ॥
आवाह्य तदनुज्ञातो विश्वेदेवास इत्यृचा ।
यवैरन्ववकीर्य्याथ भाजने सपवित्रके ॥
शन्नो देव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा ।
या दिव्या इति मन्त्रेण हस्तेष्वेव विनिक्षिपेत् ॥
गन्धोदके तथा धूपमाल्यदानप्रदीपकम् ।
अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ॥
द्विगुणांस्तु कुशान् दत्त्वा उशन्तस्त्वेत्यृचा पितॄन् ।
आवाह्य तदनुज्ञातो जपेदायान्तु नस्ततः ॥
यवार्थस्तु तिलैः कार्य्यः कुर्य्यादर्घ्यादि पूर्व्ववत् ।
दत्त्वा तु संस्रवांस्तेषां पात्रे कृत्वा विधानतः ॥
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ।
अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ॥
कुरुष्वेति तथोक्तोऽसौ हुत्वाग्नौ पितृयज्ञवत् ।
हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ॥
यथालाभोपपन्नेषु रौप्येषु च विशेषतः ।
दत्त्वान्नं पृथिवी ते पात्रमिति पात्राभिमन्त्रणम् ॥
कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ।
सव्याहृतिकां गायत्रीं मधुवातेत्यृचं तथा ॥
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ।
अन्नमिष्टं हविष्यञ्च दद्यादक्रोधनोऽत्वरः ॥
आतृप्तेश्च पवित्राणि जप्त्वा पूर्व्वजपं तथा ।
अन्नमादाय तृप्ताः स्थ शेषञ्चैवानुमन्त्र्य च ॥
तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत् सकृत् ।
सर्व्वमन्नमुपादाय सतिलं दक्षिणामुखः ॥
उच्छिष्टसन्निधौ पिण्डान् प्रदद्यात् पितृयज्ञवत् ।
मातामहानामप्येवं दद्यादाचमनं ततः ॥
स्वस्ति प्रोच्यतामिति चाप्येवं विश्वेदेवान् अलं ददत् ।
स्वस्तिवाच्य ततो दद्यादक्षय्योदकमेव च ॥
दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदीरयेत् ।
वाच्यतामित्यनुज्ञातः पितृभ्यश्च स्वधोच्यताम् ॥
विप्रैस्तु स्वधेत्युक्तो भूमौ सिञ्चेत्ततो जलम् ।
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥
श्रद्धा च नो मा व्यगमत् बहु देयञ्च नोऽस्त्विति ।
इत्युक्त्वापि प्रियं वाच्यं प्रणिपत्य विसर्ज्जयेत् ॥
वाजे वाजे इति प्रीत्या पितृपूर्व्वं विसर्ज्जनम् ।
यस्मिंस्ते संस्रवाः पूर्व्वमर्घ्यपात्रे निपातिताः ॥
पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्ज्जयेत् ।
प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ॥
ब्रह्मचारी भवेत्तान्तु रजनीं भार्य्यया सह ।
एवं प्रदक्षिणं कृत्वा वृद्धौ नान्दीमुखानपि ॥
यजेत दधिकर्कन्धुमिश्राः पिण्डा यवैः क्रियाः ।
एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ॥
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ।
उपतिष्ठतामित्यक्षय्यस्थाने विप्रान् विसर्ज्जयेत् ॥
अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह ।
गन्धोदकतिलैर्मिश्रं कुर्य्यात् पात्रचतुष्टयम् ॥
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ।
ये समाना इति द्वाभ्यां शेषं पूर्व्ववदाचरेत् ॥
एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ।
अर्व्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत् ॥
तस्याप्यन्नं सोदकुम्भं दद्यात् संवत्सरं द्विज ।
पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ॥
हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्यापि तुष्यन्ति दत्तैरिह पितामहाः ॥
दद्याद्वर्षां त्रयोदश्यां मघासु च न संशयः ।
प्रतिपत्प्रभृतिष्वेवं कन्यादीन् श्राद्धदो भवेत् ॥
शस्त्रेण निहतानान्तु चतुर्द्दश्यां प्रदीयते ॥ * ॥
स्वर्गं ह्यपत्यमोजश्च शौर्य्यं क्षेत्रं बलं तथा ॥
पुत्रश्रैष्ठ्यं ससौभाग्यमपत्यं मुख्यतां शुभम् ।
प्रवृत्तचक्रतां पुत्रान् वाणिज्यप्रभृतींस्तथा ॥
अरोगित्वं यशो वीतशोकतां परमां गतिम् ।
धनं विद्यां भिषक्सिद्धिं कुप्यं गोऽजाविकं तथा ॥
अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ।
कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान् ॥
वस्वाद्याः प्रीणयन्त्येव नरं श्राद्धं कृतं द्विजाः ।
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ॥
प्रयच्छन्ति तथा राज्यं प्रीता नित्यं पितामहाः ॥"

इति गारुडे ९९ अध्यायः ॥ * ॥

अपि च ।

"श्राद्धाङ्गमहं वक्ष्ये भुक्तिमुक्तिप्रदं नृणाम् ।
पूर्व्वं निमन्त्रयेद्विप्रान् निशि स्युर्ब्रह्मचारिणः ॥
प्रदक्षिणोपवीतेन देवान् वामोपवीतिना ।
पितॄन्निमन्त्रयेत् पादौ प्रक्षाल्याचमनन्ततः ॥
ॐ स्वागतं भवद्भिरिति प्रश्नः । ॐ सुस्वागतमिति तदुक्ते ॐ विश्वेभ्यो देवेभ्य एतत् पादोदकमर्घ्यं स्वाहा पितृभ्यः स्वधा इति देवब्राह्मणपादयोर्देवतीर्थेनाक्षतकुशजलकुसुमदानम् । ततो दक्षिणास्यस्य वामोपवीतेन अमुकगोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यो यथानामशर्म्मभ्यः सपत्नीकेभ्य एतत् पादोदकमर्घ्यं स्वधा इति पित्रादिब्राह्मणपादयोः पितृतीर्थेन भुग्नकुशतिलकुसुमजलदानम् । एवं मातामहादिषु । एतद्व आचमनीयं स्वाहा स्वधेति ब्राह्मणहस्ते । एष वो अर्घ्यः इति ब्राह्मणहस्तेऽर्घ्यदानम् । एतद्वः पुष्पं इति ब्राह्मणहस्ते पुष्पदानम् । ॐ सिद्धमिदमासनं ददाम्यहमित्यभिधाय ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं व्याहृतिभिः पूर्व्वमुखदैवब्राह्मणोपवेशनम् । उत्तराभिमुखाः पितरः ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वधायै स्वाहायै नित्यमेव नमो नमः ॥ इति त्रिर्ज्जपेत् । ॐ अद्यास्मिन्देशे अमुकमासे अमुकराशिगते सवितरि अमुकायां तिथौ अमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानां यथानामशर्म्मणां विश्वदेवपूर्व्वकं श्राद्धमहं करिष्ये ॐ विश्वेभ्यो देवेभ्य इदमासनं स्वाहा । ॐ विश्वान् देवानावाहयिष्ये ॐ आवाहय इत्युक्ते ॐ विश्वेदेवास आगत शृणुताम इमं हवं एदं बर्हिर्निषीदत । ॐ विश्वेदेवाः शृणुतेमं हवं मे ये अन्तरीक्षे य उपद्यविष्ठ येऽग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् । ॐ ओषधयः संवदन्त सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि ।
ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥
ॐ अपहता असुरा रक्षांसि वेदिषदः । इति त्रिभिर्यवविकिरणम् । ॐ पवित्रमहं करिष्ये ॐ कुरुष्वेति तेनोक्ते साग्रकुशपत्रद्वयं प्रादेशप्रमाणं कृत्वा ॐ पवित्रे स्थो वैष्णव्यौ अनेन कुशान्तरेण छित्त्वा ॐ विष्णोर्मनसा पूते स्थः

इत्यभ्युक्ष्य कुशान्तरेण निधाय पात्रे पवित्रनिवेशनम्। शन्नो देवीरभीष्टये आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः। इति पात्रे जलदानम्। ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीः इति यवदानम्।

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्व्वभूतानां तामिहोपह्वये श्रियम्॥
इति गन्धदानम्।

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यौ इति पुष्पदानम्। ॐ या दिव्या आपः पयसा सम्बभूवुर्या अन्तरीक्षा उत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शं स्योनाः सुहवा भवन्तु ॐ धुरिलोचनसञ्ज्ञकेभ्यो विश्वेभ्यो देवेभ्य एषोऽर्घो नमः। इति हस्तेऽर्घ्यं दत्त्वा अनेनैव पात्रेण सजलपवित्रग्रहणं प्रथमपात्रेण सजलपवित्रञ्च गृहीत्वा ब्राह्मणदक्षिणपार्श्वे कुशोपरि ऊर्द्ध्वमुखपात्रे स्थापनं तदुपरि कुशदानम्। ततः ॐ धुरिलोचनसञ्ज्ञकेभ्यो विश्वेभ्यो देवेभ्य एतानि गन्धपुष्पधूपदीपवासोयुगलोत्तरीययज्ञोपवीतानि नमः। गन्धादिदानमच्छिद्रमस्तु सङ्कल्पसिद्धिरस्तु। ब्राह्मणवाचनम्। ततः पितृपितामहप्रपितामह मातामह प्रमातामह वृद्धप्रमातामहानां सपत्नीकानां श्राद्धमहं करिष्ये। अनुज्ञापनम्। ॐ कुरुष्व न ब्राह्मणोक्तिः। ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। इति त्रिजपेन। ततः ॐ अमुकसगोत्राणां अमुकपितृपितामहप्रपितामहानां यथानामशर्म्मणां सपत्नीकानां श्राद्धं युष्मास्वहं करिष्ये। ॐ कुरुष्व श्राद्धकरणानुज्ञानम्। ॐ अमुकसगोत्रेभ्यः अमुकपितृपितामहप्रपितामहेभ्यो यथानामशर्म्मभ्यः सपत्नीकेभ्य इदमासनं स्वधा। ब्राह्मणवामपार्श्वे आसनम्। ॐ पितॄनावाहयिष्ये ॐ आवाहयेत्युक्ते ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि। उशन्नुशत आवह पितॄन् हविषे अत्तवे ॐ आयान्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान्। इत्यावाहनम्। ॐ अपहता असुरा रक्षांसि वेदिषदः। त्रितिलविकिरणम्। ॐ तिलोऽसि सोमदैवत्यो गोसवो देवनिर्म्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वाहा। तिलदानम्। गन्धपुष्पहस्ताभ्यां दत्त्वा पितृपात्रमुत्थाप्य या दिव्या इति पठित्वा अमुकगोत्र अमुकपितः अमुकशर्म्मन् सपत्नीक एष ते अर्घ्यः स्वधा। एवं पितामहादौ। सपवित्रं पात्रं गृहीत्वा ब्राह्मणवामपार्श्वे न्यस्तकुशोपरि ॐ पितृभ्यः स्थानमसीति अधोमुखपात्रस्थापनम्। ॐ शुन्धन्तां लोकाः पितृषदनाः पितृषदनमसि। अधोमुखपात्रार्च्चनम्। ततः अमुकसगोत्रेभ्यः अमुकपितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्य एतानि गन्धपुष्पधूपदीपवासोयुगलोत्तरीययज्ञोपवीतानि स्वधा। पितृतीर्थेन गन्धार्च्चनम्। गन्धादिदानमच्छिद्रमस्तु सङ्कल्पसिद्धिरस्तु। ब्राह्मणवाचनम्। एवं मातामहादीनामनुष्ठानमग्नि-कर्म्म। ॐ या दिव्येति भूमिसम्मार्ज्जनम्। ततो घृताक्तमन्नं गृहीत्वा दक्षिणोपवीत पितृब्राह्मणम्। ॐ अग्नौ करणमहं करिष्ये ॐ कुरुष्वेति तेनोक्ते ॐ अग्नये कव्यवाहनाय स्वाहा। ॐ सोमाय पितृमते स्वाहा। आहुतिद्वयं ब्राह्मणहस्ते दत्त्वा अवशिष्टार्द्धं पिण्डार्थं स्थापयित्वा अपरमर्द्धं पित्रादिपात्रे मातामहादिपात्रे च निक्षिपेत्। पात्रे अन्नादि निधाय कुशं दत्त्वा अधोमुखाभ्यां पाणिभ्यां पात्रं गृहीत्वा। ॐ पृथिवी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा। पात्राभिमन्त्रणम्। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांशुरे विष्णो हव्य रक्षस्व। इत्यन्नोपरि अधोमुखाङ्गुष्ठनिवेशनम्। ॐ अपहतेति यवविकिरणम्।

ॐ निहन्मि सर्व्वं यदमेध्यवद्भवेत्
हताश्च सर्व्वेऽसुरदानवा मया।
रक्षांसि यक्षाः सपिशाचसङ्घा
हता मया यातुधानाश्च सर्व्वे॥
इति सिद्धार्थविकिरणम्।

ततः ॐ धुरिलोचनसञ्ज्ञकेभ्यो विश्वेभ्यो देवेभ्य एतदन्नं सघृतं सपानीयं सव्यञ्जनं स्वाहा इति वारिकुशाद्यैरन्नमुत्सृजनम्। ॐ श्राद्धमिदमच्छिद्रमस्तु सङ्कल्पसिद्धिरस्तु। ततो वामोपवीतेन सव्यञ्जनं सघृतमन्नं पित्रादिपात्रे निधाय तदुपरि भूमिसंलग्नकुशं दत्त्वा ॐ पृथिवी ते पात्रमभिमन्त्रणम्। उत्तानाभ्यां पाणिभ्यां पात्रं गृहीत्वा ॐ इदं विष्णुरित्यन्नोपरि उत्तानाङ्गुष्ठं निवेशयेत् ॐ अपहता इति तिलविकिरणम्। भूमिपातितवामजानुः। अमुकगोत्रेभ्य अमुकपितृपितामहप्रपितामहेभ्य अमुकामुकशर्म्मभ्य सपत्नीकेभ्य एतदन्नं सघृतं सपानीयं सव्यञ्जनं प्रतिविहितवर्ज्जितं स्वधा। अन्नोत्सर्गः। ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् स्वधास्थ तर्पयत मे पितॄन्। दक्षिणामुखवारिधारात्यागः। ॐ अन्नमिदमच्छिद्रमस्तु सङ्कल्पसिद्धिरस्तु। ततः सव्याहृतिकया गायत्र्या विक्षर्य्यित्वा मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमानस्तु सूर्य्यः माध्वीर्गावो भवन्तु नः। मधु मधु मधु इति जपः। यथासुखं वाग्यता भुञ्जध्वमिति ब्रूयात्। भुक्तवत्सु सप्तव्याधादिकं पितृस्तोत्रं जपेत्।

ॐ सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे।
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः।
प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदत॥

सन्तृप्तेषु। दक्षिणामुखो वामोपवीती। उच्छिष्टाग्रतः।

ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्।

इति भूमौ कुशोपरि सघृतमन्नं जलप्लुतं विकिरेत्। ततो देवब्राह्मणक्रमेण जलगण्डूषं दत्त्वा पूर्व्ववत् पुनः सव्याहृतिकां सावित्रीं मधुवात त्रिचं मधु मध्विति च जप्त्वा ॐ तृप्ताः स्थ भवद्भिरिति देवब्राह्मणप्रश्नः। सुतृप्ताः स्म इति तेनोक्ते ॐ शेषमन्नमस्तीति प्रश्नः। इष्टैः सह भुज्यतामिति तेनोक्ते पित्रादिब्राह्मणे वामोपवीतेन ॐ तृप्ताः स्थ इति प्रश्नः। ॐ तृप्ताः स्म इत्युक्ते शेषमन्नमिति प्रश्नः। ॐ इष्टैः सह भुज्यतामिति तेनोक्ते मातामहादिब्राह्मणे तथैव प्रश्नः। ततः पित्रादिब्राह्मणे पिण्डानहं पातयिष्ये पातयेत्युक्ते। तदुच्छिष्टाग्रतोऽभ्युक्षणं मण्डलञ्च चतुष्कोणं तिलविकिरणं ॐ अमुकगोत्र अमुकपितः अमुकशर्म्मन् सपत्नीक एतत्ते पिण्डासनं स्वधा इत्य रेखामध्ये पितामहाय प्रपितामहाय च। सव्याहृतिकां गायत्रीं मधुवातेति त्रिर्जपन् अन्नं साज्यं पिण्डं कृत्वा कुशोपरि अमुकगोत्रामुकपितः अमुकशर्म्मन् सपत्नीक एष ते पिण्डः ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा। एवं पितामहप्रपितामहमातामहप्रमातामहवृद्धप्रमातामहेभ्यः। पिण्डशेषविकिरणं पिण्डान्तिके। ॐ लेपभुजः प्रीयन्तां इति लेपयुक्तकुशाग्रेषु हस्तमार्ज्जनम्। प्रक्षालितेन पिण्डपात्रोदकेन अमुकगोत्र अमुकपितः अमुकशर्म्मन् सपत्नीक एतत्ते जलमवनेनिक्ष्व ॐ ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति पितृपिण्डसेचनम्। पिण्डपात्रमधोमुखं कृत्वा बद्धाञ्जलिः ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति जपः। अथ स्पृष्ट्वा वामेन परावृत्य उदङ्मुखश्च प्राणान् संयम्य।

ॐ वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमो नमः।
वर्षाभ्यश्च शरत्संज्ञकर्त्तवे च नमः सदा।
हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च।
मासवत्सरेभ्यश्च दिवसेभ्यो नमो नमः।

ॐ षड्भ्य ऋतुभ्यो नमः पितृभ्यो नमः। इति जपः। वामेनैव परावृत्य दक्षिणामुखः अमी मदन्त पितरो यथाभागमावृषायिषत। इति जपः। वामं शिथिलीकृत्याञ्जलिं कृत्वा ॐ नमो वः पितरः पितरो नमो वः। इति जपः। गृहान् नः पितरो दत्त। इति गृहनिरीक्षणम्। ॐ सतो वः पितरो देष्म। इति पिण्डनिरीक्षणम्। ॐ एतद्वः पितरो वास इत्युच्चार्य अमुकगोत्र इत्यादिना एतत्ते वासः ॐ ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा। दशाभवसूत्रदानम्। वामेन पाणिना उदकपात्रं गृहीत्वा ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः

फीलालं इत्यादिना पिण्डोपरि वारिधारा-त्यागः। पूर्व्वस्थापितपात्रशेषोदकैः प्रत्येकं पिण्ड-सेचनम्। पिण्डवाससेन गन्धादिदानम्। पिण्डो-परि कुशं हस्तञ्च दत्त्वा ॐ अत्रपितरो मदन्त यथाभागमावृषायध्वम् अमीमदन्त पितरो यथाभागमावृषायिषतेति जपः। इत्थं मातामहादीनां ब्राह्मणानामाचमनं सुप्रो-क्षितमस्त्विति भूम्यभ्युक्षणं कृत्वा।

अपां मध्ये स्थिता देवा सर्व्वमप्सु प्रतिष्ठितम्।
ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु
नः॥

शिवा आपः सन्त्विति हस्ते ब्राह्मणस्य जल-दानम्।

लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे।
लक्ष्मीर्वसते सदा गोष्ठे सौमनस्यं सदास्तु मे॥

सौमनस्यमस्तु पुष्पदानम्।

ॐ अक्षतञ्चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिश्च
मे।
यद्यत् श्रेयस्करं लोके तत्तदस्तु सदा मम॥

ॐ अक्षतञ्चारिष्टञ्चास्तु यवतण्डुलदानम्। अमुक-गोत्राणामस्मत्-पितृ-पितामह-प्रपितामहानां सपत्नीकानां दत्तमिदमन्नपानादिकमक्षय्यमस्तु इति पित्रादिब्राह्मणहस्ते सतिलजलदानम्। यजमानस्य प्रश्ने अस्त्विति ब्राह्मणो वदेत। एवं मातामहादीनामक्षय्यम्। आशिषः।

ॐ अघोराः पितरः सन्तु गोत्रं नो वर्द्धताम्।
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च।
श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति॥
अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि।
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन॥

एता एवाशिषः सन्तु सौमनस्यमस्तु सुसुखं चास्तु इत्युक्ते पिण्डपात्रे अर्घ्यसम्बन्धान् कुशान् पवित्राणि चास्तीर्य्य पित्रादिब्राह्मणं स्पृष्ट्वा स्वधां वाचयिष्ये ॐ वाच्यतां ॐ पितृपितामह-प्रपितामह-मातामह-प्रमातामह-वृद्धप्रमाता-महेभ्यो यथानामशर्म्मभ्यः सपत्नीकेभ्यः स्वधो-च्यतां अस्तु स्वधा इत्युक्ते ऊर्ज्जं वहन्तीरमृतं घृतं इति पिण्डानामुपरि वारिधारां दद्यात्। तत ॐ विश्वेदेवा अस्मिन् यज्ञे प्रीयन्तां देव-ब्राह्मणहस्ते यवोदकदानं ॐ प्रीयन्तामिति तेनोक्ते ॐ देवताभ्य इति निर्व्वपेत्। अधो-मुखपिण्डपात्राणि चालयित्वा आचम्य दक्षिणो-पवीती पूर्व्वाभिमुखः ॐ अमुकसगोत्राय अमुकशर्म्मणे ब्राह्मणाय सपत्नीकाय श्राद्ध-प्रतिष्ठार्थं दक्षिणामिदं रजतं तुभ्यमहं ददे इति दक्षिणां दद्यात् एवं मातामहादौ ततो देवब्राह्मणाय दक्षिणादानम्। ततः पितृ-ब्राह्मणे। पिण्डपात्रमुत्तानं कृत्वा ॐ पिण्डाः सम्पन्नाः ॐ सुसम्पन्ना इति पिण्डे क्षीरधारां दत्त्वा पिण्डचालनम्।

ॐ वाजे वाजे वत्तवाजिनो नो
धनेषु विप्रा अमृता ऋतज्ञाः।
अस्य मध्वः पिबत मादयध्वं
तृप्ता यात पथिभिर्देवयानैः॥
इति पित्रादिविसर्ज्जनम्॥

ॐ आ मा वाजस्य प्रसवो जगम्या-
देमे द्यावा पृथिवी विश्वरूपे।
आ मा गन्तां पितरा मातरा चुव-
मा मा सोमोऽमृतत्वाय गम्यात्॥
इति देवविसर्ज्जनम्॥

ॐ अभिरम्यतामित्युक्ते अभिरताः स्म इति ब्राह्मणैरनुज्ञातस्य निवर्त्तनम्। गवादिषु पिण्ड-प्रतिपादनमिति।

एष श्राद्धविधिः प्रोक्तः पठतां पापनाशनः।
अनेन विधिना श्राद्धं कृतं वै यत्र कुत्रचित्॥
अक्षयं स्यात् पितृणाञ्च स्वर्गप्राप्तिर्ध्रुवा तथा।
इत्युक्तं पार्व्वणश्राद्धं पितृणां ब्रह्मलोकदम्॥"

इत्यादि गारुड़े पार्व्वणश्राद्धम् २२२ अध्यायः॥

ब्रह्मोवाच।

"नित्यश्राद्धं प्रवक्ष्यामि पूर्व्ववत्तद्विशेषवेत्॥

ॐ अमुकसगोत्राणामस्मत्पितृपितामहप्रपिता-महानाममुकशर्म्मणां सपत्नीकानां श्राद्धं सिद्धा-न्नेन युष्मभ्यमहं करिष्ये।

आसनादिकमत्र स्याद्विश्वेदेवविवर्ज्जितम्।
वृद्धिश्राद्धं प्रवक्ष्यामि पूर्व्ववत्तद्विशेषकम्॥

जातपुत्त्रमुखदर्शनादौ वृद्धिश्राद्धं पूर्व्वाभिमुखेषु दक्षिणोपवीतिषु मधुयवबदरमिश्राः पिण्डाः देव-तीर्थेन नमस्कारान्तेन दक्षिणोपचारेण कार्य्यम्। दक्षिणजानु गृहीत्वा ॐ अद्यास्मदीयामुकवृद्धौ अमुक-गोत्राणामस्मत्पितृ-पितामह प्रपिता-मह-मातामह-प्रमातामह-वृद्धप्रमातामहानां अमुकशर्म्मणां सपत्नीकानां नान्दीमुखानां श्राद्धे कर्त्तव्ये वसुसत्यसंज्ञकानां विश्वेषां देवानां श्राद्धं सिद्धान्नेन युष्माभिः मया कर्त्तव्यम्। इति देवब्राह्मणामन्त्रणं ॐ करिष्यसीति तेनोक्ते इत्यमेव मातृपितामहीप्रपितामहीनां देवब्राह्म-णामन्त्रणम्। तत ॐ अमुकगोत्राया मत्-प्रपितामह्या अमुकी देव्या नान्दीमुख्याः श्राद्धं सिद्धान्नेन युष्माभिः मया कर्त्तव्यमिति प्रपिता-महीब्राह्मणामन्त्रणम्। करिष्यसीति तेनोक्ते इत्यमेव पितामहीब्राह्मणामन्त्रणं मातृब्राह्मणा-मन्त्रणञ्च। तत ॐ अद्यामुकवृद्धौ अमुक-गोत्राणामस्मत्-प्रपितामह-पितामह-पितृणां नान्दीमुखानां श्राद्धं सिद्धान्नेन युष्माभिः मया कर्त्तव्यमिति ब्राह्मणामन्त्रणं ॐ करिष्यसीति तेनोक्ते इत्यमेव वृद्धप्रमातामहादि ब्राह्मणा-मन्त्रनम्। देवपितृसर्व्वदेवब्राह्मणश्राद्धकरणानु-ज्ञापनम्। आसने ॐ विश्वेदेवास आगत शृणु-ताम इमं हवं एदं बर्हिर्निषीदत ॐ विश्वे-देवाः शृणुतेमं हवं ये अन्तरीक्षे य उपद्यविष्ठ ये अग्निजिह्वा उतवा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम्। ॐ आगच्छन्तु महाभागा विश्वेदेवा इति विश्वेदेवावाहनम्। गन्धादि-दानञ्च। अच्छिद्रावधारणवाचनम्। ततः प्रपि-तामहीप्रभृतीनामनुज्ञापनं आसनं गन्धादि-दानं अच्छिद्रावधारणम्। इत्थं प्रपितामहा-दीनां अनुज्ञापनम्। आसनं आवाहन गन्धादिदानम्। एवं वृद्धप्रमातामहादीनां अनुज्ञापनादिकरणम्। ॐ वसुसत्यसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य एतदन्नं सघृतं सपानीयं सव्य-ञ्जनं सबदरं सदधि प्रतिषिद्धवर्ज्जितं नमः। इति अन्नसङ्कल्पनम्। ॐ अमुकगोत्रे मत्-प्रपितामहि अमुकीदेवि नान्दीमुखि एतदन्नं सबदरं सदधि नमः। इत्थं पितामहीमातृ-ब्राह्मणे। ततः प्रपितामहादिब्राह्मणपात्रे ॐ अमुकगोत्रेभ्यो मत्प्रपितामहपितामहपितृभ्य एतदन्नं सबदरं सदधि सव्यञ्जनं सपानीयं नमः। एवं वृद्धप्रमातामहादिभ्यः॥ ॥

एकोद्दिष्टं प्रवक्ष्यं तद्विशेषं वदे शृणु॥

प्रथमं निमन्त्रणं पादप्रक्षालनं आसनम्। अद्य अमुकगोत्रस्य मत्पितुरमुकदेवशर्म्मणः प्रति-सांवत्सरिकमेकोद्दिष्टं श्राद्धं सिद्धान्नेन युष्माभिः अहं करिष्ये। श्राद्धकरणानुज्ञापनम्। आसन अर्घ्यः। गन्धादिदानं पितृस्थापनम्। अन्न सङ्कल्पनं अर्घ्यं निवीती उत्तराभिमुखीभूत तिथिश्राद्धं कुर्य्यात्। ततस्तृप्तिं ज्ञात्वा दक्षि णाभिमुखो वामोपवीती उच्छिष्टसमीपे ये अग्निदग्धा इति अन्नविकिरणम्। ॐ अमुक-गोत्र पितरमुकदेवशर्म्मन् एतत्ते जलमवने-निक्ष्व ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा इति रेखोपरि दक्षिणामुखवारिधारा दानम्।" इति गारुड़े २२३ अध्यायः॥ ॥

ब्रह्मोवाच।

"सपिण्डीकरणं वक्ष्ये पूर्णेऽब्दे तत्क्षयाहनि।
कृत्वा कृतपकाले तु प्रेतादेः पितृलोकदम्।
सपिण्डीकरणं कुर्य्यात् अपराह्णे तु पूर्व्ववत्॥

पितामहादिब्राह्मणनिमन्त्रणम्। ॐ पुरोरवो माद्रवःसंज्ञकेभ्यो देवेभ्य एतदासनं नमः। वामपार्श्वे आसनदानम्। ततः पितामह-प्रपितामहवृद्धप्रपितामहानां सपत्नीकानां श्राद्धमहं करिष्ये। इत्यनुज्ञाग्रहणम्। पात्र-त्रयकरणं पात्रोपरि कुशं दत्त्वा पात्रान्तरेण पिधाय अच्छिद्रावधारणान्तं परिसमाप्य तथैव पितुरपि सपत्नीकस्य प्रेतान्तनाम्ना श्राद्धकर-णानुज्ञापनम्। देवपात्राच्छिद्रावधारणम्। तं परिसमाप्य पितामहप्रपितामहवृद्धप्रपितामह-पितृक्रमेण पात्राणां मनाक् चालनं उद्घाटनं कृत्वा ये समानाः समनसः पितरो यमराज्ये।

तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्।
ये समानाः समनसो जीवा जीवेषु मामकाः।
तेषां श्रीर्मयि कल्पतां अस्मिन् लोके शतं
समाः॥

एतन्मन्त्रद्वयेन पितृपात्रोदकं पितामहप्रपिता-महवृद्धप्रपितामहपात्रे दत्त्वा वृद्धप्रपितामह-पात्रं परित्यज्य पितामहप्रपितामहयोरुदकं पवित्रञ्च पितृपात्रे निक्षिपेत्। ततः पितृ-

ब्राह्मणहस्ते पवित्रदानम्। पात्रपुष्पेण शिरःकरपादार्च्चनं हस्तेऽन्यजलदानं हस्ताभ्यां पात्रमुत्थाप्य ॐ या दिव्येति च पठित्वा अमुकगोत्र मत्पितरमुकप्रेत एष ते अर्घ्यो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा इति पितृब्राह्मणहस्ते स्तोकमर्घ्योदकं पितृतीर्थेन दत्त्वा पितामहब्राह्मणहस्ते पवित्रदानं पात्रपुष्पेण शिरःकरपादार्च्चनं हस्तेऽन्यजलदानम्। हस्ताभ्यां पात्रमुत्थाप्य या दिव्येति पठित्वा अमुकगोत्र मत्पितामह अमुकदेवशर्म्मन् सपत्नीक एष तेऽर्घ्यः स्वधा। पितृपात्रेणैव पितामहब्राह्मणहस्ते स्तोकमर्घ्योदकं दत्त्वा शेषमर्घ्यं पितृसदनार्थं पात्रान्तरे निधाय तेनैव पात्रेण पितामहब्राह्मणानां हस्तस्थं उदकं पवित्रञ्च गृहीत्वा पितृब्राह्मणवामपार्श्वे दक्षिणाग्रकुशोपरि पितृभ्यः स्थानमसीति अधोमुखपात्रस्थापनम्। पितामहानां गन्धादिदानम् अग्नौकरणम्। देवानां अन्नप्रदानं पितामहादिपात्रे क्षिपेत्। पितामहाद्यन्नपात्राभिमन्त्रणादिजपपर्य्यन्तं क्रमेण समाप्य पितृब्राह्मणपात्राभिमन्त्रणं अङ्गुष्ठनिवेशनं तिलविकिरणम्। तिलान्नविकिरणञ्च कृत्वा अमुकगोत्र मत्पितरमुकप्रेत एतत्ते अन्नं सघृतं सपानीयं सव्यञ्जनं प्रतिषिद्धवर्जितं ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा। ततो देवप्रभृति आपोशानं दद्यात्। अतिथौ प्राप्ते अतिथिश्राद्धं कुर्य्यात् अशितवत्सु ततो विकिरणम्। पितामहादौ प्रश्नं कृत्वा पितृब्राह्मणे ॐ स्वदितं भवद्भिरिति प्रश्नः अमुकगोत्र मत्पितामह अमुकशर्म्मन् सपत्नीक एष ते पिण्डो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा। एवमन्ययोः। पिण्डदानमक्षय्यमस्तु। सङ्कल्पसिद्धिरस्तु इति वाचनं कृत्वा तत्र पिण्डशेषपिण्डपातनं ॐ सङ्कल्पसिद्धिरस्त्विति वाचनम्। तं समाप्य पिण्डं त्रिधा कृत्वा ये समाना इति मन्त्रद्वयं पठित्वा पितामहप्रपितामहवृद्धप्रपितामहपिण्डेषु क्षिपेत्। पिण्डेषु गन्धादिकं पिण्डचालनम्। अतिथिब्राह्मणे स्वदितमित्यादि प्रश्नः। ब्राह्मणानामाचमनं मुखक्रमेण ताम्बूलदानं सुप्रोक्षितमस्तु शिवा आपः सन्तु इत्यादिक्रमेण ब्राह्मणानां हस्ते जलदानम्। गोत्रस्याक्षय्यमस्तु पितृब्राह्मणहस्ते ॐ उपतिष्ठतामिति सतिलजलदानं तामसाभिश्च उपतिष्ठतामिति तेनोक्ते अघोराः पितरः सन्तु सन्त्विति उक्ते स्वधां वाचयिष्ये इति पितामहादिब्राह्मणानुज्ञापनम् ॐ वाच्यतामित्युक्ते पितामहादिभ्यः स्वधोच्यताम् अस्तु स्वधा इत्युक्ते पितृब्राह्मणे पितृभ्यः स्वधोच्यतां इति अस्तु स्वधा इत्युक्ते ॐ ऊर्ज्जं वहन्तीरमृतमिति दक्षिणाभिमुखवारिधारादानम्। ॐ विश्वेदेवा अस्मिन् यज्ञे प्रीयन्तामिति देवब्राह्मणहस्ते यथोक्तदानम्। ॐ देवताभ्य इति त्रिर्जपः। पिण्डान् पात्रे तोलयित्वा आचम्य पितामहादिभ्यो दक्षिणां दत्त्वा ततः पितृब्राह्मणाय ततो अतिथिब्राह्मणाय च। आशिषः प्रदीयन्तामित्यादौ प्रार्थनं आशिषः प्रतिगृह्णन्तामित्युक्ते दातारो नोऽभिवर्द्धन्तामिति पात्रमुत्तानं कृत्वा वाजे वाजे इति विसर्जनम्। अभिरम्यतामिति पितृब्राह्मणविसर्जनम्।

सपिण्डीकरणश्राद्धं व्यासप्रोक्तं मया तव।
श्राद्धं विष्णुः श्राद्धकर्त्ता फलं श्राद्धान्तिकं हरिः।"

इति गारुडे २२४ अध्यायः ॥ * ॥

तिथ्यादिविशेषे श्राद्धकरणफलं यथा,—

व्यास उवाच।

"अथ श्राद्धममावास्यां प्राप्य कार्य्यं द्विजोत्तमैः।
पिण्डान्वाहार्य्यकं भक्तभुक्तिमुक्तिफलप्रदम्॥
पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते।
अपराह्णे द्विजातीनां प्रशस्तेनामिषेण तु॥
प्रतिपत्प्रभृति ह्यन्यास्तिथयः कृष्णपक्षके।
चतुर्द्दशीं वर्जयित्वा प्रशस्ता ह्युत्तरोत्तरा॥
अमावास्याष्टकास्तिस्रः पौषमाघादिषु त्रिषु।
तिस्रश्चान्वष्टकाः पुण्या माघस्य दशमी तथा॥
त्रयोदशी मघायुक्ता वर्षासु तु विशेषतः।
शस्यपाकश्राद्धकाला नित्याः प्रोक्ता दिने दिने॥
नैमित्तिकं हि कर्त्तव्यं ग्रहणे चन्द्रसूर्य्ययोः।
बान्धवानाञ्च मरणे नारकी स्यादतोऽन्यथा॥
काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु।
अयने विषुवे चैव व्यतीपातेऽप्यनन्तकम्॥
संक्रान्त्यामक्षयं श्राद्धं तथा जन्मदिनेष्वपि।
नक्षत्रेषु च सर्व्वेषु तथा कामे विशेषतः॥
स्वर्गन्तु लभते कृत्वा कृत्तिकासु द्विजोत्तमः।
अपत्यमथ रोहिण्यां सौम्ये तु ब्रह्मवर्च्चसम्॥
रौद्राणां कर्म्मणां सिद्धिमार्द्रायां शौर्य्यमेव च।
पुनर्व्वसौ तथा भूमिं श्रियं पुष्ये तथैव च॥
सर्व्वान् कामांस्तथा सार्पे पैत्रे सौभाग्यमेव च।
आर्य्यम्णे तु धनं विन्द्यात् फाल्गुन्यां पापनाशनम्॥
ज्ञातिश्रैष्ठ्यं तथा हस्ते चित्रायां सुबहून् सुतान्।
वाणिज्यसिद्धिं स्वातौ च विशाखायां सुवर्णकम्॥
मैत्रे बहूनि मित्राणि राज्यं शाक्रे तथैव च।
मूले कृषिं लभेद्यानं सिद्धिमाप्ये तथैव च॥
सर्व्वान् कामान् वैश्वदेवे श्रैष्ठ्यन्तु श्रवणे पुनः।
श्रविष्ठायां तथा कामान् वारुणे च परं बलम्॥
अजैकपादे कुप्यं विन्देद् गृहं शुभम्।
रेवत्यां बहवो गावो ह्यश्विन्यां तुरगांस्तथा॥
याम्ये च जीवनं तस्माद्यदि श्राद्धं प्रयच्छति।
आदित्यवारे त्वारोग्यं चान्द्रे सौभाग्यमेव च॥
कौजे सर्व्वत्र विजयं सर्व्वान् कामान् बुधस्य च।
विद्यामभीष्टां जीवे तु धनं वै भार्गवे पुनः॥
शनैश्चरे लभेदायुः प्रतिपत्सु शुभान् सुतान्।
कन्यका वै द्वितीयायां तृतीयायां भुवन्तथा॥
पशून् क्षुद्रांश्चतुर्थ्यान्तु पञ्चम्यां शोभनान् सुतान्।
षष्ठ्यां द्युतिं कृषिञ्चापि सप्तम्यां लभते नरः॥
अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा।
स्यान्नवम्यां एकखुरं दशम्यां द्विखुरं बहु॥
एकादश्यां तथा रूप्यं ब्रह्मवर्च्चस्विनः सुतान्।
द्वादश्यां जातरूपञ्च रजतं रौप्यमेव च॥
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्द्दश्यान्तु कुप्रजाः।
पञ्चदश्यां सर्व्वकाममाप्नोति श्राद्धदः सदा॥
तस्माच्छ्राद्धं न कर्त्तव्यं चतुर्द्दश्यां द्विजातिभिः।
शस्त्रेण तु हतानां वै तत्र श्राद्धं प्रकल्पयेत्॥
द्रव्यब्राह्मणसम्पत्तौ न कालनियमः कृतः।
तस्माद्भोगापवर्गार्थं श्राद्धं कुर्य्यात् द्विजातिभिः॥
कर्म्मारम्भेषु सर्व्वेषु कुर्य्यादाभ्युदयं पुनः।
पुत्रजन्मादिषु श्राद्धं पार्व्वणं पर्व्वसु स्मृतम्॥
अहन्यहनि नित्यं स्यात् काम्यं नैमित्तिकं तथा।
एकोद्दिष्टन्तु विज्ञेयं वृद्धिश्राद्धञ्च पार्व्वणम्॥
एतत् पञ्चविधं श्राद्धं मनुना परिकीर्त्तितम्।
यात्रायां षष्ठमाख्यातं तत् प्रयत्नेन पालयेत्॥
शुद्धये सप्तमं श्राद्धं ब्रह्मणा परिकीर्त्तितम्।
दैविकं चाष्टमं श्राद्धं यत् कृत्वा मुच्यते भयात्॥
सन्ध्यारात्र्योर्न कर्त्तव्यं राहोरन्यत्र दर्शनात्।
देशानाञ्च विशेषेण भवेत् पुण्यमनुत्तमम्॥
गयायामक्षयं श्राद्धं प्रयागेऽमरकण्टके।
गायन्ति पितरो गाथां कीर्त्तयन्ति मनीषिणः॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्॥
एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः।
तेषान्तु समवेतानां यद्येकोऽपि गयां व्रजेत्॥
गयां प्राप्यानुषङ्गेण यदि श्राद्धं समाचरेत्।
तारिताः पितरस्तेन स याति परमां गतिम्॥
वराहपर्व्वते चैव गङ्गायाञ्च विशेषतः।
वाराणस्यां विशेषेण यत्र देवः स्वयं हरः॥
गङ्गाद्वारे प्रभासे च बिल्वके नीलपर्व्वते।
कुरुक्षेत्रे च कुब्जाम्रे भृगुतुङ्गे महालये॥
केदारे फल्गुतीर्थे च नैमिषारण्य एव च।
सरस्वत्यां विशेषेण पुष्करे च विशेषतः॥
नर्म्मदायां कुशावर्त्ते श्रीशैले भद्रकर्णके।
वेत्रवत्यां विशाखायां गोदावर्य्यां विशेषतः॥
एवमादिषु चान्येषु तीर्थेषु पुलिनेषु च।
नदीनाञ्चैव तीरेषु तुष्यन्ति पितरः सदा ॥ * ॥
व्रीहिभिश्च यवैर्म्माषैरद्भिर्मूलफलेन च।
श्यामाकैश्च तथा शाकैर्नीवारैश्च प्रियङ्गुभिः॥
गोधूमैश्च तिलैर्मुद्गैर्मासं प्रीणयते पितॄन्।
आम्रानाम्रातकानिक्षून् मृद्वीकांश्च सदाडिमान्॥
विदारींश्च भरण्डांश्च श्राद्धकाले प्रदापयेत्।
लाजान् मधुयुतान् दद्यात् सक्तून् शर्करया सह॥
दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटककशेरुकान्।
द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु॥
औरभ्रेणाथ चतुरः शाकुनेन तु पञ्च च।
षण्मासान् छागमांसेन पार्षतेनाथ सप्त वै॥
अष्टावेणस्य मांसेन रौरवेण नवैव तु।
दश मासांस्तु तृप्यन्ति वराहमहिषामिषैः।

शशकूर्म्मयोस्तु मांसेन मासानेकादशैव तु ॥
संवत्सरन्तु गव्येन पयसा पायसेन वा ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥
कालशाकं महाशल्कं खड्गिनोऽप्यामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्व्वशः ॥
क्रीत्वा लब्ध्वा स्वयंवाथ मृतानाहृत्य वै द्विजः ।
दद्यात् श्राद्धं प्रयत्नेन तदस्याक्षयमुच्यते ॥*॥
पिप्पलिं क्रमुकञ्चैव तथा चैव मसूरकम् ॥
कूष्माण्डालाबुवार्त्ताकान् भूतृणं सुरसं तथा ।
कुसुम्भं पिण्डमूलं वै तण्डुलीयकमेव च ॥
राजमाषांस्तथा क्षीरं माहिषञ्च विवर्जयेत् ।
कोद्रवान् कोविदारांश्च पालक्यं मरिचं तथा ।
वर्जयेत् सर्व्वयत्नेन श्राद्धस्थाने द्विजोत्तमः ॥"

इति कौर्म्मे उपविभागे १८ अध्यायः ॥

व्यास उवाच ।

"कृत्वा यथोक्तं संतर्प्य पितॄन् चन्द्रक्षये द्विजः ।
पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यात सौम्यमनाः शुचिः ॥
पूर्व्वमेव परीक्षेत ब्राह्मणं वेदपारगम् ।
तीर्थं तद्धव्यकव्यानां प्रदाने चातिथिः स्मृतः ॥
ये सोमपा विरजसो धर्म्मज्ञाः शान्तचेतसः ।
व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः ॥
पञ्चाग्निरप्यधीयानो यजुर्व्वेदविदेव च ।
बह्वृक् च त्रिसुपर्णस्त्रिमधुर्व्वाथ यो भवेत् ॥
त्रिणाचिकेतच्छन्दोगो ज्येष्ठसामग एव च ।
अथर्व्वशिरसोऽध्येता रुद्राध्यायी विशेषतः ॥
अग्निहोत्रपरो विद्वान् न्यायविच्च षडङ्गवित् ।
मन्त्रब्राह्मणविच्चैव यश्च स्याद्धर्म्मपाठकः ।
ऋषिव्रती ऋषिकश्च तथा द्वादशवार्षिकः ॥
ब्रह्मदेयानुसन्तानो गर्भशुद्धः सहस्रदः ।
चान्द्रायणव्रतचरः सत्यवादी पुराणवित् ।
गुरुदेवाग्निपूजासु प्रसक्तो ज्ञानतत्परः ॥
विमुक्तः सर्व्वतो धीरो ब्रह्मभूतो द्विजोत्तमः ।
महादेवार्च्चनरतो वैष्णवः पंक्तिपावनः ॥
अहिंसानिरतो नित्यमप्रतिग्राहकस्तथा ।
सत्रिणो दाननिरता विज्ञेयाः पंक्तिपावनाः ॥
मातापित्रोर्हिते युक्तः प्रातःस्नायी च यो द्विजः ।
अध्यात्मविन्मुनिर्द्दान्तो विज्ञेयः पंक्तिपावनः ॥
ज्ञाननिष्ठो महायोगी वेदान्तार्थविचिन्तकः ।
श्रद्धालुः श्राद्धनिरतो ब्राह्मणः पंक्तिपावनः ॥
वेदविद्याव्रतस्नातो ब्रह्मचर्य्यपरः सदा ।
आथर्व्वणो मुमुक्षुश्च ब्राह्मणः पंक्तिपावनः ॥
असमानप्रवरको ह्यसगोत्रस्तथैव च ।
असम्बन्धी च विज्ञेया ब्राह्मणाः पंक्तिपावनाः ॥
भोजयेद्योगिनं पूर्व्वं तत्त्वज्ञानरतं यतिम् ।
अलाभे नैष्ठिकं दान्तमुपकुर्व्वाणकं तथा ॥
तदलाभे गृहस्थं वा मुमुक्षुं सङ्गवर्ज्जितम् ।
सर्व्वालाभे साधकं वा गृहस्थमपि भोजयेत् ॥
प्रकृतेर्गुणतत्त्वज्ञो यस्याश्नाति यतिर्हविः ।
फलं वेदविदां तस्य सहस्रादतिरिच्यते ॥
तस्मात् यत्नेन योगीन्द्रमीश्वरज्ञानतत्परम् ।
भोजयेद्धव्यकव्येषु त्वलाभे त्वितरान् द्विजान् ॥
एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥*॥
मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥*॥
न श्राद्धे भोजयेन्मित्रं धनैः कार्य्योऽस्य संग्रहः ।
पैशाची दक्षिणा सा हि नैवामुत्र फलप्रदा ॥
कामं श्राद्धेऽर्च्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् ॥
ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति ।
तस्मै हव्यं न दातव्यं न च भस्मनि हूयते ॥
यथोषरे बीजमुप्त्वा न वप्ता लभते फलम् ।
तथानृचे हविर्द्दत्त्वा न दाता लभते फलम् ॥
यावतो ग्रसते पिण्डान् हव्यकव्येष्वमन्त्रवित् ।
तावतो ग्रसते प्रेत्य दीप्तान् शूलर्ष्ट्ययोगुडान् ॥
अपि विद्याकुलैर्युक्ता हीनवृत्ता नराधमाः ।
यत्रैते भुञ्जते हव्यं तद्भवेदासुरं द्विजाः ॥
यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
एष त्वब्राह्मणो नार्हः श्राद्धादिषु कदाचन ॥
शूद्रप्रेष्यो भृतो राज्ञा वृषलग्रामयाजकः ।
वधबन्धोपजीवी च षडेते ब्रह्मबन्धवः ॥
दत्तानुयोगी वृत्त्यर्थं पतितान्मनुरब्रवीत् ।
वेदविक्रयिणो ह्येते श्राद्धादिषु विगर्हिताः ॥
श्रुतिविक्रयिणो ये तु परपूर्व्वासमुद्भवाः ।
अधमान् ये याजयन्ति पतितास्ते प्रकीर्त्तिताः ॥
असंस्कृताध्यापका ये भृत्यर्थेऽध्यापयन्ति ये ।
अधीयते तथा वेदान् पतितास्ते प्रकीर्त्तिताः ॥
वृद्धश्रावकनिर्ग्रन्थाः पञ्चरात्रविदो जनाः ।
कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः ॥
यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः ।
न तस्य तद्भवेच्छ्राद्धं प्रेत्य चेह फलप्रदम् ॥
अनाश्रमी यो द्विजः स्यादाश्रमी वा निरर्थकः ।
मिथ्याश्रमी च ये विप्रा विज्ञेयाः पंक्तिदूषकाः ॥
दुश्चर्म्मा कुनखी कुष्ठी श्वित्री च श्यावदन्तकः ।
विद्धप्रजननश्चैव स्तेनः क्लीबोऽथ नास्तिकः ॥
मद्यपो वृषलीसक्तो वीरहा दिधिषूपतिः ।
आगारदाही कुण्डाशी सोमविक्रयिणो द्विजाः ॥
परिवेत्ता तथा हिंस्रः परिवित्तिर्निराकृतिः ।
पौनर्भवः कुसीदी च तथा नक्षत्रदर्शकः ॥
गीतवादित्रनिरतो व्याधितः काण एव च ।
हीनाङ्गश्चातिरिक्ताङ्गो ह्यवकीर्णी तथैव च ॥
कन्यादूषी कुण्डगोलौ अभिशस्तोऽथ देवलः ।
मित्रध्रुक् पिशुनश्चैव नित्यं भार्य्यानुवर्त्तकः ॥
मातापित्रोर्गुरोस्त्यागी दारत्यागी तथैव च ।
गोत्रभिद्भ्रष्टशौचश्च काण्डस्पृष्टस्तथैव च ॥
अनपत्यः कूटसाक्षी याचको रङ्गजीवनः ।
समुद्रयायी कृतहा तथा समयभेदकः ॥
वेदनिन्दापरश्चैव परदाररतास्तथा ।
द्विजनिन्दारताश्चैव वर्ज्याः श्राद्धादिकर्म्मसु ।
कृतघ्नः पिशुनः क्रूरो नास्तिको वेदनिन्दकः ।
मित्रध्रुक् कुहकश्चैव विशेषात् पंक्तिदूषकाः ॥
सर्व्वे पुनरभोज्यान्नास्त्वदानार्हा हि कर्म्मसु ।
ब्रह्मभावान्निरस्ताश्च वर्ज्जनीयाः प्रयत्नतः ॥
शूद्रान्नरसपुष्टाङ्गः सन्ध्योपासनवर्ज्जितः ।
महायज्ञविहीनश्च ब्राह्मणः पंक्तिदूषकः ॥
अधीतनाशनश्चैव स्नानहोमविवर्ज्जितः ।
तामसो राजसश्चैव ब्राह्मणः पंक्तिदूषकः ॥
बहुनात्र किमुक्तेन विहितान् ये न कुर्व्वते ।
निन्दितानाचरन्त्येते वर्ज्जनीयाः प्रयत्नतः ॥"

इति कौर्म्मे उपविभागे २० अध्यायः ॥*॥

"गोमयेनोदकैर्भूमिं शोधयित्वा समाहितः ।
सन्निपात्य द्विजान् सर्व्वान् साधुभिः सन्निमन्त्रयेत् ॥
श्वो भविष्यति मे श्राद्धं पूर्व्वेद्युरभिपूज्य च ।
असम्भवे परेद्युर्व्वा यथोक्तैर्लक्षणैर्युतान् ॥
तस्य ते पितरः श्रुत्वा श्राद्धकालमुपस्थितम् ।
अन्योन्यमनसा ध्यात्वा सम्पतन्ति मनोजवाः ॥
ब्राह्मणैस्ते सहाश्नन्ति पितरो ह्यन्तरीक्षगाः ।
वायुभूताश्च तिष्ठन्ति भुक्त्वा यान्ति परां गतिम् ॥
आमन्त्रिताश्च ते विप्राः श्राद्धकाल उपस्थिते ।
वसेयुर्नियताः सर्व्वे ब्रह्मचर्य्यपरायणाः ॥
अक्रोधनोऽत्वरोऽमत्तः सत्यवादी समाहितः ।
भारं मैथुनमध्वानं श्राद्धकृद्वर्ज्जयेज्जपम् ॥
आमन्त्रितो ब्राह्मणो यः अन्यं वै कुरुते क्षणम् ।
स याति रौरवं घोरं सूकरत्वं प्रयाति च ॥
आमन्त्रयित्वा यो मोहादपरं मन्त्रयेत् द्विजम् ।
स तस्मादधिकः पापी विष्ठाकीटोऽभिजायते ॥
श्राद्धे निमन्त्रितो विप्रो मैथुनं योऽधिगच्छति ।
ब्रह्महत्यामवाप्नोति तिर्य्यग्योनौ च गच्छति ॥
श्राद्धं कृत्वा तु भुक्त्वा च योऽध्वानं प्रतिपद्यते ।
भवन्ति पितरस्तस्य तन्मासं पांशुभोजनाः ॥
निमन्त्रितस्तु यः श्राद्धे प्रकुर्य्यात् कलहं द्विजः ।
भवन्ति तस्य तन्मासं पितरो मलभोजनाः ॥
तस्मान्निमन्त्रितः श्राद्धे नियतात्मा भवेद्द्विजः ।
अक्रोधनः शौचपरः कर्त्ता चैव जितेन्द्रियः ॥
श्वोभूते दक्षिणां गत्वा दिशं दर्भान् समाहितः ।
समूलानाहरेद्वापि दक्षिणाग्रान् सुनिर्म्मलान् ॥
दक्षिणाप्रवणं स्निग्धं विविक्तं शुभलक्षणम् ।
शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत् ॥
नदीतीरेषु तीर्थेषु स्वभूमौ चैव सानुषु ।
विविक्तेषु च तुष्यन्ति दत्ते च पितरः सदा ॥
पारक्ये भूमिभागे तु पितॄणां नैव निर्व्वपेत् ।
स्वामिभिस्तद्विहन्येत मोहात् यत् क्रियते नरैः ॥
अटव्यः पर्व्वताः पुण्यास्तीर्थान्यायतनानि च ।
सर्व्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ॥
तिलान् प्रविकिरेत्तत्र सर्व्वतो बन्धयेदजान् ।
असुरोपहतं सर्व्वं तिलैः शुध्यत्यजेन वा ॥
ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनमच्युतम् ।
चोष्यपेयसमृद्धञ्च यथाशक्त्या प्रकल्पयेत् ॥
ततो निवृत्ते मध्याह्ने लुप्तरोमनखान् द्विजान् ।
अभिगम्य यथामार्गं प्रयच्छेद्दन्तधावनम् ॥
तैलमभ्यञ्जनं स्नानं स्नानीयञ्च पृथग्विधम् ।
पात्रैरौडुम्बरैः कुर्य्यात् वैश्वदेवत्यपूर्व्वकम् ॥
ततः स्नात्वा निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः ।

द्वौ पिण्डौ निर्व्वपेत्ताभ्यां चैत्रिके चौलिने तथा ॥
कौर्त्तयेदथ चैकस्मिन् चौलिनं चैत्रिकं ततः ।
स्वनामधेये तु कर्त्तव्यमेकोद्दिष्टं विधानतः ॥
अथ चैत्र परिज्ञीते काम्यं वै कामतस्ततः ।
पूर्व्वाह्णे चैव कर्त्तव्यं श्राद्धमभ्युदयार्थिना ॥
देववत् सर्व्वमेव स्यात् नैव कार्य्या तिलक्रिया ।
दर्भाश्च ऋजवः कार्य्या युग्मान् वै भोजयेत्
द्विजान् ॥
नान्दीमुखास्ते पितरः प्रीयन्तामिति वाचयेत् ।
मातृश्राद्धन्तु पूर्व्वं स्यात् पितॄणां स्यादनन्तरम् ॥
ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम् ।
दैवपूर्व्वन्तु दद्याद्वै न कुर्य्यादप्रदक्षिणम् ॥
प्राङ्मुखो निर्व्वपेत् पिण्डानुपवीती समाहितः ।
पूर्व्वं वै मातरः पूज्या भक्त्या चैव गणेश्वरः ॥
स्थण्डिलेषु पवित्रेषु प्रतिमासु द्विजातिषु ।
पुष्पैर्धूपैश्च नैवेद्यैर्गन्धाद्यैर्भूषणैरपि ॥
पूजयित्वा मातृगणान् कुर्य्यात् श्राद्धत्रयं बुधः ।
अकृत्वा मातृयागन्तु यः श्राद्धं परिवेषयेत् ।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥"

इति कौर्म्मे उपविभागे २१ अध्यायः ॥

मात्स्ये १६ । १७ । १८ अध्यायेषु चान्यत् द्रष्टव्यम् ॥ ९ ॥ श्राद्धे कदलीमन्नं निषिद्धं भोजनपात्रतया । इति हेमाद्रिधारा श्राद्धखण्डे ॥ न जातीकुसुमानि दद्यात् न कदलीपत्रम् । इति क्रतुवचनम् ॥ ९ ॥ श्राद्धोत्तरनिषिद्धानि यथा,—

"यात्रा युद्धं नदीपारं मिथ्यालापो द्विर्भोजनम् ।
द्यूतक्रीड़ा दिवानिद्रा श्राद्धे सप्त विवर्जयेत् ॥"

इति कर्म्मलोचनम् ॥

स्मृतिः ।
"द्यूतञ्च कलहञ्चैव सायंसन्ध्यां दिवाशयनम् ।
श्राद्धकर्त्ता च भोक्ता च पुनर्भुक्तञ्च वर्जयेत् ॥"
अपि च । विष्णुपुराणम् ।
"वर्ज्यानि कुर्व्वता श्राद्धं कोपोऽध्वगमनं त्वरा ।
भोक्तुरप्यत्र राजेन्द्र त्रयमेतन्न शस्यते ॥"
राजमार्त्तण्डे ।
"पुनर्भोजनमध्वानं द्यूताध्ययनमैथुनम् ।
दानं प्रतिग्रहं सन्ध्यां श्राद्धं कृत्वाष्ट वर्जयेत् ॥"
नयवद्धमानधृता स्मृतिः ।
"पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ।
दानं सन्ध्यां पुनः स्नानं श्राद्धं कृत्वाष्ट वर्जयेत् ॥"

इति श्राद्धतत्त्वम् ॥

अथ वैष्णवश्राद्धविधिः ।
"प्राप्ते श्राद्धदिनेऽपि प्रागन्नं भगवतेऽर्पयेत् ।
तच्छेषेणैव कुर्व्वीत श्राद्धं भागवतो नरः ॥"
यच्च स्मृतौ ।
"गदाग्निश्रुदेवानां यतीनां ब्रह्मचारिणाम् ।
पितृपाको न दातव्यो यावत् पिण्डान्न निर्व्वपेत् ॥"

इति ॥

"ईदृक् सामान्यवचनं विशेषवचनब्जैः ।
श्रुतिस्मृतिपुराणादिवचोभिर्व्वाध्यते ध्रुवम् ॥"
तथा च पाद्मे ।
"विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते ॥"
मोक्षधर्म्मे नारदोक्तौ ।
"सात्वतं विधिमास्थाय प्राक् सूर्य्यमुखनिःसृतम् ।
पूजयामास देवेशं तच्छेषेण पितामहान् ॥"
ब्रह्माण्डपुराणे ।
"यः श्राद्धकाले हरिभुक्तशेषं
ददाति भक्त्या पितृदेवतानाम् ।
तेनैव पिण्डांस्तुलसीविमिश्रा-
नाकल्पकोटिं पितरः सुतृप्ताः ॥"
स्कान्दे श्रीशिवोक्तौ ।
"देवान् पितॄन् समुद्दिश्य यद्विष्णोर्विनिवेदितम् ।
तानुद्दिश्य ततः कुर्य्यात् प्रदानं तस्य चैव हि ।
प्रयान्ति तृप्तिमतुलां भोजनेन तु तेन वै ।
सुकुन्दनानलग्नेन माकन्दानां विलेपनम् ॥
चन्दनेन तु पिण्डानां कार्य्यं पितृकर्म्मणि ।
देवानाञ्च पितॄणाञ्च जायते तृप्तिरक्षया ॥
एवं कृते मर्त्त्यपाल मा भवेत् संशयः क्वचित् ॥"
तत्रैव श्रीपुरुषोत्तममाहात्म्ये ।
"अभावं श्राद्धकाले तु पतितादैर्निरीक्षितम् ।
सुगन्धोदकसिक्तेन तुलसीनाभिषिच्यते ॥
तदन्नं शुद्धतामेति विष्णोर्नैवेद्यमिश्रितम्
विष्णोर्नैवेद्यशेषन्तु नमस्येयं द्विजन्मना ।
पिण्डे चैव विशेषेण पितॄणां तृप्तिमिच्छता ॥"
तत्रैव श्रीब्रह्मनारदसंवादे ।
"पितॄनुद्दिश्य यैः पूजा केशवस्य कृता नरैः ।
त्यक्त्वा ते नारकीं पीड़ां मुक्तिं यान्ति महामुने ॥
धन्यास्ते मानवा लोके कलिकाले विशेषतः ।
ये कुर्व्वन्ति हरेर्नित्यं पित्रर्थं पूजनं मुने ॥
किं दत्तैर्बहुभिः पिण्डैर्गयाश्राद्धादिभिर्मुने ।
यैरर्च्चितो हरिर्भक्त्या पित्रर्थञ्च दिने दिने ॥
यमुद्दिश्य हरेः पूजा क्रियते मुनिपुङ्गव ।
उद्धृत्य नरकावासात्तं नयेत् परमं पदम् ॥
यो ददाति हरेः स्नानं पितॄनुद्दिश्य नारद ।
कार्य्यं हि पितॄणां यच्च कृतं तेन भो द्विज ॥"८
श्रुतौ च । एक एव नारायण आसीत् न ब्रह्मा नेमे द्यावापृथिवी सर्व्वे देवाः सर्व्वे पितरः सर्व्वे मनुष्याः विष्णुना अशितमश्नन्ति विष्णुना घ्रातं जिघ्रन्ति विष्णुना पीतं पिबन्ति तस्माद्विद्वांसो विष्णूपहृतं भक्षयेयुरिति । अतएवोक्तं श्रीभगवता विष्णुधर्म्मे ।
"प्राणिभ्यो जुहुयादन्नं मन्निवेदितमुत्तमम् ।
तृप्यन्ति सर्व्वदा प्राणा मन्निवेदितभक्षणात् ॥
तस्मात् सर्व्वप्रयत्नेन प्रदेयं मन्निवेदितम् ।
ममापि हृदयस्थस्य पितृणाञ्च विशेषतः ॥"
किञ्च तत्रैवान्यत्र ।
"भक्ष्यं भोज्यञ्च यत्किञ्चिदनिवेद्याग्रभोक्तरि ।
न देयं पितृदेवेभ्यः प्रायश्चित्ती यतो भवेत् ॥
सर्व्वादौ कथितो देवैरग्रभुक् भगवान् हरिः ।
यज्ञभागभुजो देवा ततस्तेन प्रकल्पिताः ॥"

इति श्रीहरिभक्तिविलासे ९ विलासः ॥ ९ ॥

न्ययोपवासदिने श्राद्धनिषेधः । पाद्मे पुष्करखण्डम्
"एकादश्यां यदा राम श्राद्धं नैमित्तिकं भवेत् ।
तद्दिनं तु परित्यज्य द्वादश्यां श्राद्धमाचरेत् ॥"
तत्रैवोत्तरखण्डे ।
"एकादश्यान्तु प्राप्तायां मातापित्रोर्मृतेऽहनि ।
द्वादश्यां तत् प्रदातव्यं नोपवासदिने क्वचित् ॥
गर्हितान्नं न चाश्नन्ति पितरश्च दिवौकसः ॥"
स्कान्दे ।
"एकादश्यां यदा नित्यं श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्य्यात् द्वादश्यां श्राद्धमाचरेत् ॥"
ब्रह्मवैवर्त्ते ।
"ये कुर्व्वन्ति महीपाल श्राद्धं चैकादशीदिने ।
त्रयस्ते नरकं यान्ति दाता भोक्ता च प्रेरकः ॥"

इति श्रीहरिभक्तिविलासे १२ विलासः ॥

श्रान्त, त्रि, ( श्रम खेदे । श्रम + "प्रज्ञा स्वाद्यर्थाभिन्नो नः ।" ५।२।१०३ । इति नः ।) श्रमविशिष्टम् । इति जटाधरः ॥

श्राद्धकर्त्ता, [ ऋ ] त्रि, ( करोतीति । कृ + तृच् । श्राद्धस्य कर्त्ता । ) श्राद्धकारकः । यथा,—
"श्राद्धकर्त्ता च भोक्ता च पुनर्भुक्तञ्च वर्ज्जयेत् ॥"

इति श्राद्धतत्त्वम् ॥

श्राद्धदेवः, पुं, ( श्राद्धस्य देवः ।) यमः । इत्यमरः ॥ ( यथा, मार्कण्डेये । ७ । १५६ ।
"श्राद्धदेवेन कथितं विश्वामित्रस्य चेष्टितम् ॥")
स तु विवस्वतः संज्ञायां पत्न्यां जातः ॥ मनुभेदः । इति पुराणम् ॥ ( यथा, मार्कण्डेये । १०६ । ४ ।
"मनुर्वैवस्वतो ज्येष्ठः श्राद्धदेवः प्रजापतिः ।
ततो यमो यमी चैव यमजौ सम्बभूवतुः ॥")

श्राद्धशाकं, क्ली, ( श्राद्धे देयं शाकम् । ) कालशाकम् । इति भावप्रकाशः ॥

श्राद्धिकः, त्रि, ( श्राद्धमनेन भुक्तमिति । श्राद्ध + "श्राद्धमनेन भुक्तमिनिठनौ ।" ५ । २ । ८५ । इति ठन् । ) श्राद्धभोक्ता । इति सिद्धान्तकौमुदी ॥ श्राद्धसम्बन्धिद्रव्यादि । यथा, याज्ञवल्क्यः ।
"सन्ध्यागर्ज्जितनिर्घाते भूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥
पञ्चदश्यां चतुर्द्दश्यामष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥"

इति तिथ्यादितत्त्वम् ॥

श्राद्धी, [न्] त्रि, श्राद्धभोक्ता । श्राद्ध + "श्राद्धमनेन भुक्तमिनिठनौ ।" ५ । २ । ८५ । इति अनेन इनिः । इति सिद्धान्तकौमुदी ॥

श्रान्तः, पुं, ( श्रम + क्तः । ) शान्तः । जितेन्द्रियः । इति हेमचन्द्रः ॥ श्रमयुक्ते, त्रि । श्रम तपःखेदयोः इत्यस्मात् क्तप्रत्ययेन निष्पन्नः । यथा,—
"सखि गत्वायताञ्चक्षु श्रान्तवर्णा निरन्तरम् ।
क्षतिश्वासाभि सञ्चारक्लेशयोरिदमौषधी ॥"

इति काव्यचन्द्रिका ॥

श्रियंमन्या, स्त्री आत्मानं श्रियं मन्यते या। इति मुग्धबोधव्याकरणम्॥ (यथा, भट्टिः।५।७१।
"मिथ्यैव श्रीः श्रियंमन्या श्रीमन्मन्यो न्वथा-हरिः॥")

श्रिष, उ दाहे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) क्त्वावेट्। ( उ, श्रेषित्वा श्रिष्ट्वा। इति दुर्गादासः॥

श्री, ञ ग पाके। इति कविकल्पद्रुमः॥ (क्र्या०-उभ०-सक०-सेट्।) ञ ग, श्रीणाति श्रीणीते। इति दुर्गादासः॥

श्रीः, स्त्री,(श्रयतीति। श्रि+"क्विब्वचिप्रच्छीति।" उणा० २।५७। इति क्विप् दीर्घश्च।) लक्ष्मीः। (यथा, विष्णुपुराणे। १।८।१२।
"श्रीश्च देवदेवस्य पत्नी नारायणस्य या॥")
लवङ्गम्। इत्यमरः॥ वेशरचना। शोभा। (यथा, रामायणे। २।९४।१०
"एवमादिभिराकीर्णः श्रियं पुष्यत्ययं गिरिः॥")
सरस्वती। त्रिवर्गः। सम्पत्तिः। (यथा,
"न दातुं नोपभोक्तुं वा शक्नोति कृपणः श्रियम्॥")
विधा। उपकरणम्। विभूतिः। मतिः। इति मेदिनी॥ अधिकारः। प्रभा। कीर्त्तिः। इति धरणिः॥ वृद्धिः। सिद्धिः। इति शब्दरत्नावली॥ दृत्तार्हन्माता। इति हेमचन्द्रः॥ कमलम्। विल्ववृक्षः। वृद्धिनामौषधम्। इति राजनिर्घण्टः॥ *॥ देवादिनाम्नः पूर्व्वं श्रीशब्द-प्रयोगः कर्त्तव्यः। यथा,—
"देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्।
सिद्धं सिद्धाधिकारांश्च श्रीपूर्व्वं समुदीरयेत्॥"
इति राघवभट्टधृतप्रयोगसारदर्शनात् स्वर्गगामित्यादिना सिद्धोऽधिकारो येषां नराणां इत्यनेन जीवतां श्रीशब्दादित्वं नाम्नः। न तु मृतानां तथेति शिष्टाचारः। इति संस्कारतत्त्वम्॥ *॥ मत्पृष्ठे श्रीशब्ददानप्रमाणं पत्रशब्दे द्रष्टव्यम्॥ (एकाक्षरच्छन्दोविशेषः। यथा, छन्दोमञ्जर्य्याम्। "ग् श्रीः।" उदाहरणम्। "श्रीस्ते। सास्ताम्॥")

श्रीः, पुं, (श्रि+क्विप् दीर्घश्च।) रागविशेषः। स तु हनुमन्मते षड्रागान्तर्गतपञ्चमरागः। पृथिव्या नाभितो निर्गतः। अस्य जातिः सम्पूर्णा। तस्य स्वरावलिः। ष ऋ ग म प ध नि। अस्य ग्रहं षड्जस्वरः। हेमन्तर्त्तौ अपराह्ने गानसमयः। रागमालायां अस्याकारः। सुन्दरपुरुषः। शुक्लवस्त्रपरीधानः। मतान्तरे रक्तवस्त्रपरीधानः। स्फाटिकपद्मरागमणिमालागलः। पद्मपुष्पहस्तः। विचित्रसिंहासनारूढः। अस्य संमुखे गायन्ति गायकाः॥ हनुमन्मते अस्य भार्य्याः पञ्च। यथा। प्रथमा मालश्रीः। तस्याः सम्पूर्णजातिः। अस्याः स्वरावलिः। ष ऋ ग म प ध नि। अस्या ग्रहं षड्जस्वरः। हिमर्त्तौ द्वितीयप्रहरदिवसे गान-समयः। रागमालायां तस्याः स्वरूपम्। रक्तवर्णा स्त्री। कोमलाङ्गी। पीतवस्त्रपरीधाना। कौतुकाद्भ्रमन्ती सती नायकाद्भिन्ना सखीगणेन सह हास्ययुक्ताम्रतरुतलोपविष्टा॥ १॥ द्वितीया मारवा अथवा मालवा। अस्याः षाड्वजातिः। अस्याः स्वरावलिः। ष प ग म ध नि। अस्या ग्रहं षड्जस्वरः। हिमर्त्तौ ग्रीष्मवेलायां गानसमयः। रागमालायां तस्याः स्वरूपं यथा। स्वर्णवस्त्रपरीधाना। पुष्पमाल्यधरा। नायकमेलनार्थमेकाकिनीसङ्केतस्थानोपविष्टा॥ २॥ तृतीया धनाश्रीः। अस्याः षाड्वजातिः। अस्याः स्वरावलिः। ष प ध नि ऋ ग। ग्रहं षड्जस्वरः। हिमर्त्तौ द्वितीयप्रहरदिवसे ग्रीष्मवेलायां वा गानसमयः। रागमालायां तस्याः स्वरूपम्। वियोगिनी नारी। रक्तवस्त्रपरीधाना। वियोगजसन्तापेन दुःखितातिकृशा। एकाकिनी रोदनमाना वकुलतरुतलोपविष्टा॥ ३॥ चतुर्थी वसन्तरागिणी। अस्याः सम्पूर्णा जातिः। अस्याः स्वरावलिः। ष ऋ ग म प ध नि। अस्या ग्रहं षड्जस्वरः। हिमर्त्तौ मध्याह्ने वसन्तर्त्तौ दिवामात्र च गानसमयः। रागमालायां तस्याः स्वरूपम्। सुन्दरपुरुषाकृतिः। कस्यचिन्मते श्यामवर्णा। रक्तवसना। मयूरपुच्छशिखा। आम्रमुकुलहस्ता। यौवनमदनमदमत्ता। पुष्पमाल्यगलदेशा। पुष्पोद्याने सह नर्त्तकीसुस्वरगायनीभिः सुखेन रागरङ्गयुता। वामहस्तधृतताम्बूलवीटिका। स्त्रीगणसहितहास्यकौतुकक्रीडानृत्यगीतवाद्यासक्ता। रागमालान्तरे उक्तगुणयुक्ता श्रीकृष्णमूर्त्तिसदृशमूर्त्तिर्लिखिता॥ ४॥ पञ्चमी आशावरी। अस्या औड्वजातिः। अस्याः स्वरावलिः। ध नि ष म प। अस्याः ग्रहं धैवतस्वरः। हिमर्त्तौ द्वितीयप्रहरदिवसे गानसमयः। रागमालायां अस्याः स्वरूपम्। श्यामवर्णा स्त्री। कोमलाङ्गी। श्वेतशाटीपरिधाना। कर्पूरानुलेपना। हस्तपदयोर्धृतसर्पवेष्टिता केशैर्बद्धचूडा। जलमध्यस्थपर्व्वतगुहायामुपविष्टा। रागमालान्तरे उक्तगुणयुक्ता वृषपत्रबद्धकटिदेशा नग्ना लिखिता॥ ५॥ *॥ अस्य पुत्रा अष्टौ। यथा। सिन्धुः १ मालवः २ गौड़ः अथवा गोण्डः ३ अस्य स्थाने केचित् कल्याणः इति केचिच्च हामीर इति पठन्ति। गुणसागरः ४ कुम्भः ५ गम्भीरः ६ शङ्करः अथवा आगड़ः ७ विहागरः ८॥ *॥ कल्लिनाथमते श्रीरागः प्रथमरागः अस्य भार्य्या षट्। यथा। गौरी १ गौलाहली २ धवली ३ रुद्राणी ४ मालकौश अर्थात् कौशिकी ५ देवगान्धारी ६। तन्मते पुत्रा अष्टौ हनुमन्मततुल्याः। किन्तु गौड़शङ्करविहागरस्थाने वाल्लाया आगड़ा विगड़ा लिखिताः॥ *॥ सोमेश्वरमतेऽपि प्रथमरागोऽयम्। अस्य रागिण्यः षट्। यथा। मालवी अथवा मरुषा १ त्रिवेणी अथवा तिरवनी २ गौरी ३ केदारा ४ मधुमाधवी ५ पाहाड़िका अथवा पाहाड़ी ६। अस्य पुत्राः पूर्व्वोक्तमतद्वयतुल्याः। तन्मते अस्य रागस्य रागिणीसहितस्य शिशिरर्त्तौ गानसमयः॥ *॥ भरतमते पञ्चमरागोऽयम् अस्य रागिण्यः पञ्च। यथा। सिन्धुवी १ काफी २ ठुमरी ३ पूर्व्वदेशे विस्तार इति ख्याता। विचित्रा ४ शिरहटी अथवा सोरठी ५ तन्मते अस्याष्ट पुत्राः यथा। गौरमणः १ कोलाहलः २ वासन्तः ३ शङ्करणः ४ राकेश्वरः ५ खटरागः ६ वड़हंसः ७ दशकारः ८। तेषां भार्य्या यथा। विद्या १ धान्यः २ कुम्भा ३ सुहनी ४ शारदा ५ क्षेमा ६ शशिरेखा ७ सरस्वती ८। इति नानासङ्गीतशास्त्रतः संगृहीतम्॥

श्रीकण्ठः, पुं, (श्रीः शोभा कण्ठे यस्य।) शिवः। इत्यमरः॥ कुरुजाङ्गलदेशः। स तु हस्तिनापुरस्य उत्तरपश्चिमे वर्त्तते। इति हेमचन्द्रः॥ (पक्षिविशेषः। यथा, वृहत्संहितायाम् १८६।३८।
"स्त्रीसंज्ञा भासभषककपिश्रीकर्णच्छिक्कराः।
शिखिश्रीकण्ठपिप्पीकरुरुश्येनाश्च दक्षिणाः॥")

श्रीकण्ठपदलाञ्छनः, पुं, (श्रीकण्ठ इति पदं लाञ्छनं यस्य।) भवभूतिः। स तु मालतीमाधवादि-नाटककर्त्ता। इति शब्दमाला॥ (यथा, उत्तरचरिते प्रस्तावनायाम्।
"अस्ति खलु तत्रभवान् काश्यपः श्रीकण्ठपदलाञ्छनो भवभूतिर्नाम॥")

श्रीकण्ठसखः, पुं, (श्रीकण्ठस्य महादेवस्य सखा। समासे टच्।) कुवेरः। इति हलायुधः॥

श्रीकन्दा, स्त्री, (श्रीः शोभा तद्युक्तः कन्दो यस्याः।) वन्ध्याकर्कोटकी। इति राजनिर्घण्टः॥

श्रीकरं, क्ली, रक्तोत्पलम्। इति त्रिकाण्डशेषः॥

श्रीकरः, पुं, विष्णुः। इति त्रिकाण्डशेषः॥ स्मृतिग्रन्थकारविशेषः। यथा। श्रीकराचार्य्यादिग्रन्थादरपराहतविवेकानाम्। इति दायभागाद्यशोकटीकायां श्रीकृष्णतर्कालङ्कारः॥ (श्रियः शोभायाः करः।) श्रीकारके, त्रि॥

श्रीकरणं, क्ली, (श्रीः क्रियतेऽनेनेति। कृ+करणे ल्युट्।) लेखनी। इति शब्दरत्नावली॥

श्रीकान्तः, पुं, (श्रियाः कान्तः।) विष्णुः। इति शब्दरत्नावली॥

श्रीकारी, [न्] पुं, (श्रियं शोभां करोतीति। कृ+णिनिः।) मृगविशेषः। तत्पर्य्यायः। शिखियूपः २ कुरङ्गः ३ महावदः ४ यवनः ५ वेगिहरिणः ६ जङ्घालः ७ जाङ्घिकाश्रयः ८। अस्य मांसगुणाः। लघुत्वम्। ग्राहकम्। बलप्रदत्वञ्च। इति राजनिर्घण्टः॥

श्रीखण्डः, पुं क्ली, (श्रियः शोभायाः खण्ड इव यत्र।) चन्दनम्। इति त्रिकाण्डशेषः॥ (यथा, गीतगोविन्दे। ६।१०।

खलाधारा, स्त्री, ( खल आधारो यस्याः । ) तैल-पायिका । इति जटाधरः ॥ आरसुला इति भाषा ॥

खलिः, पुं, ( खल + इन् । ) तैलकिट्टम् । इति राजनिर्घण्टः ॥ (यथा भारतरत्नाकरे । २।६८ ।
"स्थाल्यां वैदूर्य्यमय्यां पचति तिलखलिं चन्दनै-रिन्धनौघैः ॥")

खलिनः, पुं क्ली, ( खे अश्वमुखच्छिद्रे लीनः पृषो-दरादित्वात् वा ह्रस्वः ।) खलीनः । इत्यमर-टीकायां रायमुकुटः ॥ ( यथा, कादम्बर्य्याम्
"उभयतः खलिनकनककटकामलमाभ्यां पदे पदे छताकुञ्चनप्रयत्नाभ्यां पुरुषाभ्यामवलम्ब्यमानम् ।"
अश्वमित्यर्थः ॥ )

खलिनी, स्त्री, (खलानां समूहः।"इति खलादिभ्य." ४ । २ । ५१ । इति इनिः । ततो ङीप् । ) खलसमूहः । धानेर अनेक खामार इति भाषा ॥ तत्पर्य्यायः । खल्या २ । इत्यमरः । ३ । २ । ४२ ॥ तालखर्ज्जूरी । इति रत्नमाला ॥

खलिशः, पुं, ( खे जलादूर्द्ध्वाकाशे लिशति ईषदुद्-गच्छतीति । यद्वा, खे जलाभ्यन्तरे छिद्रादौ लिशति स्वल्पीभावेन तिष्ठतीति । लिश् + कः । ) खगामख्यातमत्स्यः । खलिशामाछ इति भाषा ॥ तत्पर्य्यायः । कञ्चोटः २ खलेशयः ३ । इति शब्दरत्नावली ॥ अस्य गुणाः । वाहित्वम् । कषायत्वम् । वायुकोपनत्वम् । रूक्षत्वम् । लघु-त्वम् । शूलहरत्वम् । किञ्चिदामविनाशित्वञ्च । इति राजवल्लभः ॥ खलिशोऽपि पाठः ॥

खलीकारः, पुं, ( खल + च्वि + कृ + घञ् । अभूततद्भावे च्विः ।) अपकारः । इति जटाधरः ॥ (निर्भर्त्स-नम् । इति चिन्तामणिः ॥ )

खलीनः, पुंक्ली, (खे अश्वमुखच्छिद्रे लीनः।) कविका । इत्यमरः । २ । ८ । ४६ ॥ कडियालि इति भाषा ॥ (यथा, महाभारते । १ । १६६ । १५ ।
"शतं रथानां वरहेममालिनां चतुर्युजां हेमखलीनमालिनाम् ॥")

खलु, अ, ( खल् + बाहुलकात् उन् । ) निषेधः । वाक्यालङ्कारः । ( यथा, माघे । २ । ७० ।
"अनुत्सूत्रपदन्यासा सद्‌वृत्तिः सन्निबन्धना । शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥" ... खलु वाचिकम् ॥"
"अत्रादौ खलुशब्दः प्रतिषेधार्थे द्वितीयः वाक्या-लङ्कारे ॥"इति तट्टीकायां मल्लिनाथः॥)जिज्ञासा । (यथा, गणरत्ने । "स खल्वधीते वेदम् ?") अनु-नयः । इत्यमरः । ३ । ४ । १८ ॥ (यथा, गणरत्ने ।
"न खलु न खलु सुभ्रु ! साहसं कार्य्यमेतत्" ॥) निश्चितम् । (यथा, कुमारे । ४ । २८ ।
"दयिताखनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ॥")
पदवाक्यादिपूरणम् । ( यथा, रामायणे । ३ । ३१ । ६ ।
"वध्याः खलु न वध्यन्ते सचिवास्तव रावण ! । ये त्वामुत्पथमारूढं न निगृह्णन्ति सर्व्वशः ॥" ) वीप्सा । इति शब्दरत्नावली ॥ (यथा,— शाकुन्तले १ मे अङ्के ।
"न खलु न खलु वाणः सन्निपात्योऽयमस्मिन् मृदुनि मृगशरीरे तूलराशाविवाग्निः ॥")

खलुक्, [च्] पुं, ( खं इन्द्रियं दर्शनेन्द्रियं लुञ्च-यति हन्तीति । ख + लुञ्च + क्विप् ।) अन्धकारः । इति त्रिकाण्डशेषः ॥

खलुरिः, पुं, (खलुरिष्यते बध्यतेऽस्मिन् । खलु + रिष् + कर्म्मणि घञ् ।) स्थानभेदः । इति शब्दचन्द्रिका ॥

खलूरिका, स्त्री, ( खलु + रिष् + निपातनात् साधुः ।) शस्त्राभ्यासभूमिः । इति हेमचन्द्रः ॥

खलेधानी, स्त्री, ( खले धीयन्ते इयमस्मिन् । धा + अधिकरणे ल्युट् ततो ङीप् । ) मेधिः । खलेपशुबन्धनदारु । इति जटाधरः ॥

खलेवाली, स्त्री, ( खले वाल्यन्ते चाल्यन्तेऽत्र इयमा इति । वल् + अधिकरणे घञ् गौरा-दित्वात् ङीष् । ) खले गोबन्धनदारु । इति हेमचन्द्रः ॥ मेढ़ काठ इति भाषा ॥ ( यथा, कात्यायनश्रौतसूत्रे । २२ । ३ । ४८ ।
"खलेवालीयूपो दाक्षिणेषाः")

खलेशः, पुं, ( खे जलादूर्द्ध्वाकाशे गमनकाले लिशति ईषद्गच्छतीति । लिश् + अच् ।) खलिश-मत्स्यः । इति हारावली ॥

खलेशयः, पुं, ( खलेशं जलादूर्द्ध्वाकाशसंसर्गं यातीति । या + कः । ) खलिशमत्स्यः । इति शब्दरत्नावली ॥

खल्या, स्त्री, (खलानां समूहः । यत् ।) खलिनी । इत्यमरः । ३ । ६ । ४२ ॥ धानमाड़ार अनेक खामार इति भाषा ॥

खल्लः, पुं, ( खलतीति क्विप् खल् तं लातीति । ला आदाने + कः । ) वस्त्रप्रभेदः । गर्त्तः । चर्म्म । चातकपक्षी । इति मेदिनी ॥ दृतिः । इति हेमचन्द्रः ॥ मशक इति भाषा । औषध-मर्द्दनपात्रम् । खल इति भाषा । इति वैद्यकम् ॥ ("अजागलस्तनयामिव भूगर्भे स्थितयं चिपेत् । तस्योपरिस्थितं खल्लं तप्तखल्लमिति स्मृतम् ॥" इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-कारे ॥)

खल्लिका, स्त्री, ( खल्ल + संज्ञायां कन् ततष्टाप्, कापि अत इत्वम् ।) भर्जनीयम् । पिष्टकादि-भर्जनपात्रम् । इति शब्दचन्द्रिका ॥

खल्लिटः, त्रि, (खल्ल + इन् । खल्लि इव टलतीति । टल् + डः ।) खलतिः । इति शब्दरत्नावली ॥

खल्ली, स्त्री, ( खल्ल + गौरादित्वात् ङीष् । ) हस्त-पादावमर्द्दनाख्यरोगः । इति मेदिनी ॥ तस्य लक्षणं यथा, माधवकरः ।
"खल्ली तु पादजङ्घोरुकरमूलावमोटनी ॥"
तच्चिकित्सा यथा, भावप्रकाशे ।
"कुष्ठसैन्धवयोः कल्कश्चुक्रतैलसमन्वितः । सुखोष्णो मर्द्दने योज्यः खल्लीशूलनिवारणः ॥"
अपि च भैषज्यरत्नावल्याम् ।
"खल्ल्यां स्निग्धाम्ललवणैः स्वेदोष्णादीपनाहनम्॥"

खल्लीटः, त्रि, ( खल्लीव टलतीति । टल् + बाहु-लकात् डः । ) खलतिः । इति त्रिकाण्डशेषः ॥ (तच्चिकित्सा यथा, गारुडे । १९० । १ ।
"महाराजात्प्रजायन्ते खल्लीटस्य कथाः शुभाः । दग्धहस्तिदन्तमसिना नानाचौररसाञ्जनात् ॥")

खव, ग भूतिप्रादुर्भावयोः । इति कविकल्पद्रुमः ॥ ( क्र्यां-परं-अकं-सेट् । ) भूतिः सम्पत्तिः पूतिः पवित्रता तयोरुत्पत्तिः प्रादुर्भावः ॥

खवल्ली, स्त्री, ( खे आकाशे स्थिता वल्ली । ) आकाशवल्ली । इति राजनिर्घण्टः ॥ (पर्य्यायः गुणाश्च । अथ आकाशवल्ली । अमर-वेलि इति च भाषा ।
"आकाशवल्ली तु बुधैः कथितामरवल्लरी । खवल्ली ग्राहिणी तिक्ता पिच्छिलाक्ष्यामयापहा । तुवरामिकरी हृद्या पित्तश्लेष्मामनाशिनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।)

खवारि, क्ली, ( खे आकाशे स्थितं वारि उद-कम् । खादागतं वारि वा । ) दिव्योदकम् । इति राजनिर्घण्टः ॥

खवाष्पः, पुं, (खे आकाशे ऊर्द्ध्वे स्थितो वाष्पः ।) हिमम् । इति हारावली ॥

खशः, पुं, देशविशेषः । इति त्रिकाण्डशेषः ॥ (तद्देशवासिनि तद्देशनृपे च बहुषु अस्य लुक् ।) तथा हि मनुः । १० । ४४ ।
"पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः । पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ॥")

खशा, स्त्री, सुरागामगन्धद्रव्यम् । इति शब्द-चन्द्रिका ॥ ( कश्यपमुनेरपत्यत्वात् सः प्रजा-पतिर्दक्षः आदौ तदग्रीं कन्यात्मककर्म्मोलभ्यादेन शेते इति । ख + शी + डः ततष्टाप् । ) दक्ष-कन्या । सा च कश्यपपत्नी । यथा,—
"धर्म्मपत्न्यः समाख्याताः कश्यपस्य वदाम्यहम् । अदितिर्दितिर्दनुश्चैव कालाऽनायुः सिंहिका मुनिः ॥ कद्रूः प्राधा इरा क्रोधा विनता सुरभिः खशा ॥"
"इरा वृक्षलतावल्लीः तृणजातीश्च सर्व्वशः । खशा च यक्षरक्षांसि मुनिरप्सरसस्तथा ॥"
इति गारुडे ६ अध्यायः ॥

खशीटः, पुं, ( खं शीटति इति । शिट् अनादरे अच् । अस्य गमनसमये खस्यानादरत्वेन गति-योग्यत्वाभावेऽपि तद्गमनादरात् गमनात्तथा-त्वम् । ) खलिशमत्स्यः । इति त्रिकाण्डशेषः ॥

खश्वासः, पुं, ( खस्य आकाशस्य श्वास इव । ) वायुः । इति त्रिकाण्डशेषः ॥

खष, वधे । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-सकं-सेट् । ) खषति । इति दुर्गादासः ॥

खष्यं, क्ली, ( खन् + "खष्यमित्यवाप्येति ।" उणां ३ । २८ । इति यप्रत्ययात् निपातनात् सिद्धम् ।) क्रोधः । बलात्कारः । इत्युणादिकोषः ॥

खसः, पुं, (खं इन्द्रियादीन्द्रियं स्यति निकालीकरो-तीति । सो + कः ।) पामा । खोस इति भाषा ॥ तत्पर्य्यायः । पाम २ कच्छूः ३ विचर्च्चिका ४ । इति हेमचन्द्रः ॥ ( पामन्शब्देऽस्य विवरणं ज्ञातव्यम् ॥)

येषां वाञ्छास्ति लोकानां मद्राज्यगमने पुनः ॥
वाराणसीं ते गच्छन्तु मयैव प्रतिपालिताम् ।
ततस्तस्य वचः श्रुत्वा जनाः केचिन्निजं पदम् ॥
जग्मुर्वाराणसीं केचिद्विजयेनाभिपालिताम् ।
ततो धनानां तान्राशीन्रत्नानाञ्च पृथक् पृथक् ॥
अश्मनां कनकानाञ्च रूप्याणां विजयस्तदा ।
धीवरैर्वाहयामास पुरीं वाराणसीं प्रति ॥
गन्धर्व्वाप्सरसां देवानां यदानीतं पुरा ।
रत्नदार्व्वादिकं यत्तु विजयं तत् प्रसादाद्‌ च ॥
तैस्तैर्नीतन्तु खाण्डवाः स्वस्थानं प्रति धर्षितैः ।
त्रिंशद्योजनविस्तीर्णां शतयोजनमायताम् ।
तां पुरीं विजयश्चक्रे न चिरादेव वै वनम् ।
तस्मिन् शक्रस्य सम्मत्या तक्षकः सुस्थितो गणैः ॥
उवास सुचिरं तत्र ततोऽभून्निर्जनं वनम् ।
तत्र देवाः सगन्धर्व्वाः क्रीडन्तोऽप्सरसां गणाः ॥
आश्चर्य्यञ्च विजयं स्तवेषु विजयावहम् ।”*॥
“अष्टाविंशतिमे प्राप्ते युगे द्वापरसंयुते ।
वह्निर्नाशमन्वयाप्य भिक्षां विष्णुमयाचत ।
दातुमङ्गीकृते भिक्षां तदा पाण्डुसुतेन वै ॥
वह्निः स्वरूपमास्थाय जिष्णुं वचनमब्रवीत् ।
अहमग्निः पाण्डुपुत्र ! यज्ञभागातिभोजनात् ॥
व्याधितोऽहं ततो व्याधिं मम त्वं नाशयाधुना ।
खाण्डवं नाम विपिनं सपक्षिमृगराक्षसम् ॥
यदि त्वं मां भोजयितुं शक्नोषि श्वेतवाहन ! ।
तदा ममाऽयमसौ व्याधिरपयास्यति नोचिरात् ॥
पुरा तु विजयो राजा खाण्डवीं नाम तां पुरीम् ।
भङ्क्त्वा वनं ततश्चक्रे तेन तत् खाण्डवं वनम् ॥
तदर्थं देवविहितं वनं तच्छ्वेतवाहन ! ।
विरोधात्तत्तु शक्रस्य न स्वयं भोक्तुमुत्सहे ॥
तस्मात् माहि महाभाग ! वने तस्मिन्नियोजय ।
यथाऽहं सकलं भोक्तुं प्राप्नोमि त्वत्प्रसादतः ॥
तस्य तद्वचनं श्रुत्वा सव्यसाची महाबलः ।
दाहयामास विपिनं तत् सर्व्वं प्राणिसंयुतम् ।
देवक्रीतनयेनायौ वासुदेवेन पालितः ।
खाण्डवं दाहयामास ज्वलनस्य हिते रतः ॥”
“सुप्रीतः प्रददौ तस्मादर्ज्जुनाय महात्मने ।
वह्निर्दिव्यधनुः गाण्डीवं वारुणं देवनिर्म्मितम् ॥
अक्षयाविषुधी द्वौ च रूप्यामांश्चतुरो हयान् ।
हनूमताधिष्ठितन्तु महान्तं वानरध्वजम् ॥
खड्‌गञ्च निशितं तीक्ष्णं रथञ्च सव्यसाचिने ।
नीरोगश्चाभवद्वह्निस्तदा जिष्णुप्रसादतः ॥
तैर्व्वाणैस्तेन धनुषा तेन खड्‌गेन केतुना ।
तदश्वस्यन्दनेनापि विजिग्ये फाल्गुनो रणे ॥
एवं भैरववर्गेषु संजातो विजयो नृपः ।
खाण्डवं नाम विपिनं चकार सुमहाद्युती ॥”
इति श्रीकालिकापुराणे ८० अध्यायः ॥
(खण्डस्य इक्षुरसघनादेर्व्विकार इत्यण् । गुडादि-विकारमिष्टान्नद्रव्यम् । यथा, महाभारते । १३ । ५३ । १८ ।
“रसानापूपकांश्चित्रान् मोदकानथ खाण्ड- [वान् ॥”)
खाण्डवी, स्त्री, ( हिमवतः सन्निहितं दृष्टद्वनं खण्डयित्वा चन्द्रवंशीयेन राज्ञा सुदर्शनेन निर्म्मिता या पुरी सा । ) चन्द्रवंशीयसुदर्शनराजकर्त्तृहिमवत्पर्व्वतनिकटस्थपुरीविशेषः । तद्विवरणं खाण्डवशब्दे द्रष्टव्यम् ॥
खाण्डिकः, पुं, ( खण्डं मोदकादिकं शिल्पमस्य । इति ठन् । ) खण्डपालः । मोदकः । इति हारावली ॥ मयरा इति भाषा ॥ ( क्लीवे तु खण्डिकानां समूहः “खण्डिकादिभ्यश्च ।” ४ । २ । ४५ । इत्यञ् । खण्डिकसमूहः ॥ )
खातं, क्ली, (खन्यते इति । खन् + कर्म्मणि क्तः । ) पुष्करिणी । इत्यमरः । १ । १० । २७ ॥ तस्य परिमाणं यथा,—शतेन धनुर्भिः पुष्करिणी त्रिभिः शतैर्दीर्घिकाचतुर्भिर्द्रोणः पञ्चभिस्तडागः द्रोणदशगुणा वापीति ॥
“चतुर्विंशाङ्गुलो हस्तो धनुश्चतुरुत्तरः ।
शतधन्वन्तरञ्चैव तावत् पुष्करिणी शुभा ।
एतत्पञ्चगुणः प्रोक्तस्तडाग इति निर्णयः ॥”
इति नयवर्द्धमानधृतो वशिष्ठः ॥
खातकं, क्ली, ( खात + संज्ञायां कन् । ) परिखा । इति हेमचन्द्रः ॥ खाना मगार इत्यादि भाषा ॥
खातकः, पुं, अधमर्णः । धारी । ऋणी । यथा,—
“उत्तमर्णो धनस्वामी अधमर्णस्तु खातकः ॥”
इति संक्षिप्तसारटीकायां गोयीचन्द्रः ॥
( परसैन्यविदारकः । यथा, महाभारते । १२ । ११८ । ११ ।
“खातकं व्यूहतत्त्वज्ञं यन्त्रप्रयोगकोविदम् ॥”
“खातकः परसैन्यविदारकः ।” इति तट्टीकाकृन्नीलकण्ठः ॥ )
खातभूः, स्त्री, ( खातयुक्ता भूर्भूमिः ।) प्रतिकूपः । परिखा । इति हारावली ॥
खातव्यवहारः, पुं, (खातस्य पुष्करिण्यादेर्व्यवहारः परिमाणम् ।) पुष्करिण्यादिपरिमाणम् । पुष्करे कालीति भाषा ॥
“अथ खातव्यवहारे करणसूत्रं सार्द्धार्या ।
गणयित्वा विस्तारं बहुषु स्थानेषु तद्युतिर्भाज्या ।
स्थानकमित्या सममितिरेवं दैर्घ्ये च वेधे च ।
क्षेत्रफलं वेधगुणं खाते घनहस्तसंख्या स्यात् ॥
उदाहरणम् ।
भुजवक्रतया दैर्घ्ये दशेशार्ककरैर्मितम् ।
त्रिषु स्थानेषु षट्पञ्चसप्तहस्ता च विस्तृतिः ॥
यस्य खातस्य वेधोऽपि द्विचतुस्त्रिकरः सखे ! ।
तत्र खाते कियन्तः स्युर्घनहस्ताः प्रचक्ष्व मे ॥”

१२



न्यासः ७ ... ०

१२

अत्र सममितिकरणेन विस्तारे हस्ताः । ६ । दैर्घ्ये । ११ । वेधे । ३ । तत्क्षेत्रदर्शनं यथा,—

११

न्यासः ६



११

यथोक्तकरणेन लब्धा घनहस्तसंख्या ॥ १९८ ॥
खातान्तरे करणसूत्रं मार्द्धवृत्तम् ।
मुखजतलजतद्युतिजक्षेत्रफलैक्यं हृतं षड्‌भिः ।
क्षेत्रफलं सममेतत् वेधगुणं फलं घनफलं स्पष्टम् ।
समखातफलत्र्यंशः सूचीखाते फलं भवति ॥
उदाहरणम् ।
मुखे दशद्वादशहस्ततुल्यं
विस्तारदैर्घ्यन्तु तले तदर्द्धम् ।
यस्याः सखे सप्तकरश्च वेधः
का खातसंख्या वद तत्र वाप्याम् ॥

१२

न्यासः १०


१०

१२

मुखजं क्षेत्रफलम् । १२० । तलजम् । ३० । तद्युतिजम् । २७० । एषामैक्यम् । ४२० । षड्‌भिः । ६ । हृतं जातं समफलम् । ७० । वेध- ७ हतं जातं खातफलं घनहस्ताः । ४९० ।
द्वितीयोदाहरणम् ।
खातेऽथ तिग्मकरतुल्यचतुर्भुजे च
किं स्यात् फलं नवमितः किल यत्र वेधः ।
वृत्ते तथैव दशविस्तृतिपञ्चवेधे
सूचीफलं वद तयोश्च पृथक् पृथङ्मे ॥

१२

न्यासः १२


१२

१२

भुजः । १२ । वेधः । ९ । जातं यथोक्तकरणेन खातफलं घनहस्ताः । १२९६ । सूचीफलम् । ४३२ ।

वृत्तखातदर्शनाय।




व्यास । १० । वेध । ५ । अत्र सूक्ष्मपरिधि $\frac{३९२७}{१२५}$ । सूक्ष्मक्षेत्रफलम् $\frac{३९२७}{५०}$ । वेधगुणि तात सूक्ष्मखातफलम् $\frac{३९२७}{१०}$ । सूक्ष्मसूची फलम् $\frac{१३०९}{१०}$ । यद्वा स्थूलखातफलम् $\frac{२७५०}{७}$ । सूचीफलं स्थूलम् $\frac{२७५०}{२१}$ ।

इति लीलावत्यां खातव्यवहारः समाप्तः ॥

खात क्ली (खनु विदारे+ ‘अशिखनिभ्यां क्तिन्। उणा। ४। १६१। इति कृत् किच्च।) खातम्। खनित्रम्। इत्युणादिकोषः ॥ दारणम्। वनम्। खननम्। इति सिद्धान्तसारे उणादिवृत्तिः ॥ (जलाधारविशेषश्च। इति उज्ज्वलदत्तः ॥)

खाद ऋ भक्षणे। इति कविकल्पद्रुमः ॥ (भ्वा पर सक सेट्। कादित।) ऋ अचखादत्। इति दुर्गादासः ॥

खादक, त्रि (खाद भक्षणे+ण्वुल।) ऋणग्रहीता। खातक इति ख्यातः। इति मिताक्षरा ॥ भक्षकः। यथा —

‘विक्रयेणोर्विनिमयैर्दत्त्वा गोमांसखादक।
ब्रत चान्द्रायणं कुर्यादवधे मासाद्धर्धी भवेत ॥’
इति प्रायश्चित्ततत्त्वे गोभिलः ॥

खादन क्ली (खाद+भावे ल्युट्।) भक्षणम्। आहारः। (खादति चर्व्ययत्यनेन इति।) दन्तः पु। इति हेमचन्द्रः ॥

खादित त्रि (खाद+क्त।) भक्षितम्। इत्यमरः। ३। १। ११०। खाओया इति भाषा ॥ (‘अशितं खादितं पीतं लीढ़ं कोष्ठगतं नृणाम्। तज्जीर्यति यथाकालं शोषितं पित्ततेजसा ॥’ इति शारीरस्थाने चतुर्थेऽध्याये सुश्रुतेनोक्तम् ॥)

खादिरसार पुं, (खदिर+स्वार्थे अण् तस्य सारः षष्ठी तत्पुरुषः।) खदिरवृक्षनिर्यासः। खयेर इति भाषा। तत्पर्यायः। खादिरं २ बहुसारः ३ भनुसारः ४ रङ्गदः ५ रदः ६। अस्य गुणाः। कटुत्वम्। तिक्तत्वम्। उष्णत्वम्। कफवातव्रण कण्ठामयनाशित्वम्। दीपनकारित्वम्। रोपनत्वम्। इति राजनिर्घण्टः। खदिरसारोऽप्यत्र पाठः। (यथा —

‘विना खदिरसारेण तारल्यं दृश्यतेऽधुना।
अधरे आयते रागो नागरस्य यथाधरे।’
इति उद्भटः ॥)

खादुक त्रि (खादति हिनस्ति इति। खाद्+उञ् सञ्ज्ञायां कन्।) हिंसालुकः। इति हारावली ॥

खाद्य त्रि (खाद्यते इति। खाद+कर्म्मणि ण्यत्।) भक्षणीयद्रव्यम्। यथा —

‘कश्च भद्रखलेश्वरोऽद्य मिह किं घोरे वने स्थीयते
शार्दूलादिभिरेव हिंस्रपशुभिः खाद्योऽहमित्याशया।’ इत्युद्भटः ॥

खानपान क्ली, (धातूनामनेकार्थत्वात् खै भक्षणे+भावे ल्युट् खानम्। पा पाने+भावे ल्युट् पानम्। खानेन सह पानं यद्वा खानञ्च पानञ्च तयोः समाहारः।) कठिनद्रवद्रव्ययोर्गलाधःकरणम्। खाना पिना इति हिन्दी भाषा ॥ यथा गारुडे नीतिसारे १०८ अध्यायः।

‘सद्भावेन हि तुष्यन्ति देवाः सत्पुरुषा द्विजाः।
इतरे खानपानेन वाक्प्रदानेन पण्डिताः ॥’

खानि स्त्री (खन+इन्। पृषोदरात् वृद्धिः।) खनिः। इति हेमचन्द्रः ॥

खानिक क्ली (खानेन खननेन निर्वृत्त इति ठण्।) कुडच्छेद्यम्। इति त्रिकाण्डशेषः ॥ देयालेर गर्त्त इति भाषा ॥

खानिल त्रि, (खानं खननं शिल्पत्वेनास्त्यस्य। इति वातुलकात् इलच्।) भित्तिचौरः। इति शब्दरत्नावली ॥ सिंधेल चोर इति भाषा ॥

खानी स्त्री (खानि+वा ङीष्।) खनिः। इति शब्दरत्नावली ॥

खानोदक पु (खानाय पानार्थं उदकमस्य।) नारिकेलः। इति त्रिकाण्डशेषः ॥

खापगा स्त्री (खे आकाशे स्थिता आप् आगता वा आपगा नदी।) गङ्गा। इति हेमचन्द्रः ॥

खार पुं (ख अवकाशमाधिक्येन ऋच्छतीति। ऋ+अण्।) खारीपरिमाणम्। इति हेमचन्द्रः ॥

खारि स्त्री, (ख मध्यावकाशं आरातीति। आ रा+इन्।) खारीपरिमाणम्। इति भरतधृतहेमचन्द्रः ॥

खारिक क्ली (खारि+सञ्ज्ञायां कन्।) महापारेवतम्। इति राजनिर्घण्टः ॥

खारिम्पच त्रि (खारिं खारीपरिमितधान्यमितयं पचतीति। पच+‘परिमाणे पच।’ ३। २। ३३। इति खश्+ततो मुम्।) खारिपरिमितान्नादिपाककर्त्ता। इति व्याकरणम् ॥

खारी, स्त्री (ख मध्यावकाशं आरातीति। आ+रा+क्त। ‘इद्दिकारान्तादक्तिनः।’ ४।१।४५। इत्यस्य वार्त्तिं इति पक्षे ङीष्।) परिमाणविशेषः। इत्यमरः। २। ९। ८८॥ यदाह तट्टीकायां भरतः।

‘पल प्रकुञ्चकं मुष्टि कुडवस्तच्चतुष्टयम्।
चत्वारः कुडवाः प्रस्थश्चतुः प्रस्थमथाढकम् ॥
अष्टाढको भवेद्द्रोणो द्विद्रोणः शूर्प उच्यते।
सार्द्धशूर्पो भवेत् खारी द्वे शूर्पौ गोणी मता ॥
तामेव भारं जानीयात् वाहो भारचतुष्टयम् ॥’’
‘‘षोडशद्रोणपरिमाणम्।’’ इत्यमरटीकायां स्वामी लीलावती च ॥ माणीचतुष्टयम्। तत्

चतुर्दशाधिकचतुःसहस्रपलानि। पाचशत चार सेर इति भाषा। इति वैद्यकपरिभाषा। द्रोणचतुष्टयम्। यथा,—

‘चतुराढको भवेद्द्रोणः खारी द्रोणचतुष्टयम्।’
इति स्मृतिः ।

खारीक, त्रि (खारीं खारीवापमर्हतीति। खार्या ईकन्। ५। १। ३३। ‘केवलायाश्चेति वक्तव्यम्।’ इति वार्त्तिं इति ईकन्।) खारीक्षेत्रम्। खारीपरिमितवीजवपनोपयुक्तक्षेत्रम्। तत्पर्यायः। खारीवाप २। इत्यमरः। २।६।११॥

खारीवाप त्रि, (खारी तत्परिमितधान्यं उप्यते ऽत्र। वप+अधिकरणे घञ्।) खारीकः। इत्यमरः। २। ९। १०॥ (खारीं वपतीति। वप+कर्त्तरि अण्। धान्यादिवपनकारी।)

खिखि स्त्री, (खिरित्यव्यक्तशब्देन खेटति भीषयत्यनुपादयतीति। खि+खिट+ड। पृषोदरात् साधु।) किखिः। इति क्वचित् त्रिकाण्डशेषे पाठः ॥ खेंकशियाली इति भाषा ॥

खिङ्खिर पु (खिं अव्यक्तध्वनिविशेषं किरति विकृतिभावेन शब्दं करोतीत्यर्थः। कृ+क। पृषोदरात् खत्वेन साधु।) शिवाभेदः। खेंकशियाली इति भाषा। खट्वाङ्गम्। तत्तु शिवस्याङ्गम्। वारिवालकम्। तत्तु गन्धद्रव्यम्। इति विश्वो हेमचन्द्रश्च ॥

खिट भयभीषणे। इति कविकल्पद्रुमः। (भ्वां पर भये अक भयोत्पादने सक सेट्।) भीषा स्वतो भयोत्पादनम्। खेटति जनो व्याघ्रादिभि र्भीत्यर्थः। खेटति व्याघ्रो जनं भीषयते इत्यर्थः। इति दुर्गादासः ॥

खिद श प ञौ परिघाते। इति कविकल्पद्रुमः। (तुदां पर सक अनिट्।) श प खिन्दति दुष्टं राजा। ञौ खिन्ना। इति दुर्गादासः ॥

खिद इ ध य ञौ दैन्ये। इति कविकल्पद्रुमः। (दिवां रुधां च आत्म अक अनिट्।) दैन्यमनुपतप्तीभावः। इ ध, खिन्ते सेवेव वैद्यम् दीयमान न यच्छते। इति हलायुधः। इ य खद्यते विरमिलाप खिद्यते लोकहेतोरिति प्राकृतरेले। ञौ, खेत्ता। इति दुर्गादासः ॥

खिदिर, पुं, (खिद्यते अल्पपक्षेण तु खेन तपसा वा। यथायथ शुक्लपक्षततः खिद+‘इषि मदि मुदि खिदीति।’ उणां। १। ५२। इति किरच्।) चन्द्रः। इत्युणादिकोषः ॥ दीनः। तापसः। इति सिद्धान्तसारे उणादिवृत्तिः ॥

खिद्यमान, त्रि (खिद्+ताच्छील्ये चानश्।) खेदयुक्तः। दैन्ययुक्तः। उपतप्तः। यथा —

‘‘खिद्यमानन्तु तं दृष्ट्वा स्वर्गं शक्राद्यथ तदा।’’
इति ब्राह्मपुराणे स्यमन्तकः ॥

खिद्र, पुं (खिद् दैन्ये+‘‘स्फायि तञ्चीति।’’ उणां। २। १३। इति रक्।) रोगः। दरिद्रः। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

खिन्न त्रि, (खिद+क्त।) दैन्ययुक्तः। खेदयुक्तः। यथा, श्रीभागवते।

"गौर्भूत्वासुमुरारी सिन्ना रुदन्ती करुणं विभोः॥"

खरयष्टी, स्त्री, महासमङ्गा। इति राजनिर्घण्टः॥

खिलं, त्रि, (खिल्+कः।) हलादिना अकृष्टभूमिः। खिल भूँइ इति भाषा॥ तत्पर्य्यायः। अप्रहतम् २। इत्यमरः।२।१।५॥ सारसंग्रहे मेधसि च पुं। इति मेदिनी॥

"खिलो नारायणः प्रोक्तः सर्व्वस्तपुराणः स्मृतः।"

इति खिलेषु हरिवंशे इत्यत्र नीलकण्ठटीका॥

खु, ङ ध्वनौ। इति कविकल्पद्रुमः॥ (भ्वां-आत्मं-अकं-अनिट्।) ङ, खवते। इति दुर्गादासः॥

खुङ्गाहः, पुं (खुं इत्यव्यक्तशब्दं कुर्व्वन् गाहते रणस्थलं विलोड़यतीति। गाह+अच्।) कृष्णवर्णघोटकः। इति हेमचन्द्रः॥

खुज, उ स्तेये। इति कविकल्पद्रुमः॥ (भ्वां-परं-सकं-सेट्। उदित्त्वात् क्त्वा वेट्।) उ, खोजिला खुक्त्वा। स्तेयं चौर्य्यम्। इति दुर्गादासः॥

खुण्डाकः, पुं, (खुण्+आकः निपातनात् अस्य द्वित्वम्।) देवताड़कवृक्षः। इति रत्नमाला॥ खुखाक इति क्वचित् पाठः॥

खुड, ङ ड खण्डे। इति कविकल्पद्रुमः॥ (भ्वां-आत्मं-सकं-सेट्-इदित्।) पञ्चमस्वरी। खण्डः खोटनम्। ङ, कर्म्मणि खुड्यते। ङ, खुडते खोड़। इति दुर्गादासः॥

खुड, क }
खुड, इ क } भेदे। इति कविकल्पद्रुमः॥ (चुरां-परं-सकं-सेट्। पाक्षिकइदित्।) द्वौ पञ्चमस्वरिणौ। क, खोड़यति। द्वितीयं आद्यस्वरीति कातन्त्रगाद्याः। समते तु द्वितीयस्याद्यस्वरित्वे पूर्व्वोभयोरनुबन्धः स्यात्। पञ्चमस्वरित्वे तु सजातीयस्य पुनःपाठात् पूर्व्वो नेदनुबन्धः। खुण्डयति। खण्डयतीति प्रयोगस्तु खडि ङ् मथोऽयस्तात् घञि खण्डं करोतीति णौ साध्यम्। तस्य भेदवाचित्वन्तु धातूनामनेकार्थत्वात्। इति दुर्गादासः॥

खुर, श विलेखने। छेदने। इति कविकल्पद्रुमः॥ (तुदां-परं-सकं-सेट्।) श, खुरति भूमिं खुर्ग वा लोकः। खोरिता। खुरः शफम्। इति दुर्गादासः॥

खुरः, पुं, (खुर छेदने+कः। यद्वा "श्रमेन्द्राग्र-वज्रेति।" उणां।२।२८। इति रन् गुणाभावोऽन्त्यलोपश्च।) शफम्। गवादीनां पादाग्रम्। (यथा, मनुः।४।६७।

"न भिन्नश्रृङ्गाक्षिखुरैर्न वालधिविरूपितैः॥")

कोलदलम्। नखीनामगन्धद्रव्यम्। इति मेदिनी॥ छेदनवस्तु। नापितस्य खुरः। इति शब्दरत्नावली॥ खट्वादीनां पादकम्। इति धरणी॥ खुरा इति भाषा॥

खुरकः, पुं, (खुर+संज्ञायां कन्। खुरो गन्धद्रव्यविशेषः स इव कायति वा। कै+कः।) तिलवृक्षः। इति शब्दचन्द्रिका॥ (तिलशब्देऽस्य गुणादयो बोद्धव्याः॥)

खुरणसः, त्रि, (खुर इव नासिका अस्य "अञ्ना-सिकायाः इति।" ५।४।११८। इति अच्। नसादेशश्च "पूर्व्वपदात् संज्ञायामगः।" ८।४।३। इति णत्वम्।) चिपिटनासिकः। इत्यमरः।२।६।४७॥ चेपटानाकयुक्त इति भाषा॥

खुरणाः, त्रि, (खुर इव नासिका अस्य "खुर खराभ्यां वा नस्।" इति नसादेशः "पूर्व्वपदादिति।"८।४।३। इति णत्वं च।) खुरणसः। इत्यमरः।२।६।४७॥ चिपिटनासिकायुक्त इति भाषा॥

खुरप्रः, पुं, (खुर इव प्राति पूरयति लक्ष्यम् कार्य्यं पूरयतीत्यर्थः। खुर+प्रा+कः।) बाणविशेषः। इत्यमरटीकायां भरतः॥ खुरपा इति भाषा॥

खुरली, स्त्री, (खुरैः शरैः निदिध्यासित अभ्यासार्थं लाति गौणःपुनःपुनः विधार्थमत्र। ला अदन्ते+ इन्+वा ङीप्।) शराभ्यासः। इति हेमचन्द्रः॥

खुराकः, पुं, (खुर+आकन्।) षण्डः। दलु-मादिकोषः॥

खुरालकः, पुं, (खुर इव अलति पर्य्याप्नोतीति। अल+ण्वुल्।) लौहमयबाणः। इति शब्दमाला॥

खुरालिकः, पुं, (खुराणां आलिभिः कायति प्रकाशते। कै+कः।) नापितभाण्डः। नापितेर भाँड़ इति भाषा। नाराचः। उपधानम्। इति मेदिनी॥ खुरालिकोऽपि पाठः॥

खुर्द्द, ङ क्रीड़ायाम्। इति कविकल्पद्रुमः॥ (भ्वां-आत्मं-अकं-सेट्।) पञ्चमस्वरी। दीर्घिणः पृथक्पाठात् पूर्व्वस्य न दीर्घः। ङ, खुर्द्दते। इति दुर्गादासः॥

खुल्लं, स्त्री, (क्षुद्+बन्धदादित्वात् सिम्। खं लातीति। खा+कः। पृषोदरात् साधुः।) नखीनामगन्धद्रव्यम्। इति शब्दचन्द्रिका॥ क्षुद्रे नीचे च त्रि॥

खुल्लकः, त्रि, (खुल्ल+स्वार्थे कन्।) स्वल्पः। नीचः॥ कनिष्ठः। दरिद्रः। निष्ठुरः राजा। इत्यमरटीका॥

खुल्लतातः, पुं, (खुल्लः कनिष्ठः तातस्य पितुरिति पूर्व्वनिपातः।) पितृकनिष्ठभ्राता। इति शब्दरत्नावली॥ खुड़ा इति भाषा॥

खुल्लमः, पुं, (खल्लेन मीयते इति। मा+बर्थे कः।) पन्थाः। इति त्रिकाण्डशेषः॥

खूर्द्द, ङ क्रीड़ायाम्। इति कविकल्पद्रुमः॥ (भ्वां-आत्मं-अकं-सेट्।) पञ्चमस्वरी। ङ, खूर्द्दते। इति दुर्गादासः॥

खेगमीरकः, पुं, (खे आकाशे खीलक इव लक्ष्यं रत्नम्।) शब्दवती गतिः। इति हारावली॥

खेगमनः, पुं, (खे आकाशे गमनं यस्य।) कालकण्ठपक्षी। इति शब्दमाला॥

खेचरः, पुं, (खे चरतीति। चर+"चरेष्टः।" ३।२।१६। इति टः। अलुक् समासः।) शिवः। इति शब्दरत्नावली॥ विद्याधरः। इति जटाधरः॥ पारदः। इति राजनिर्घण्टः॥ आकाशचारिणि त्रि॥

("इतो हन्ति जराव्याधिं करोति व्याधिघातकाः। महा: खेचरता यस्य कोऽन्यः खलात् रुपाकरः।" इति वैद्यकरसेन्द्रसारसंग्रहे आरमारगाधिकारः॥ मेषादिराशिः। यथा ज्योतिषतत्त्वे—"खेचराश नरे॥")

खेचरान्नं, क्ली, (खेचरं द्विदलादिमिश्रितं अन्नम्।) द्विदलादिमिश्रिताकृतमन्नम्। खिचड़ी इति भाषा॥ इति पाकराजेश्वरः॥

खेट, त् व भक्षणे। इति कविकल्पद्रुमः॥ (अदन्तचुरां-परं-सकं-सेट्।) अचिखेटत्। इति दुर्गादासः॥

खेटं, क्ली, (खि+अट्+अप्।) कृषणम्। इति शब्दरत्नावली॥ खेडमपि पाठः॥

खेटः, पुं, (खे आकाशे अटति। अट्+अच्।) ग्रहः। यथा, भास्वतीये।

"यस्मिन् राशौ स्थितः खेटस्तेन तं परिपूरयेत्॥"

खेटः, त्रि, (खिट्+अच्। खेट+कः या।) अधमः। इत्यमरः।३।१।५४॥ घोटकः। इति शब्दरत्नावली॥ मृगया। ३।१। लिपिः॥ सुनन्दक इति पाठे बलरामस्य गदा नाम कश्चित्॥

खेटः, पुं, क्ली, (खिद्यते भयमनुपदमते अस्मादनेन वा। खिट्+भयादानं करोति वा घञ्।) मृगया। इति शब्दरत्नावली॥ कफः। (खिलते भयोपपर्व्वतिलस्यादिना स्थानेषुग्रामस्य लक्ष्मात्।) ग्रामभेदः। स तु कर्षकग्रामः। (तथा च भागवते।१।६।११।

"खेटखर्व्वटवाटीश्च वनान्युपवनानि च॥"

"खेटाः कर्षकग्रामाः।" इति श्रीधरस्वामी॥) चर्म्म। इति मेदिनीशब्दरत्नावल्यौ॥

खेटकः, पुं, (खेट+स्वार्थे कः।) ग्रामभेदः। खामार गाँ इति भाषा॥ इति जटाधरः॥ फलकम्। इति हेमचन्द्रः॥ "खेटकं वसुनन्दके।" इति हारावली॥ वसुनन्दको धनदत्तवीफलः। इति तत्त्वरची॥ बलदेवस्य गदा इति कश्चित्॥

खेटः } पुं, (खेटति भयस्तुपादयत्यनेन। खिट्
खेटरः } +करणे घञ्। खेट+स्वार्थे कः।) बलिः। यथा,—

"यष्टिखड्गेण खेटं। धनुरिषुरसकारकः।
दैत्यौद्यस्यथितौ नित्यं मम रक्षां कुरुष्व च॥"

इति शारदीयदुर्गापूजापद्धतौ खड्गपूजाप्रकरणम्॥

"खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च॥"

इति च तत्र दशभुजाया दुर्गाया ध्यानम्॥

खेटितालः, पुं, (खे अटतीति अट् इन्। खिट्+इन् वा। खेटिः तालोऽस्य।) वैतालिकः। इति शब्दमाला॥

खेटी, [न्] पुं, (खेट्+णिनिः।) नागरः। कामी। इति शब्दमाला॥

खेड, त् क भक्षणे। इति कविकल्पद्रुमः॥ (अदन्तचुरां-परं-सकं-सेट्।) अचिखेड़त्। इति दुर्गादासः॥

वृत्तखातस्योदाय।




व्यासः । १० । वेधः । ५ । अत्र सूक्ष्मपरिधिः $\frac{३९२७}{१२५}$ । सूक्ष्मक्षेत्रफलम् $\frac{३९२७}{५०}$ । वेधगुणि-तात् सूक्ष्मखातफलम् $\frac{३९२७}{१०}$ । सूक्ष्मसूची-फलम् $\frac{१३०९}{१०}$ । यद्वा स्थूलखातफलम् $\frac{२७५०}{७}$ ।

सूचीफलं स्थूलम् $\frac{२७५०}{२१}$ ।

इति लीलावत्यां खातव्यवहारः समाप्तः ॥

खात क्ली (खनु विदारे + "उषिखनिभ्यां कित्।" उणा । ४ । १६१ । इति थन् किच्च ।) खातम् । खनित्रम् । इत्युणादिकोषः । दारणम् । वनम् । खननम् । इति सङ्क्षिप्तसारे उणादिवृत्तिः । (कला धारविशेषश्च । इति उज्ज्वलदत्तः ।)

खाद ऋ भक्षणे । इति कविकल्पद्रुमः । (भ्वा-पर-सक-सेट् । ऋदित् ।) ऋ अचखादत् । इति दुर्गादासः ॥

खादक त्रि (खाद भक्षणे + ण्वुल् ।) कृत-ग्रहीता । अधमर्णः । खातक इति ख्यातः । इति मिताक्षरा । भक्षकः । यथा —

'विक्रयैर्वाविनिमयैस्ता गोमांसखादकः ।
स च चान्द्रायणं कुर्य्यात् तद्वधे भक्षणैरधी भवेत् ॥'

इति प्रायश्चित्ततत्त्वे गोभिलः ॥

खादन क्ली (खाद + भावे ल्युट् ।) भक्षणम् । आहारः । (खादन्ति चर्व्वयन्त्यनेन इति ।) दन्तः पु । इति हेमचन्द्रः ॥

खादित त्रि (खाद + क्त ।) भक्षितम् । इत्यमरः । ३ । १ । ११० ॥ खाओया इति भाषा ॥ (अग्निना खादितं पीतं लीढं काष्ठगतं कृतम् । तत्कायाग्निं यथाकालं प्रीणितं पितरोऽक्षयाः ॥

इति चारीरस्थाने चतुर्थेऽध्याये सुश्रुतेनोक्तम् ।)

खादिरसार पुं, (खदिर + स्वार्थे अण् ततः षष्ठी-तत्पुरुषः ।) खदिरवृक्षनिर्यासः । खयेर इति भाषा । तत्पर्य्यायः । खादिरः २ खदिरसारः ३ घनसारः ४ रङ्गदः ५ रक्तः ६ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । कफवातव्रण-कण्ठामयनाशित्वम् । दीपकारित्वम् । लेपनत्वञ्च । इति राजनिर्घण्टः । खदिरसारोऽपि पाठः । (यथा —

'विना खदिरसारेण दाहकं हरितां वर्णम् ।
माधवे आयतेन रागो नानुरागः पयोधरे ॥'

इति उद्भटः ।)

खादुक त्रि (खादन्ति हिनस्ति इति । खाद + उन् संज्ञायां कन् ।) हिंसालुकः । इति शब्दावली ॥

खाद्य त्रि (खाद्यते इति । खाद + कर्म्मणि ण्यत् ।) भक्षणीयद्रव्यम् । यथा —

'कस्य भवद्भिरीदृशमिदं किं घोरे वने स्थीयते शार्दूलाग्निभिरेव हिंस्रपशुभिः खाद्योऽहमित्या भया ।' इत्युद्भटः ॥

खानपान क्ली (धातूनामनेकार्थत्वात् खं भक्षणे + भावे ल्युट् खानम् । पा पाने + भावे ल्युट् पानम् । खानेन सह पानं यद्वा खानञ्च पानञ्च तयोः समाहारः ।) कठिनद्रवद्रव्ययोर्भक्षणा-करणम् । खाना पिना इति हिन्दी भाषा ॥ यथा गारुडे नीतिसारे १०८ अध्यायः ।

'सद्भावेन हि तुष्यन्ति देवाः सत्पुरुषा द्विजाः । इतरे खानपानेन वाक्प्रदानेन पण्डिताः ॥'

खानि स्त्री, (खन + इन् । पृषोदरात् वृद्धिः ।) खनिः । इति हेमचन्द्रः ॥

खानिक क्ली (खानेन खननेन निर्वृत्त इति ठञ् ।) कुड्यच्छेद्यम् । इति त्रिकाण्डशेषः ॥ दयालेर गर्त इति भाषा ॥

खानिल त्रि, (खाने खनने शिल्पत्वेनास्त्यस्य । इति बाहुलकात् इलच् ।) भित्तिचौरः । इति शब्दरत्नावली ॥ सिंदल चोर इति भाषा ॥

खानी स्त्री (खानि + वा ङीप् ।) खनिः । इति शब्दरत्नावली ॥

खानोदक पु (खानाय पानार्थं उदकमत्र ।) नारिकेलः । इति त्रिकाण्डशेषः ॥

खापगा स्त्री (खे आकाशे स्थिता खात् आगता वा आपगा नदी ।) गङ्गा । इति हेमचन्द्रः ॥

खार पु (खं अवकाशमाधिक्येन ऋच्छतीति । ऋ + अण् ।) खारीपरिमाणम् । इति हेमचन्द्रः ॥

खारि स्त्री, (खं मध्यावकाशं आराति । आ + रा + इन् ।) खारीपरिमाणम् । इति भरत-धृतरुद्रः ॥

खारिक क्ली (खारि + संज्ञायां कन् ।) मद्गु-पारेवतम् । इति राजनिर्घण्टः ॥

खारिम्पच त्रि (खारिं खारीपरिमितधान्य-मित्यर्थः पचतीति । पच + 'परिमाणे पचः ।' ३ । २ । ३३ । इति खश् + ततो मुम् ।) खारी-परिमितामादिपाककर्त्ता । इति व्याकरणम् ॥

खारी, स्त्री (खं मध्यावकाशं आराति । आ + रा + इन् । "कृदिकारादक्तिनः" । ४।१।४५। इत्यस्य वार्त्तिके इति पक्षे ङीष् ।) परिमाण-विशेषः । इत्यमरः । २ । ९ । ८८ ॥ यदाह तट्टी-कायां भरतः ।

"पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम् ।
चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम् ॥
अष्टाढको भवेद्द्रोणो द्विद्रोणः शूर्प उच्यते ।
सार्द्धशूर्पो भवेत् खारी द्वे खार्य्यौ गोण्युदाहृता ॥
तामेव भारं जानीयात् वाहो भारचतुष्टयम् ॥"
"षोडशद्रोणपरिमाणम् ।" इत्यमरटीकायां स्वामी लीलावती च ॥ शाणीचतुष्टयम् तत्तु षण्णवत्यधिकचतुःसहस्रपलानि । चारमन बार सेर इति भाषा । इति वैद्यकपरिभाषा ॥ द्रोण-चतुष्टयम् । यथा —

'चतुराढको भवेद्द्रोणः खारी द्रोणचतुष्टयम् ।'

इति स्मृतिः ॥

खारीक, त्रि (खारीं खारीवापमर्हतीति । खार्य्या ईकन् । ५ । १ । ३३ । 'केवलायाश्चेति वक्त-व्यम् ।' इति वार्त्तिकं इति ईकन् ।) खारी-क्षेत्रम् । खारीपरिमितबीजवपनोपयुक्तक्षेत्रम् । तत्पर्य्यायः । खारीवापः २ । इत्यमरः । २।९।१०॥

खारीवाप त्रि, (खारी तत्परिमितधान्यं उप्यते ऽत्र । वप + अधिकरणे घञ् ।) खारीकः । इत्य-मरः । २ । ९ । १० ॥ (खारीं वपतीति । वप + कर्त्तरि अण् । धान्यादिवपनकारी ॥)

खिखि स्त्री, (खिरित्यव्यक्तशब्देन खेटति भीत्या भयमुत्पादयतीति । खि + खिट + डः । पृषो-दरात् साधु ।) किखिः । इति कश्चित् त्रिकाण्ड-शेषे पाठः ॥ ख्याकशियाली इति भाषा ॥

खिङ्गिर पु (खिं अव्यक्तध्वनिविशेषं किरति त्रिस्त्रिभावेन शब्दं करोतीत्यर्थः । कॄ + कः । पृषोदरात् खत्वेन साधु ।) शिवाभेदः । ख्याक-शियाली इति भाषा । खट्वाङ्गम् । तत्तु शिव-स्याङ्गम् । वारिबालकम् । तत्तु गन्धद्रव्यम् । इति विश्वो हेमचन्द्रश्च ॥

खिट भयभीषये । इति कविकल्पद्रुमः ॥ (भ्वा-पर भये अक भयोत्पादने सक सेट् ।) भीषा त्रासो भयोत्पादना । खेटति जनो याघ्रादिभि-रीत्यर्थः । खेटति व्याघ्रो जनं भीषयते इत्यर्थः । इति दुर्गादासः ॥

खिद, श प श्रौ परिघाते । इति कविकल्पद्रुमः ॥ (तुदां पर सक अनिट् ।) श प खिन्दति दुष्टं राजा । श्रौ खेत्ता । इति दुर्गादासः ॥

खिद, द घ य श्रौ दैन्ये । इति कविकल्पद्रुमः ॥ (दिवां रुधां च आत्म अक अनिट् ।) दैन्यं सुपतभीभावः । द घ, खिन्ते तेन्विन ये द्रव्यम् दीयमानं न गृह्यते । इति हलायुधः ॥ द य सुखेनिरभिलाषः खिद्यते लोकश्चेतोरिति शाकुन्तले । श्रौ खेत्ता । इति दुर्गादासः ॥

खिदिर, पुं (खिद्यते हव्यपचेन दुःखेन तपसा वा । यथायथं ज्ञातपतिस्थानतया । खिद् + इषि मदि मुदि खिदीति ।" उणा । १ । ५२ । इति किरच् ।) चन्द्रः । इत्युणादिकोषः ॥ दीनः । तापसः । इति सङ्क्षिप्तसारे उणादिवृत्तिः ॥

खिद्यमान त्रि (खिद + ताच्छील्ये चानश् ।) खेदयुक्तः । दैन्ययुक्तः । उपतप्तः । यथा —

"खिद्यमानन्तु तं दृष्ट्वा सर्व्वं लब्धालभस्तदा ।"

इति ब्राह्मपुराणे सत्यवतः ॥

खिद्र पु (खिद् दैन्ये + 'स्फायि तञ्चिवञ्चीति ।" उणा । २ । १३ । इति रक् ।) रोगः । दरिद्रः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

खिन्न त्रि (खिद + क्त ।) दैन्ययुक्तः । खेद-प्राप्तः । यथा श्रीभागवते ।

"गौर्भूलासुखी खिन्ना वदन्ती करुणं विभोः॥"
खिरष्टिष्टी, स्त्री, महाश्वमज्ञा। इति राजनिर्घण्टः॥
खिलं, त्रि, (खिल्+कः।) हलादिना अकृष्टभूमिः। खिल भूँइ इति भाषा॥ तत्पर्य्यायः। अप्रहतम् २। इत्यमरः।२।१।५॥ सारसंग्रहे वेधसि च पुं। इति मेदिनी॥
"खिलो नारायणः प्रोक्तस्तत्र ब्रह्मगुणाः स्मृताः।"
इति खिलेषु हरिवंशे इत्यत्र नीलकण्ठटीका॥
खु, ङ ध्वनौ। इति कविकल्पद्रुमः॥ (भ्वां-आत्मं-अकं-अनिट्।) ङ, खवते। इति दुर्गादासः॥
खुङ्गाहः, पुं (खुं इत्यव्यक्तशब्दं कृत्वा गाहते रणस्थलं विलोडयतीति। गाह्+अच्।) कृष्णवर्णघोटकः। इति हेमचन्द्रः॥
खुज, उ स्तेये। इति कविकल्पद्रुमः॥ (भ्वां-परं-सकं-सेट्। उदित्त्वात् क्त्वा वेट्।) उ, खोजित्वा खुक्त्वा। स्तेयं चौर्य्यम्। इति दुर्गादासः॥
खुज्जाकः, पुं, (खुज्+आकः निपातनात् जस्य द्वित्वम्।) देवताडवृक्षः। इति रत्नमाला॥ खुञ्जाक इति क्वचित् पाठः॥
खुड, इ ठ खञ्जे। इति कविकल्पद्रुमः॥ (भ्वां-आत्मं-अकं-सेट्-इदित्।) पञ्चमस्वरी। खञ्जः खोटनम्। इ, कर्म्मणि खुण्ड्यते। ङ, खुण्डते खोडः। इति दुर्गादासः॥
खुड, क } भेदे। इति कविकल्पद्रुमः॥
खुड, इ क } (चुरां-परं-सकं-सेट्। माधिक इदित्।) द्वौ पञ्चमस्वरिणौ। क, खोडयति। द्वितीय आद्यस्वरीति कातन्त्रादयः। स्वमते तु द्वितीयस्याद्यस्वरित्वे पूर्व्वोपैदनुबन्धः स्यात्। पञ्चमस्वरित्वे तु सजातीयस्य पुनःपाठात् पूर्व्वो नेदनुबन्धः। खुण्डयति। खण्डयतीति प्रयोगस्तु खडि ङ् मथोत्स्यात् घञि खण्डं करोतीति णौ साध्यम्। तस्य भेदवाचित्वन्तु धातूनामनेकार्थत्वात्। इति दुर्गादासः॥
खुर, श विलेखने। छेदने। इति कविकल्पद्रुमः॥ (तुदां-परं-सकं-सेट्।) श, खुरति भूमिं लवं वा लोकः। खोरिता। खुरः शफम्। इति दुर्गादासः॥
खुरः, पुं, (खुर छेदने+कः। यद्वा "ऋज्रेन्द्राग्रवज्रेति।" उणां।२।२८। इति रन् गुणाभावोऽन्त्यलोपश्च।) शफम्। गवादीनां पादाग्रम्। (यथा, मनुः।४।६७।
"न भिन्नशृङ्गाक्षिखुरैर्न वालधिविरूपितैः॥")
कोलदलम्। नखीनामगन्धद्रव्यम्। इति मेदिनी॥ छेदनवस्तु। नापितस्य क्षुरः। इति शब्दरत्नावली॥ खट्वादीनां पादकम्। इति धरणी॥ खुरा इति भाषा॥
खुरकः, पुं, (खुर+संज्ञायां कन्। खुरो गन्धद्रव्यविशेषः स इव कायति वा। कै+कः।) तिलवृक्षः। इति शब्दचन्द्रिका॥ (तिलशब्देऽस्य गुणादयो बोद्धव्याः॥)
खुरणसः, त्रि, (खुर इव नासिका यस्य "अप्नासिकाया इति।" ५।४।११९। इति अच् नसादेशश्च "पूर्व्वपदात् संज्ञायामगः।" ८।४।३। इति णत्वम्।) चिपिटनासिकः। इत्यमरः।२।६।४७॥ चेपटानाकायुक्त इति भाषा॥
खुरणाः, त्रि, (खुर इव नासिका यस्य "खुर खराभ्यां वा नस्।" इति नसादेशः "पूर्व्वपदादीति।" ८।४।३। इति णत्वं च।) खुरणसः। इत्यमरः।२।६।४७॥ चिपटानासिकायुक्त इति भाषा॥
खुरप्रः, पुं, (खुर इव प्राति खुरास्त्रवत् कार्य्यं पूरयतीत्यर्थः। खुर+प्रा+कः।) बाणविशेषः। इत्यमरटीकायां स्वामी॥ खुरपा इति भाषा॥
खुरली, स्त्री, (खुरैः सह विविधानि अस्त्रादीनि लाति पौनःपुन्येन शिक्षार्थमत्र। ला आदाने+रन्+वा ङीप्।) शराभ्यासः। इति हेमचन्द्रः॥
खुराकः, पुं, (खुर+आकन्।) मद्यः। इत्युणादिकोषः॥
खुरालकः, पुं, (खुर इव अलति पर्य्याप्नोतीति। अल+ण्वुल्।) लौहमयवाणः। इति शब्दमाला॥
खुरालिकः, पुं, (खुराणां आलिभिः कायति प्रकाशते। कै+कः।) वाणकोभेदिः। नापितेर भाँड़ि इति भाषा। नाराचः। उपधानम्। इति मेदिनी॥ खुरालिकोऽपि पाठः॥
खुर्द, ङ क्रीडायाम्। इति कविकल्पद्रुमः (भ्वां-आत्मं-अकं-सेट्।) पञ्चमस्वरी। दीर्घित्वपृथक्पाठात् पूर्व्वस्य न दीर्घः। ङ, खुर्दते। इति दुर्गादासः॥
खुलं, स्त्री, (क्षुद्+सम्पदादित्वात् क्विप्। क्षुदं लातीति। ला+कः। पृषोदरात् साधुः।) नखीनामगन्धद्रव्यम्। इति शब्दचन्द्रिका॥ क्षुद्रे नीचे च त्रि॥
खुल्लकः, त्रि, (खुल्ल+स्वार्थे कन्।) स्वल्पः। नीचः॥ कनिष्ठः। दरिद्रः। निष्ठुरः खलः। इत्यमरटीका॥
खुल्लतातः, पुं, (खुल्लः कनिष्ठः तातस्य पितुरिति पूर्व्वनिपातः।) पितृकनिष्ठभ्राता। इति शब्दरत्नावली॥ खुड़ा इति भाषा॥
खुल्लमः, पुं, (खुल्लेन मीयते इति। मा+घञर्थे कः।) पन्थाः। इति त्रिकाण्डशेषः॥
खूर्द, ङ क्रीडायाम्। इति कविकल्पद्रुमः॥ (भ्वां-आत्मं-अकं-सेट्।) षष्ठस्वरी। ङ, खूर्दते। इति दुर्गादासः॥
खेकीलकः, पुं, (खे आकाशे कीलक इव लक्ष्यम्।) शब्दवती गतिः। इति हारावली॥
खेगमनः, पुं, (खे आकाशे गमनं यस्य।) कालकण्ठपक्षी। इति शब्दमाला॥
खेचरः, पुं, (खे चरतीति। चर+"चरेष्टः।" ३।२।१६। इति टः। अलुक् समासः।) शिवः। इति शब्दरत्नावली॥ विद्याधरः। इति जटाधरः॥ पारदः। इति राजनिर्घण्टः॥ आकाशचारिणि त्रि॥
("इतो हन्ति जराव्याधिं मर्द्दितो व्याधिघातकः। मदः खेचरतां धत्ते कौतुकः खतात् क्षमावनः॥"
इति वैद्यकरसेन्द्रसारसंग्रहे पारमारणाधिकारः॥
मेषादिराशिः। यथा ज्योतिषतत्त्वे—"खेचराश्च सर्व्वे॥")
खेचरी, स्त्री, (खेचरं छिद्रादिमिश्रितं अन्नम्।) छिद्रादिमिश्रितपक्वतण्डुलम्। खिचड़ीति भाषा॥ इति भावप्रकाशः॥
खेट, त् क भक्षणे। इति कविकल्पद्रुमः॥ (अदन्तचुरां-परं-सकं-सेट्।) अचिखेटत्। इति दुर्गादासः॥
खेटं, स्त्री, (खे+अट्+अच्।) लग्नम्। इति शब्दरत्नावली॥ खेडमपि पाठः॥
खेटः, पुं, (खे आकाशे अटति। अट्+अच्।) ग्रहः। यथा, भावविवेके।
"यस्मिन् राशौ स्थितः खेटस्तेन तं परिपूरयेत्॥"
खेटः, त्रि, (खिट्+अच्। खेट्+कः वा।) अधमः। इत्यमरः।३।१।५४॥ घोटकः। इति शब्दरत्नावली॥ मृगनिन्दकः। इति विश्वः॥ मृगनन्दक इति पाठे बलदेवस्य गदा नाम कश्चित्॥
खेटः, पुं, स्त्री, (खिद्यते भयमुत्पद्यते अस्मादनेन वा। खिट्+अपादाने करणे वा घञ्।) मृगया। इत्यमरहेमचन्द्रौ॥ कफः। (खेलने मद्योपयोगिशस्त्रादिना उपजीवति अस्मात्।) ग्रामभेदः। स तु कर्षकग्रामः। (तथा च भागवते।१।६।११।
"खेटखर्व्वटवाटीश्च वनान्युपवनानि च॥"
"खेटाः कर्षकग्रामाः।" इति श्रीधरस्वामी॥)
चर्म्म। इति मेदिनीशब्दरत्नावल्यौ॥
खेटकः, पुं, (खेट+स्वार्थे कः।) ग्रामभेदः। चासार गाँ इति भाषा॥ इति जटाधरः॥ फलकम्। इति हेमचन्द्रः॥ "खेटकं वसुनन्दके।"
इति हारावली॥ वसुनन्दको धनदक्षिणीवकः। इति तत्सूची॥ बलदेवस्य गदा इति कश्चित्॥
खेटः } पुं, (खेटति भयमुत्पादयत्यनेन। खिट्+करणे घञ्। खेट+स्वार्थे कः।)
खेटकः } चर्म्म। यथा,—
"यष्टिरूपेण खेट ! त्वमरिसंहारकारकः। देवीहस्तस्थितो नित्यं मम रक्षां कुरुष्व च॥"
इति शारदीयदुर्गापूजापद्धतौ अस्त्रपूजाप्रकरणम्॥
"खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च॥"
इति च तत्र दशभुजाया दुर्गाया ध्यानम्॥
खेटितालः, पुं, (खे अटतीति अट्+इन्। खिट्+इन् वा। खेटिः तालोऽस्य।) वैतालिकः। इति शब्दमाला॥
खेटी, [न्] पुं, (खेट+इनिः।) नागरः। कामी। इति शब्दमाला॥
खेड, त् क भक्षणे। इति कविकल्पद्रुमः॥ (अदन्तचुरां-परं-सकं-सेट्।) अचिखेडत्। इति दुर्गादासः॥

ये च मे युद्धकालेषु प्रवहन्ति रथं सदा ।
अश्वाश्च वारयन्त्येव दानवैर्बलवत्तरैः ॥
दुःखितोऽस्मि समस्तस्य पक्षच्छेदं यथा तदा ।
वाजिना शक्रवाक्येन शालिहोत्रो महामुनिः ॥
छिन्नपक्षास्तु ते सर्व्वे गत्वा तमृषिमब्रुवन् ।
दीनाः सुदुःखसम्पन्ना रुधिरेण परिप्लुताः ॥
भगवन् ! किं निमित्तं न पक्षच्छेदः कृतस्त्वया ।
अपराधविहीनानां नेच्छन्ति पण्डिताः ॥
तस्मात्त्वमेव प्राज्ञ ! रक्षणामिह वाजिनाम् ,
यथा स्यात् सर्व्वदा सौख्यं पुष्टिश्च मुनिपुङ्गव ! ॥
अथार्षौ कृपयाविष्टस्तानुवाच सुदुःखितान् ।
इन्द्रादेशात् कृतं सर्व्वं भवतां पक्षपातनम् ॥
तस्माद्वः प्रकरिष्यामि भविष्यति यथासुखम् ।
पृष्ठोरम्या यथा दृष्टे गौरवञ्च जगत्त्रये ॥
यत्र युष्माभिर्देवानां वाहनत्वं करिष्यथ ।
तथा भूमिपतीनाञ्च गौरवेण समन्विताः ॥
यो राजा भवतां पुष्टिं स्वन्नपानादिभिः सदा ।
करिष्यति न सन्देहो भविष्यति स दुर्ज्जयः ॥
न च त्यक्ष्यति तं लक्ष्मीः कदाचिज्जयलक्षणा ।
अपि सर्व्वैर्गुणैर्हीनं बहुभिः शत्रुभिरावृतम् ॥
तथा चैव विधास्यामि परमञ्च चिकित्सितम् ।
पुष्टौ च रोगनाशार्थं नराणां विहितं यथा ॥
तस्मात्त्यक्त भूर्लोकं पातालञ्च तथापरे ।
स्वर्गं चान्ये मदादेशाद्दयेन शान्तिर्भवेद् ध्रुवम् ॥
एवं विसृज्य तान् सर्व्वान् शालिहोत्रस्तुरङ्गमान् ।
चक्रे द्वादशसाहस्रीं तन्त्रे संहितां सुधीः ॥
ततः प्रभृति लोकेऽस्मिन् वाह्या जातास्तुरङ्गमाः ।
तच्चिकित्सितं तथा शालिहोत्रप्रभाषितम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते प्रश्नो नाम
प्रथमोऽध्यायः ॥

अथ जातिः ।

उत्तमा मध्यमा नीचाः कनीयांसस्तथापरे ।
चतुर्धा वाजिनो भूमौ जायन्ते देशसंश्रयात् ॥
ताजिकाः खुरशाणाश्च उत्तराश्चोत्तमा हयाः ।
गोजिकाणाश्च केकाणाः प्रौढाहाराश्च मध्यमाः ॥
भाण्डजाश्चोत्तमाशाश्च राजशूलाश्च मध्यमाः ।
गोजरा ग्रावराश्चैव सिन्धुपारा कनीयसः ॥
अन्यदेशोद्भवा ये च नीचनीचाश्च ते स्मृताः ।
वाजिनो जलजाः केचिद्वह्निजातास्तथापरे ॥
समीरप्रभवाश्चान्ये उलूकागजास्तथा ।
जलोद्भवा द्विजातीयाः क्षत्रिया वह्निसम्भवाः ॥
समीरप्रभवा वैश्या उलूकाश्च शूद्रजाः ।
विवेकी सत्त्वयो विप्रस्तेजस्वी क्षत्रियो बली ॥
दृष्टभावस्तथा वैश्यः शूद्रो निःसत्त्वकातरः ।
ब्राह्मणः सामवाही च भेरवाही च क्षत्रियः ॥
उपादानेन वैश्यः स्याच्छूद्रो दण्डेन ताड़ितः ।
पुष्पगन्धः सम्ना विप्रः क्षत्रियोऽगुरुगन्धकः ॥
घृतगन्धः सम्ना वैश्यो मीनामोदी च शूद्रकः ।
विप्राद्या वाजिनः सर्व्वे क्षत्रियो भूपतेः सदा ॥
द्वौ वैश्यस्यापि शूद्रस्य शूद्र एव सुखावहः ।
कश्चिच्छिन्दन्ति भूपानां सर्व्वेऽप्या वाहनोचिताः ॥
तन्त्रे भूमश्च यस्माच्छालिहोत्रेण निर्म्मिताः ।



ब्राह्मणाः क्षेमकार्य्येषु सिद्धिं गच्छन्ति वाजिनः ।
क्षत्रिया युद्धकार्य्येषु वैश्या वित्तार्ज्जने सदा ।
शूद्राश्चान्येषु कार्य्येषु ज्ञातव्या वाजिनः सदा ॥
आरोहेत सर्व्वकार्य्येषु यदीच्छेच्छाश्वतीं श्रियम् ।
सन्ति शुभा भवन्त्येते वाजिनो यस्य भूतले ॥
सन्त्येव निद्रावशगा निद्राभेदस्य सम्भवः ।
जायते सङ्गरे प्राप्ते कर्कशस्य च भक्षणे ॥
प्रबुद्धाः कथयन्त्यश्वाः शुभं वा यदि वाशुभम् ।
स्वस्वामिनो निजैश्चिह्नैस्तद्विज्ञेयं विचक्षणैः ॥
यः सन्नद्धो हयो रावमर्थमर्थं करोति च ।
खुराग्रेण लिखन् भूमिं स शंसति रणे जयम् ॥
यः करोत्यसकृन्मूत्रं पुरीषञ्चाशुभोदयम् ।
स शंसति पराभूतिं यत्रैव वर्त्तते हयः ॥
निरामिषं निशीथे यो जागर्त्ति नृपतेर्हयः ।
स शंसति दुरन्तस्य स्थिरस्यापि प्रयाणकम् ॥
यत्र व्याधिं विना वाजी ग्रासं त्यजति दुर्म्मनाः ।
अशुभातङ्कं कुरुते तत्र भर्त्तुरशोभनम् ॥
पुलकाङ्कितपुच्छा ये जायन्ते भूपतेर्हयाः ।
निरीक्षन्ते प्रभोर्नाशं ते वदन्ति निशागमे ॥
शरटं रक्तवेद्मानं प्रविशन्ते हयालये ।
यत्रेच्छेच्छाश्वतीं वृद्धिं तथाश्वैव तथात्मनः ॥
स्फुलिङ्गा यस्य दृश्यन्ते पुच्छदेशे च वह्निजाः ।
परचक्रागमाशंसी विज्ञेयो हयपण्डितैः ॥
अश्वशालां समासाद्य यदान्तर्मधुमक्षिकाः ।
मधुजालं प्रकुर्व्वन्ति तत्राश्वान् घ्नन्ति कृन्तनं ॥
तस्मात् सर्व्वप्रयत्नेन वाजिशालां प्ररक्षयेत् ।
उपायेभ्यश्च सर्व्वेभ्यो य इच्छेद्धितमात्मनः ॥
ब्राह्मणान् वाचयेत् स्वस्ति नित्यं वश्चिवक्षणान् ।
तिलहोमजपाः कार्य्या जपश्च शान्तये ॥
मन्दुरान्ते सदा धार्य्यो रक्तवक्त्रो महाकपिः ।
सर्व्वपापविनाशाय वाजिनाञ्च विवृद्धये ॥
मर्कटं रक्षयेद् यत्नात् प्रविशन्तं हयालये ।
यत्रेच्छेच्छाश्वतीं वृद्धिं तथाश्वैव तथात्मनः ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते लक्षणाधिकारे
द्वितीयोऽध्यायः ॥

अथ वर्णवर्णनम् ।

'वर्णाः सप्त भवन्तीह सर्व्वेषां वाजिनां ध्रुवम् ।
तानहं कीर्त्तयिष्यामि भेदैर्जातानेकधा ॥
सितो रक्तस्तथा पीतः सारङ्गः पिङ्ग एव च ।
नीलः कृष्णोऽथ सर्व्वेषां श्वेतः श्रेष्ठतमः स्मृतः ॥
पट्टार्हो भूपतेर्वाजी सर्व्वश्वेतः प्रशस्यते ।
तन्मात्रं यथा प्रोक्तास्तथा श्रेष्ठाः क्रमेण च ॥
श्वेतः प्रालेयसङ्काशो रक्तः कुङ्कुमसन्निभः ।
हरिद्रासदृशः पीतः सारङ्गः कर्व्वुरः स्मृतः ॥
पिङ्गः कपिलकाकारो नीलो दूर्व्वाग्रसन्निभः ।
कृष्णो जम्बूफलाकारः शास्त्रज्ञैः समुदाहृतः ॥
पीताभः श्वेतपादो यस्तथा स्यात् सितलोचनः ।
चक्राङ्कः स विज्ञेयो राजार्हो वाजिसत्तमः ॥
सर्व्वश्वेतो हयो यस्तु भवेत् कृष्णककर्णकः ।
स वाजी वाजिमेधार्हः श्यामकर्णः प्रकीर्त्तितः ॥
मुखे चन्द्रकसम्पीतो जम्बूफलसमाकृतिः ।
श्वेतपादः स विज्ञेयो मल्लिकाख्यः स पूजितः ॥

चत्वारोऽप्यसिता पादाः सन्त्यश्वेतस्य वाजिनः ।
भवन्ति यस्य स त्याज्यो यमदूतः सुदूरतः ॥
यस्य पादाः सिताः सर्व्वे पुच्छं वक्षो मुखं तथा ।
मूर्द्धजाश्च सिता यस्य तं विद्यादष्टमङ्गलम् ॥
भक्ष्याभं वाजिनं त्यजेत् सुदूरेण नराधिपः ।
यदि वाञ्छति कल्याणं वाञ्छन् श्रीसमुद्भवम् ॥
यस्य रोमविभेदेन जायन्ते रोमविन्दवः ।
पुष्पाख्यः स परित्याज्यः सर्व्ववाजिभयावहः ॥
यस्य पादाः सिताः सर्व्वे तथा वक्त्रञ्च मध्यतः ।
कल्याणपञ्चकः प्रोक्तः सर्व्वकल्याणकृच्च सः ॥
विमिश्रवर्णका सर्व्वे प्रशस्ता वाजिनः स्मृताः ।
कृष्णनीलस्य शिश्नमेकं मुक्त्वा सुदूरतः ॥
यस्योत्कृष्टतरो वर्णः वृद्धिं याति शनैः शनैः ।
नाशयति तथा नीचान् स करोति बहून् हयान् ॥
यस्याधमेन वर्णेन छाद्यते च प्रधानकः ।
विवृद्धिं गच्छता सोऽथ करोति हयसंक्षयम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते वर्णो नाम
तृतीयोऽध्यायः ॥

अथ आवर्त्ताः ।

"आवर्त्ता विंशतिः प्रोक्ताः शालिहोत्रमहात्मना ।
गात्रस्थानविभागेन तेषां व्यक्तिर्मयोच्यते ॥
ललाटे मस्तके चैव ग्रीवायां हृदये तथा ।
पादे पृष्ठे मणीबन्धे नाभिदेशे विशेषतः ॥
स्कन्धे पार्श्वे गले वक्त्रे कुक्षौ रन्ध्रे त्रिके तथा ।
आद्याद्वयोर्द्वयोरावर्त्ता विज्ञेया वाजिपण्डितैः ॥
नासिकाग्रे ललाटाग्रे शृङ्गे कण्ठे च मस्तके ।
आवर्त्तो जायते येषां ते धन्यास्तुरगोत्तमाः ॥
हृदि स्कन्धे गले चैव कटिदेशे तथैव च ।
नाभौ कुक्षौ च पार्श्वाग्रे मध्यमास्ते प्रकीर्त्तिताः ॥
ललाटे यस्य चावर्त्तौ द्वितीयस्य स लिङ्गकः ।
मस्तके च तृतीयश्च पृथक्कुक्षि स उत्तमः ॥
पृष्ठवंशे तथावर्त्तो यस्यैकः स प्रजायते ।
स करोत्यश्वसङ्घातान् स्वामिनः सूर्य्यसञ्ज्ञकः ॥
कक्षायां जानुमेढ्रे च त्रिकलौ पुच्छसन्निधौ ।
पुच्छे गुह्ये बलावर्त्तावावर्त्ता अधमा हये ॥
त्रयो यस्य ललाटस्था आवर्त्ता अधरोत्तराः ।
त्रिकूटः स परिज्ञेयो वाजिवृद्धिकरः परः ॥
एवमेव प्रकारेण त्रयो ग्रीवां समाश्रिताः ।
जयावर्त्तः स वाजीशो जायते भूपमन्दिरे ॥
ललाटे युगलावर्त्तौ चन्द्रार्कौ सम्प्रकीर्त्तितौ ।
वाजिनो यदि तौ स्यातां राष्ट्रवृद्धिकरौ परौ ॥
उपर्य्युपरि यस्य स्युरावर्त्ताः स्पर्शके त्रयः ।
निःश्रेणिः खलु विज्ञेयो राष्ट्रवृद्धिकरः परः ॥
एकोऽथवा कपोलस्थो यस्यावर्त्तः प्रदृश्यते ।
वर्त्तमानः स विज्ञेयः स इच्छेत् स्वामिनाशनम् ॥
कपोलाभ्यान्तथावर्त्तौ विद्येते वाजिनो यदि ।
तावश्विनाविति प्रोक्तौ युद्धकाले जयप्रदौ ॥
गण्डावर्त्तौ भवेद्यस्य वाजिनो दक्षिणाश्रयः ।
स करोति महासौख्यं स्वामिनः शिवसञ्ज्ञकः ॥
तद्वामाश्रयः क्रूरः प्रकरोति धनक्षयम् ।
इन्द्राख्यावुभौ शस्तौ नृपराज्यविवृद्धिदौ ।
कर्णमूले यदावर्त्तस्तन्मध्ये च तथापरः ।

विजयाख्यावुभौ ज्ञेयौ युद्धकाले जयप्रदौ ॥
नासामध्ये यदावर्त्त एको वा यदि वा त्रयः ।
चक्रवर्त्ती स विज्ञेयो वाजी भूपालपूजितः ॥
कण्ठे यस्य महावर्त्त एकोऽश्वस्य प्रजायते ।
चिन्तामणिः स विज्ञेयश्चिन्तितार्थविवृद्धिदः ॥
स्कन्धे पार्श्वे यदावर्त्तः स भवेत् पद्मलक्षणः ।
करोति विधिवत् पद्मी स्वामिनः सततं सुखम् ॥
शुक्राख्यौ तालुवान्तस्थावावर्त्तौ कीर्त्तिवृद्धिदौ ।
हयस्य स्वामियुक्तस्य सदैव सुसुखावहौ ॥
एकावर्त्तो भवेद्यस्य कक्षान्ते वाजिनो यदा ।
स रणे मृत्युमाप्नोति द्वौ च स्वामिविनाशनौ ॥
जानुदेशे यदावर्त्तो वाजिनः संप्रदृश्यते ।
प्रवासं सततं ब्रूते स्वभर्त्तुः क्लेशसंयुतम् ॥
वाजी मेढ्रतलावर्त्तो वर्जनीयो गृहीशुजाम् ।
स करोति हरेर्नाशं परचारसमुद्भवम् ॥
त्रिवलिस्थो यदावर्त्तस्त्रिवर्गस्य प्रणाशकः ।
वाजिनस्ते परिज्ञेयाः स्त्रीपार्श्वस्था भयप्रदाः ॥
पुच्छदेशे यदावर्त्तो वाजिनः संप्रदृश्यते ।
धूमकेतुरिति ख्यातः स त्याज्यो दूरतो नृपैः ॥
गुह्ये पुच्छे वलौ यस्य भवन्त्यावर्त्तकास्त्रयः ।
स कृतान्तस्वरूपेण वर्जनीयस्तुरङ्गमः ॥
अथ ऊर्द्ध्वं यदा वाजी सम्पुटं न स्पृशेत् क्वचित् ।
यमदूतः स विज्ञेयो वर्जनीयः प्रयत्नतः ॥
हीनदन्तोऽधिदन्तश्च कराली कृष्णतालुकः ।
मुशली च तथा शृङ्गी षड़ेते स्वामिघातकाः ॥
एकाण्डजातश्चैकाण्डो हीनाङ्गोऽप्यधिकाङ्गकः ।
परित्याज्यः स वाञ्छद्भिरन्विष्य परमं यशः ॥
घण्टी वदनकी वाली शृङ्गी चैव चतुर्थकः ।
वर्जनीयः प्रयत्नेन सर्व्वे ते पापकृत्तमाः ॥
घण्टी च स्वामिनं हन्ति वदनी धनसंचयम् ।
अन्तःपुरं तथा वाली शृङ्गी राष्ट्रविनाशनः ॥
षट्पदाभो भवेद्यश्च कृष्णतालुर्न दुष्यति ।
शङ्खपादसखो यस्तु आवर्त्तैः कुत्सितैरपि ।
न दुष्यति सदावर्त्तः शालिहोत्रमतं यथा ॥

इति श्रीनकुलविरचितेऽश्वचिकित्सिते
आवर्त्ताध्यायश्चतुर्थः ॥

अथ दन्ताः ।

दन्तोद्भेदं प्रवक्ष्यामि वाजिनामायुलक्षणम् ।
येन विज्ञातमात्रेण आयुर्ज्ञानं प्रचक्षते ॥
अश्वस्तु तनुभिर्दन्तैः क्षीरदन्त इति स्मृतः ।
तथा षोड़शभिः कोणे शस्तैर्द्वादशमासिकः ॥
त्रिंशन्मासोद्भवाः सर्व्वे अखण्डाः परिकीर्त्तिताः ।
द्वौ स्यातां द्वौ च न स्यातां सर्व्वोपरि यथाक्रमम् ॥
चतुर्भिर्वत्सरैर्दन्ताः कालिकाश्च भवन्ति च ।
तथान्यः सप्तमे वर्षे चतुर्थः कालिको भवेत् ॥
अष्टमे वत्सरे प्राप्ते प्राप्ताः स्युः सार्व्वकालिकाः ।
नवमे त्वथवा रेखा पीतत्वं शंसयन्ति च ॥
तथाप्येकादशे वर्षे तावत् पीतत्वमागताः ।
तिष्ठन्ति दशनास्तेषां वाजिनामप्यसंशयम् ॥
ततः श्वेताः प्रदृश्यन्ते यावद्वर्षत्रयं पुनः ।
ततः काचप्रभाः सम्यक् यावत् संवत्सरास्त्रयः ॥
ततः सप्तदशादूर्द्ध्वं यावद्वर्षाणि विंशतिः ।
मक्षिकाभारदास्तेषां यावद्वर्षत्रयं पुनः ॥
तस्मादुदूखलं प्राप्तास्तावद्वर्षत्रयं पुनः ।
प्रकम्पश्च समागम्य पश्चात् पातः समात्रयम् ॥
द्वात्रिंशद्वत्सरैरेव वाजी निर्व्वाणमाप्नुयात् ।
दंष्ट्राचतुष्टयं श्वेतं क्रमेण परमायुषि ॥
अश्वानामेव सर्व्वेषां दन्ता द्वादश कीर्त्तिताः ।
कालिका हारिणी शुक्ला काचा वाप्यथ मक्षिका ॥
शङ्खोदूखलकश्चैव दन्तानाञ्चलनं तथा ।
ततस्तु पतनं विद्यादेष वज्ञनसंग्रहः ॥
चतुर्विंशतयो दंष्ट्राः शालिहोत्रमतं तथा ।
एवं दन्तविशेषेण सर्व्वेषामिह वाजिनाम् ।
विज्ञेया चायुषःसंख्या वाजिपोषणतत्परैः ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते दन्तोद्भेदो
नाम पञ्चमोऽध्यायः ॥

अथ अवयवप्रमाणम् ।

दीर्घसूक्ष्मविमांसास्या ये भवन्ति तुरङ्गमाः ।
ते शस्ताः पार्थिवेन्द्रस्य यानवाहनकर्म्मणि ॥
स्कन्धमभ्युन्नतं दीर्घं वक्रग्रीवं विशेषतः ।
चमरालङ्कृतं सम्यक् स्तोकवालसमन्वितम् ॥
येषां पृष्ठं सुवंशं स्याद्विपुलं व्रणवर्जितम् ।
किञ्चिन्मध्ये भवेन्निम्नं राजार्हास्ते तुरङ्गमाः ॥
स्निग्धरोमा सुवृत्ता च सुस्थूला विपुला कटी ।
ग्रथिताः सुदृढ़ा रम्या भुजा मांसप्रपूरिताः ॥
पादा निर्मांसला वक्राश्चक्राकारखुरान्विताः ।
अप्रमाणं तथा वक्षः कर्णौ लघुतरौ स्मृतौ ॥
पार्श्वौ तनुतरौ शस्तौ सुरक्तस्निग्धतालुकम् ।
दन्ताश्च शिखराकारा विपुला चन्द्रवर्चसः ॥
सप्तविंशप्रमाणेन मुखमश्वस्य शस्यते ।
कर्णौ षड़ङ्गुलौ प्रोक्तौ तालुकं चतुरङ्गुलम् ॥
चत्वारिंशच्च सप्ताढ्याः स्कन्धाः सम्यक् प्रकी-
र्त्तिताः ।
पृष्ठवंशश्चतुर्व्विंशः सप्तविंशा तथा कटी ॥
अतिसूक्ष्मं तथा निम्नं पुच्छं हस्तद्वयायतम् ।
लिङ्गं हस्तप्रमाणञ्च तथाण्डौ चतुरङ्गुलौ ॥
मार्गस्थानं चतुर्व्विंशं हृदयं षोड़शाङ्गुलम् ।
कटिकचान्तरश्चोक्तं चत्वारिंशत् प्रमाणतः ॥
मणिबन्धद्वयं चैव खुराश्च चतुरङ्गुलाः ।
अशीत्यङ्गुल उत्सेधो दैर्घ्यञ्च द्व्यधिकं शतम् ।
एवं क्रमेण गात्रस्य प्रमाणं वाजिनां मतम् ॥

दीर्घाणि चत्वारि तथोन्नतानि
चत्वारि रक्तानि च सूक्ष्मकाणि ।
ह्रस्वानि चत्वार्य्यथ चायतानि
भूयश्च चत्वार्य्यथ नम्रकाणि ॥

द्वात्रिंशत् क्रमशोऽप्याहुर्लक्षणानि मुनीश्वराः ।
तान्यहं कीर्त्तयिष्यामि वाजिनाञ्च पृथक्
पृथक् ॥

आस्यं मुणौ केशहकाटिकाञ्च
दीर्घं चतुष्कं तुरगस्य शस्तम् ।
तथोन्नते शाणपुटे ललाटे
शफाश्च तज्ज्ञास्वरणौ वदन्ति ॥
ओष्ठौ च जिह्वाप्यथ तालुकञ्च
मेढ्रं सुरक्तं शुभदं हयस्य ।
लघूनि वन्धाम्बरणेषु कोष्ठं
श्रोत्राणि सर्व्वाणि तथैव पुच्छम् ॥
कर्णान्तरं कर्णसमन्वितञ्च
वंशं तथा ह्रस्वतरं प्रशस्तम् ।
वक्रं मुखं कन्धराजानुनी च
पार्श्वञ्च सप्तैः शुभदं प्रदिष्टम् ॥
कक्षान्तरं चोदरमध्यमञ्च
निम्ना कटी तानि सजानुकानि ।
वक्षःशफोरूजघनस्थलञ्च
चतुष्कमेतत् पृथुलं प्रदिष्टम् ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते सर्व्वावयव-
प्रमाणो नाम षष्ठोऽध्यायः ॥

अथ वेगः ।

गुणानामिह सर्व्वेषां गुणो वेगमयोऽधिकः ।
अश्वानां शस्यते तज्ज्ञैरश्वज्ञानविचक्षणैः ॥
संवाहनविधानेन प्रकाशं यान्त्यसंशयम् ।
तस्मात् सर्व्वप्रयत्नेन वेगो ज्ञेयश्च वाजिनाम् ॥
अवाहिता विनश्यन्ति विनश्यन्त्यतिवाहिताः ।
अश्वानां वाहनं पथ्यं सानुरागश्च मोक्षणम् ॥
अधमा मध्यमास्ते स्युर्मध्यमाश्च तथोत्तमाः ।
उत्तमाश्चोत्तमा भूयो वाह्यमानास्तुरङ्गमाः ॥
रूढ़मश्वविदां श्रेष्ठं रूढ़े सर्व्वं प्रतिष्ठितम् ।
रूढ़ेन तु विहीनस्य लक्षणं चाप्यलक्षणम् ॥
रूपावर्त्तगतिच्छायासत्ववर्णवयोबलम् ।
जवहीनस्य वाहस्य सर्व्वमेव निरर्थकम् ॥
गतेर्धन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः ।
स्वराद्धन्यतरं सत्वं सर्व्वं सत्वे प्रतिष्ठितम् ॥
लघुत्वं मातृदोषेण पितृदोषेण जाड्यता ।
दौर्ब्बल्यं स्वामिदोषेण स्वदोषो नास्ति वाजिनाम् ॥

जवो हि सप्तेः प्रथमं विभूषणं
त्रपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य वेदोऽथ मुनेरपि क्षमा
पराक्रमः शस्त्रबलोपजीविनः ॥

आकर्षन्निव गां वमन्निव खुरौ पश्चार्द्धमुद्यन्निव
स्वोकुर्व्वन्निव खं पिबन्निव दिशो वायुं समश्नन्निव ।
साङ्गारप्रकरान् स्पृशन्निव महीं छायाममर्षन्निव
चञ्चच्चामरवीज्यमानवदनः श्रीमान् हयो धावति ॥
अलक्षितगतागतैर्म्मृगदृशां कटाक्षैरिव
क्षणानुनयशीतलैः प्रलयकेलिकोपैरिव ।
सुवृत्तमहणोत्तरैर्म्मृगदृशामुरोजैरिव
त्वदीयतुरगैरलं धरणिचक्रमाक्रम्यते ॥
येषां दीपशिखोपमानि नयनान्युद्भावितः सन्निव
ग्रीवा क्रौञ्चनिभा विभाति च समा पादाश्च
मुक्तोपमाः ॥
वेगो वायुरिवाथ वानरसमः स्याद्वारणप्रेङ्खितं
शङ्खक्रौञ्चमृगेन्द्रदुन्दुभिघनध्वानेभतुल्यस्वनः ॥
वक्षो यो हरिणाधिपप्रतिनिभो याघ्रोपमो
बाहुभिः
आवर्त्तैरशुभैः प्रधानकुलजाः सान्द्रघवर्ण-
प्रभाः ।
उच्चाक्षाः प्रियदर्शनाश्च सुभगाः श्वासैः
सुगन्धैश्च ये

धावन्ति घातैश्च न चोद्विजन्ते
भयावहास्ते समरे नृपाणाम् ॥
शीकं शीलं भयं लज्जामालस्यं चैवमादिषु ।
सुकुलं तं विजानीयादलं पर्य्याणधारणे ॥
स्थाणुकण्टकवृचैश्च मुधासदिरकण्टकैः ।
स्वामिघाताय चाहत्ते तेषां रूपमिदं शृणु ॥
वानरोलूकमार्जारतरक्षुगवलोचनाः ।
गतिर्वा वसुरैस्तुल्या स्थूलमेढ्रशिरान्विताः ॥
लम्बौष्ठकर्णनासाश्च क्षतदाहीनाधिकाङ्किताः ।
विच्छिन्नग्रीवगण्डा ये भ्रुकुटीचित्रमेहनाः ॥
एते दोषास्तथान्येऽपि सुकुलाश्वसमुद्भवाः ।
खलानामिह राजेन्द्र ! वक्तुं शक्या न मादृशैः ॥
लक्ष्यं प्रधानमित्येके चान्ये लक्षणमाश्रिताः ।
लक्षणलक्ष्यमेतेषां तेनेदं दुष्करं विदुः ॥
अथापि रतिसंक्षेपादतियामश्च विस्तरात् ।
मुनीनामेकवाक्यत्वाद् भूयसः स्थितिदुष्कराः ॥
सत्ववर्णगतिच्छायास्वरस्थानगतिः कुलम् ।
पुष्पं पुण्ड्रकनामानि दीर्घं वा जवलक्षणम् ॥
एवं लक्षणसंयुक्तं दृश्यते शूररक्षणे ।
लक्षणेन विहीना ये निर्दोषाःस्युः प्रधाविताः ॥
हयरोहस्य का चिन्ता लक्षणैः शुभनिन्दितैः ।
तेनात्र न कृतोऽस्माभिर्हयलक्षणविस्तरः ॥
हयवाहनविज्ञानं कौतुकाहितहृदयः ।
अनायासेन गृह्णन्ति परं दृष्ट्वा इमे जनाः ॥
चलासनं कथा रागाः पाणिघातप्रतोदनम् ।
मदप्रघातसंज्ञानि दोषौ यैरुपजायते ॥
कामात् कोपाद्भयान्मोहाद्दर्पाच्चैव मदाश्रयात् ।
मर्य्यादारोहदोषाच्च दुष्यन्त्यश्वा निसर्गतः ॥

श्रीयुक्तसामन्तनरेन्द्रवन्दितं
रणे हयारोहवराभिनन्दितम् ।
धर्मार्थकामादियशःप्रधान-
मित्थं कृतं वाहनशास्त्रविस्तरम् ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते वाहनाध्यायो नवमः ॥

अथ धातुपरीक्षा ।

अथातः संप्रवक्ष्यामि धातूनां लक्षणं परम् ।
येन विज्ञानमात्रेण ज्ञायन्ते रोगसम्भवाः ॥
ततः शुद्धशरीरोत्थरक्तदोषानवाप्नुयात् ।
रक्तदोषात्तदा वाजी प्राप्नोत्येव महामयान् ।
तस्मात् सर्व्वप्रयत्नेन रक्तं ज्ञेयं विचक्षणैः ।
आषाढसमये प्राप्ते शिरामोक्षेण कृत्स्नशः ॥
तेन संशोध्यते रक्तं वाजिनां दोषसम्भवम् ।
ततः शुद्धशरीरोऽथ पिण्याकैश्च बलीकृतः ॥
तावच्च शष्पमासाद्य वज्रवत् सुदृढो भवेत् ।
यदि रक्ताधिको वाजी शस्यमश्नाति कर्हिचित् ॥
रक्तात् सञ्जायते पित्तं ततो नाशमवाप्नुयात् ।
रक्ताधिकश्चापुष्टः स्नेहाद्यैः शस्यमत्ति चेत् ॥
संप्राप्य श्लेष्मरिक्तत्वं नाशमवाप्नुयात् ।
हीनरक्तो यदा शस्यं रुक्षोऽश्नाति तुरङ्गमः ॥
तदा वायुं परं प्राप्य सद्यो नाशमवाप्नुयात् ।
तवेदं लक्षणं प्रोक्तं रक्तकोपससुद्भवम् ॥
धातूनामपि सर्व्वेषां ज्ञेयमिदं विचक्षणैः ।
पित्तरक्तप्रकोपेण यदा संपीड्यते हयः ॥
तदा कण्डूनिभामाद्य कषती सततं वपुः ।
छायां वाञ्छति यत्नेन विशेषेण जलाश्रयम् ॥
मुहुर्वाञ्छति पानीयमाहारञ्च विशेषतः ।
एवं वातोत्थरक्तेन ज्ञात्वाश्वस्योडितं ततः ॥
शिरामोक्षं विधायैव दद्यात् सकाटुकं गुडम् ।
ततः शुद्धिमवाप्नोति नीरोगः संप्रपद्यते ॥
पित्तासृग्दूषितो वाजी यदि चाश्रुणि मुञ्चति ।
नेत्रान्ते पाण्डुरत्वञ्च सद्यो मृत्युमवाप्नुयात् ॥
नेत्रयोर्लक्षणं प्रोक्तं पित्तरक्तसमुद्भवम् ।
श्लेष्मरक्तप्रकोपेण यदा सम्पीड्यते हयः ॥
अधोमुखो भवेन्नित्यं कासते च मुहुर्मुहुः ।
आहारं न च गृह्णाति नात्माहं कुरुते क्वचित् ॥
न जिघ्रति कशाघातं न च पार्ष्णिं न चासनम् ।
नासाग्रेण क्षिपेत्तोयं वह्निर्धर्मांश्च वाञ्छति ॥
तस्यापि शोधयित्वासृग् दद्यान्मुण्ठायुतं गुडम् ।
सर्व्वं रक्तं ततः शुद्धं निःशेषं समवाप्नुयात् ॥
वाजिनः श्लेष्मरक्ताभ्यां दूषितस्य सदा भवेत् ।
नेत्रान्ते बिन्दुकाकारकण्डूस्तस्य तथोदरे ॥
तदा मृत्युमवाप्नोति पञ्चमासाभ्यन्तरे ध्रुवम् ॥

शुण्ठ्यागला गोक्षुरकं घनञ्च
श्यामानिचाछिन्नयुता च यष्टिः ।
कफप्रणाशाय विनिर्मितोऽयं
पिण्डः पलिप्रश्च कफापहश्च ॥

नोचेदन्नानि शुण्ठ्याढ्यं सैन्धवं नस्यमार्गतः ।
वायुरक्तप्रकोपेण पीडितस्तु तुरङ्गमः ॥
कुक्षिद्वयं हयस्तीव्रं मुहुः श्वासं प्रमुञ्चति ॥
नैकत्र मन्यते स्थातुं दूयते च निरर्गलम् ।
एवं वातोद्भवं ज्ञात्वा रक्तान्दिष्टे हयस्य च ॥
शोधयित्वाथ सन्दद्याच्छागघृतमनल्पकम् ।
ततः शुद्धिमवाप्नोति परां पुष्टिञ्च गच्छति ॥
उत्साहं कुरुते मार्गे सर्व्वदोषविवर्ज्जितः ।
वातरक्तप्रकोपेण लोचनान्ते हयस्य च ॥
यदा स्यातां सिते रक्ते काशः कण्डूस्तथानने ।
तदा तस्य भवेन्मृत्युर्यदि नाश्नाति चामिषम् ॥
अथसकाश युतन्दभा माहिषेण निशागमे ।
सन्निपातेऽथ रक्तेन यदा सम्पीड्यते हयः ॥
यदा वेपथुमाप्नोति काशते च निरर्गलम् ।
निद्रालस्याग्निमन्दत्वं वक्त्रौ मलनिबन्धनम् ॥
कर्णयोः पातनञ्चैव वक्त्रात् लालाविमोचनम् ।
तत्रापि शोधयेद्रक्तं ततो लङ्घनमर्हति ॥
यावद्दोषस्य निर्णाशं स्त्रोतोदकशताशनः ।
क्वचिदुष्णं क्वचिच्छीतं क्वचिद्धयनसंयुतम् ॥
प्रदेयं युक्तितत्वज्ञैर्वारि वार्य्यं न कुत्रचित् ।
सपथ्या चाम्टता चैव कटुका च वचा तथा ॥
शामयेत्तत्क्षणादेव त्रिधातुकुपितं ज्वरम् ।
शिरीषं श्रीफलञ्चैव वेतसञ्चैव वह्निभाक् ॥
मन्दाग्नित्वं सदोषाणां कुरुते भस्मसाद्दृढतनुं ।
मधुकं मधुशालञ्च माधुर्य्यं कुलिकान्वितम् ॥
शिरीषं चूनकं राचां धाययित्वा त्रिभागतः ।
यश्चैतत् सन्निपाताय वाजिनः संप्रदीयते ॥
तस्य तन्नाशमायाति तमः सूर्य्योदये यथा ।
स्वस्थस्यापि हि नेत्रान्ते स्यातां नीले च वाजिनः ॥
गन्धश्च मद्गुः जीवना तदा मृत्युर्द्विमासिकः ।
नीले पीतेऽथ नेत्रान्ते स्यातां चेद्वाजिनः क्वचित् ।
स निर्वाणमवाप्नोति त्रिभिर्मासैरसंशयम् ॥
यस्य नेत्रान्तरे रेखा पङ्कवर्णा प्रजायते ।
विशेषात् स्वरभेदः स्यात्तस्यायुः पाञ्चमासिकम् ॥
जिह्वायां जायते बिन्दुरकस्माद् यस्य वाजिनः ।
कृष्णस्तु जीवते मासं स वाजी नात्र संशयः ॥
पीतो मासद्वयेनैव सप्तैर्वा प्रयच्छति ।
त्रिभिर्मासैस्तथा रक्तश्चतुर्भिश्च विचित्रितः ॥
पञ्चभिर्नीलवर्णश्च षड्भिर्लक्ष्मसमाकृतिः ।
सप्तभिः पाटलाकारश्चन्यकाभस्तथाष्टभिः ॥
नवभिश्च हरिद्राभो दशभिर्जन्तुकोपमः ।
एकादशभिर्दूर्व्वाभो वत्सरेण हिमद्युतिः ॥
यस्य श्वासो भवेदुष्णः शरीरं पुलकाङ्कितम् ।
जिह्वा हिमकराकारा मासषट्कं स जीवति ॥
ग्रीवाग्रे पिडिका यस्य जायते च तथाधरे ।
मूत्रं करोति रक्ताढ्यं मासषट्कं स जीवति ॥
वर्णः श्वेतो यदा यस्य नेत्रयोश्च प्रजायते ॥
दशमासान् समासाद्य पित्तार्त्तो न न जीवति ।
यस्य नीलप्रभे स्यातां नेत्रे वातार्द्दितस्य तु ।
रात्रित्रयस्य स्पर्शेन यः स्थितः स न जीवति ॥
श्लेष्मयुक्तस्य वा रक्ते यदि स्यातां विलोचने ।
वातान्धः सुरातुल्यो दश मासान् न जीवति ॥
यस्य नेत्रे हरिद्राभे स्यातां पित्तार्द्दितस्य च ।
तस्यायुः सप्तमासाख्यं मुनिभिः परिकीर्त्तितम् ॥
वह्निवर्णे घने नेत्रे स्यातां धातुसमागमे ।
तस्य सप्तभिर्मृत्युः समरानादसंशयम् ॥
यस्यैकं लोचनं नीलं द्वितीयं रक्तसन्निभम् ।
दृश्यते च च विज्ञेयः पित्तार्त्तो मासजीवकः ॥
यस्य पित्तप्रसंक्तस्य काये नीरदवर्त्तिनि ।
हयस्य जीवितं तावद्दिनानि दश पञ्च च ॥
एवं रक्तविकाराणां ज्ञात्वा धातुं तुरङ्गमे ।
ततः प्रतिक्रिया कार्य्या उक्ता या कीर्त्तिता परा ॥
भयाद्भीतपानीयशीतविशेषितस्य च ।
आर्त्तोऽपि ताडितोऽत्यर्थं तिर्य्यग्विद्धो यदापि वा ॥
श्रमाज्ज्वराच्च वन्धाद्वा गात्रे वा विषमस्थिते ।
क्षीणशोणितमांसस्य शिरावेधः प्रशस्यते ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते धातुपरीक्षाध्यायो दशमः ॥

अथ ऋतुचर्य्या ।

द्वासप्ततिसहस्राणि नाडीनां हि भवन्ति च ।
वाजिनामिह सर्व्वेषां वायुरक्तं व्यवस्थितम् ॥
तासां निर्म्मोचनार्थाय शाराण्यष्टौ वदाम्यहम् ।
यैर्याति कुत्सितं रक्तं सर्व्वदेहसमुद्भवम् ॥
कण्ठे वक्षसि तालौ च नासयोश्च मुखे तथा ।
अण्डयोरथ पादेषु पार्श्वयोरुभयोरपि ॥
कालं बलञ्च विज्ञाय वाजिनां भिषगुत्तमः ।
शिरामोक्षं प्रकुर्वीत स्थानेष्वेतेषु पण्डितः ॥
अन्ये सप्तदश प्राहुः शिराद्वाराणि वाजिनः ।
विकारयुक्तं यद्रक्तं सुस्वल्पमपि वर्जयेत् ॥
एवं शरदि यः सम्यक् पुष्टिं नयति वाजिनाम् ।

सन्निपाते सपित्तेऽयं नस्यः स्याज्जीवरक्षकः ॥
अभया पुत्रिणी धात्री एला लाक्षा शतावरी ।
सन्निपातेऽनिलाधिक्ये नस्योऽयं क्षेमकारकः ॥
मरिचं पिप्पलीमूलं वचा भार्ग्गिकाभया ।
सन्निपाते कफाधिक्ये नस्यं सर्पिः सुखप्रदम् ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते नस्याधिकाराध्यायो द्वादशः ॥

अथ पिण्डः ।

“कटुका च जयन्ती च भामरी सुरसा घनाः ।
पञ्चामृतमयः पिण्डो वाजिनामयमिष्कृत ॥
एला शतघ्नी सुरसा काकजङ्घा शतावरी ।
माक्षिकं ससितं पिण्डः पित्तयुक्ते हि वाजिनि ॥
माक्षिकं सैन्धवं मुस्ता गोमूत्रञ्च हरीतकी ।
समभागेन पिण्डोऽयमुक्तो वह्निप्रदीपकः ॥
कंकोलं केतकी द्राक्षा शर्करा मधुयष्टिका ।
दत्तो घृतयुतः पिण्डः पुष्टिं नयति वाजिनः ।
मत्स्यमांसेन संयुक्तं यावचूर्णं घृतप्लुतम् ।
बलहीनस्य वाहस्य पिण्डोऽयं बलवर्द्धनः ॥
एला मद्यं दधि क्षौद्रं भक्षयंस्तुरगो भवेत् ।
अनिरुद्धोऽपि रुग्णोऽपि यथा षट्सप्तवार्षिकः ॥
मेथिका धातकी काली सारणी बीजपूरकः ।
पिण्डो दत्तो वराश्वानां तेजोवृद्धिकरः स्मृतः ॥
कटुका मद्यसंमिश्रा धात्री लोध्रगुडान्विता ।
दत्ता पिण्डविधानेन वाजिनां सुखवृद्धिदा ॥
त्रिफला कटुका मुस्ता विड़ङ्गानि च चित्रकम् ।
सदालस्यसमेतानां वाजिनां पिण्ड आर्त्तिहृत् ॥
वचा विदलिताः स्निग्धाः सघृताः क्षारभाविताः ।
पिण्डैर्दत्ताः प्रकुर्व्वन्ति वाजिनां व्याधिनाशनम् ॥
सैन्धवं नागरं श्यामा गुडूची सितसर्षपाः ।
अम्लवेतससम्पानां पिण्डोऽयं शूलनाशनः ॥
पिप्पली पिप्पलीमूलं कटुका सहदेविका ।
दूर्व्वापल्लवसंमिश्रः पिण्डोऽयं क्षीहनाशकः ॥
केशरं श्रीफलं तालं माक्षिकं गिरिकर्णिका ।
पिण्डोऽयं श्रमने शस्तो वाजिनां सुगतिप्रदः ॥
वचा लोध्रं सकर्पूरं गुहा श्यामा गुडं मधु ।
समांशकेन पिण्डोऽयं करोति लघुतां हये ॥
मद्यं मरिचसंयुक्तं लशुनं नागकेशरम् ।
द्विगुणं मेषमांसञ्च पिण्डो दत्तो जयेच्छ्रमम् ॥
जम्बीरं फलिनीपत्रं त्वचा किञ्जल्कमेव च ।
जातशोणितवाहानां पिण्डोऽयं रक्तनाशनः ॥
तमालं पुष्करं लोध्रमपामार्गं सतिन्दुकम् ।
पयसा पिण्डमेतद्धि वातकोपप्रणाशनम् ॥
आरनालं प्रविष्टा च पथ्यां नेपालिकाफलम् ।
पिण्डे दत्ते हये दध्ना निघ्नन्त्याशु विजृम्भितम् ॥
सुङ्गपूगं वचामिश्रं तथा सर्व्वरसान्वितम् ।
पिण्डे दत्ते निघ्नन्त्याशु कृमिसंघं व्रणोद्भवम् ॥
स्नुहीक्षीरं सकर्पूरं कूपोदकविभावितम् ।
पिण्डोऽयं हन्ति मध्यस्थान् रोगान् सर्व्वान्
कृमिव्रणान् ॥
सिता दुग्धं सकर्पूरमेलया पत्रसंयुतम् ।
अमिदाहार्त्तियुक्तानां पिण्डोऽयं वाजिनां स्मृतः ॥
शीघ्रासन्नप्रतप्तानामारनालं मधिप्लुतम् ।



सक्तदिच्छन्ति पिण्डेन वाजिनां सुखकारकम् ॥
वृष्टिवातार्द्दितानाञ्च वाजिनां पुष्टिरुन्मतः ।
पिण्डः कृतः सतैलेन लशुनेन यवेन च ॥
मद्यघृतं सकर्पूरं शर्करा दुग्धमेव च ।
कफनाशकरः प्रोक्तः पिण्डोऽयं सुखदः स्मृतः ॥
रोचना च वरी धात्री तथा स्याद्बीजपूरकः ।
गुल्मं प्रशमयन्त्याशु वाजिनां हृदयोद्भवम् ॥
सहदेवी वचा कुष्ठं वरुणा चेन्द्रवारुणी ।
अतिश्वासं हरन्त्येते वाजिनां मधुना सह ॥
उदुम्बरफलं मांसं शौकरं माहिषं दधि ।
हयस्य चातिवृद्धस्य करोति परमं सुखम् ॥
विभीतकं प्रियङ्गुश्च सर्ज्जिका लवणं तथा ।
कासदोषोपशमनः पिण्डः सर्पिः सुखप्रदः ॥
तक्रं कर्पूरचूर्णञ्च शिवं सौवर्च्चलान्वितम् ।
पिण्डोऽयं वस्तिसंरोधे वाजिनः संप्रकीर्त्तितः ॥
सौवर्च्चलं हरिद्रा च पिप्पली चेन्द्रवारुणी ।
मूत्रकृच्छ्रे परीक्षन्ति पिण्डोऽयं तुरगस्य हि ॥
पिण्डीरसक्तवः क्षौद्रं भल्लातकफलं युगम् ।
रक्तमूत्रे तु पिण्डोऽयं वाजिनां रक्तनाशनः ॥
अभया यष्टिका श्यामा देवदारु सगन्धकम् ।
पुरीषे रक्तसंमिश्रे सदा शंसति वाजिनः ॥
पटोलं धातकी मुस्ता यष्टिका गिरिकर्णिका ।
रक्ताधिके क्षतः पिण्डः करोति रुधिरक्षयम् ॥
हरिद्राद्वयसंयुक्तं गन्धकं कटुतैलकम् ।
पिण्डकं स्रुतियुक्तानां सदाश्वानां प्रशस्यते ॥
अतसीपत्रकं निम्बं न्यग्रोधकलिकान्वितम् ।
अतीसारे सुशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
व्रणैः कृमिभिरत्यर्थं सदा वाजी प्रपीड्यते ।
तदा पिण्डः प्रदातव्यः स्थूलैरण्डदलैरलम् ॥
कर्पूरशर्करालोध्रं माक्षिकं त्रिफलान्वितम् ।
तुरङ्गिण्याः प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
पत्रकं सिन्धुवारञ्च भामरं चक्रकिंशुकम् ।
मांसवृद्धौ प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
सैन्धवं चूलिकाक्षारं विड़ङ्गानि मधूनि च ।
शस्त्रपीड़ाभिभूतस्य पिण्डोऽश्वस्य प्रशस्यते ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते पिण्डाध्यायस्त्रयोदशः ॥

अथ घृतविधानम् ।

“शिलाजतु विशाला च पद्मकं नागकेशरम् ।
लाक्षा पद्मकाष्ठलञ्च निम्बद्वयसमन्वितम् ॥
घृतं माक्षिकसंयुक्तं सप्तविंशतिकं विदुः ।
अष्टांशं तु समादाय सुरामांसघृतस्य च ॥
पलमात्राणि सर्व्वाणि पूर्व्वद्रव्याणि निःक्षिपेत् ।
तेषां दानेन तत्सर्पिर्जायते सर्व्ववाजिनाम् ॥
बलपुष्टिकरं नित्यं सर्व्ववातविनाशनम् ।
सर्व्वरोगप्रशमनं कायाग्नेश्च प्रदीपनम् ॥
ओजस्करं यथानाशं शीघ्रशोषप्रणाशनम् ।
धातकी केशरं कुष्ठं कुसुम्भं कुङ्कुमं नलम् ॥
दाड़िमं सितलोध्रञ्च पलमात्राणि निःक्षिपेत् ।
घृतञ्च पाचयेत् मानादभिघातान्वितो हयः ॥
जायते सर्व्वसुखाङ्गो मद्यप्राशेन संशयः ।
आरनालं वचा कुष्ठ पिङ्गला सिक्थकं घृतम् ॥

एतैः पक्वं घृतं सम्यक् पित्तव्याधिविनाशनम् ।
हरिद्राद्वयसंयुक्तं गन्धकं तु मनःशिला ॥
क्वाथयेन्नवनीतेन त्रिगुणेन घृतेन च ।
अभ्यङ्गेनाथ पानेन सप्तरात्रेण वाजिनः ॥
कण्डूतिर्निःक्षयं याति तथोदरभवा रुजः ।
माक्षिकं निम्बपत्राणि नवं गुग्गुल एव च ॥
भृङ्गराजो विशाला च पाठा चैव पुनर्नवा ।
विल्वमारुष्ककं लोध्रं सैन्धवं तगरं तथा ॥”
एतैः पक्वा घृतं वाजी संप्राश्यार्त्तेर्विमुच्यते ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते घृताध्यायश्चतुर्द्दशः ॥

अथ क्वाथः ।

“पूर्व्वाणि समभागानि क्वाथयेत् कूपवारिणा ।
ततोऽष्टांशं समादाय तोयस्य क्वथितस्य च ॥
एतत् सिद्धार्थकं नाम उत्कृष्टं सर्व्ववाजिनाम् ।
कायाग्निं वर्द्धयत्याशु नीरोगत्वं प्रयच्छति ॥
मुस्ता मधुकपत्राणि केशरं लवणं वचा ।
शताह्वा शाल्मली धात्री त्रपुषं फलिनी तथा ॥
क्वाथयित्वा जलं कौपं एतैस्तुल्यं विचक्षणः ।
त्रिभागमेवमादाय ततो दद्याद्धयस्य च ॥
प्रकरोति सदा नाशं पित्तस्यागन्तुकस्य च ।
एकविंशद्दिनं यावच्छालिहोत्रमतं यथा ॥
शुण्ठी हरीतकी पाठा ब्राह्मी मुस्ता शिफालिका ।
हरिद्राद्वयसंयुक्ता हरितालं मनःशिला ॥
सिद्धस्त्रिभागशेषोऽयं क्वाथो हन्यात्त्रिरात्रिकम् ।
सन्निपातमशेषेण पलिकः पलमात्रकः ॥
मधुकं केशरं पत्रं भल्लातकविभीतकम् ।
शणपुष्पं वचा सारं समभागेन मिश्रितम् ॥
कासार्त्तस्य समुद्दिष्टः क्वाथोऽयं त्रिफलात्मकः ।
उत्साहवर्द्धकः सद्यस्तथा कायाग्निदीपकः ॥
कुमारी शाल्मली पाठा मञ्जिष्ठा चेन्द्रवारुणी ।
काकोली समभागेन क्वाथयेत् समभागतः ॥
पलद्वयप्रमाणेन ततः पीतेन वाजिना ।
मोचयेच्छूलजं दोषं मूत्रदोषं च तत्क्षणात् ॥
यवानी माक्षिकं कासं सौवर्च्चलयुताभया ।
क्वाथयेदष्टमांशेन तत्पानाज्जायते हयः ॥
प्रदीप्ताग्निस्तु तेजस्वी सर्व्वरोगाद्विमुच्यते ।
स शीघ्रमार्गगामी च स्निग्धो रोगविवर्ज्जितः ॥
सेफालिका वचानीले वेणुका सिन्धुवारिका ।
एतैः क्वाथः कृतः सम्यक् कृमिनाशकरः परः ॥
मातुलुङ्गस्य वीजानि चन्दनं सितसर्षपाः ।
उशीरं पुष्करं ब्राह्मी लक्ष्मणा च पुनर्नवा ॥
क्वाथोऽयं सुपिष्टचूर्णेन धावितक्लेशनाशनः ।
प्रकरोति तुरङ्गाणां सर्व्वदैव सुखं तथा ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते क्वाथाध्यायः पञ्चदशः ॥

अथ विषम् ।

“वारुणी माक्षिकी गौरी श्रीतालीवीजपूरकम् ।
कृमिक्लेदविनाशाय क्वाथो नित्यं रुजाहरः ॥
अश्वगन्धा घृतं क्षौद्रं विषदग्धस्य वाजिनः ।
विषनाशं करोत्येव सर्व्वगात्रेषु तत्क्षणात् ॥
सामान्येन प्रदिष्टोऽयमगदो विषनाशनः ।

पृथक् पृथग्विभागेन कथितं साम्प्रतं परम् ।
त्रिविधं कीर्त्तितं चैव कृत्रिमञ्च ततः परम् ।
त्रिविधं कीर्त्तितं प्राज्ञैर्विषशास्त्रविचक्षणैः ॥
स्थावरं कन्दजं प्रोक्तं जङ्गमं सत्त्वसम्भवम् ।
कृत्रिमं योगजं प्रोक्तं त्रिविधं विषमुच्यते ॥
यत्र तिष्ठन्ति धमन्त्यन्ति कदाचित्तुरगोत्तमाः ।
तत्र कार्य्यं विधानञ्च रोगस्य प्रयोजनम् ॥
केशरं पद्मनालञ्च सौपर्णी बदरीफलम् ।
तक्रमिश्रं हये दत्तं सर्व्वथा विषनाशनम् ॥
सौपर्णी सिन्धुवारञ्च नागवल्ली जटा तथा ।
त्रिवृता प्राश्य संमिश्रं दुग्धे स्यादायधी क्रमः ॥
अश्वगन्धा वचा एला घृतमिश्रा प्रयोजिता ।
विषनाशं भवत्याशु जङ्गमं हयनाशनम् ॥
मलं चन्दनरसञ्च माक्षर्संपरिप्लुतम् ।
जङ्गमस्य विषस्याशु प्रकरोति च सङ्क्षयम् ॥
तक्रं केशरसंयुक्तं विषं सद्यो विनाशकम् ।
हयस्य जङ्गमं नाश्य विषमयति तत्क्षणात् ॥
सौपर्णी विषकङ्कोली पिष्टा मद्येन भाविता ।
जङ्गमं नाशनं ह्यस्य विषं नयति तत्क्षणात् ॥
एला कङ्कोलिकाख्येन सौपर्णीघृतमिश्रितम् ।
विषनाशं करोत्याशु नस्यदानेन वाजिनाम् ॥
कौसुम्भं कर्पूरं लाक्षा मालिका माकुली तथा ।
कृत्रिमस्य विषस्याशु प्रकरोति च सङ्क्षयम् ॥
चम्पकं मालतीमूलमुत्पलकरसं तथा ।
अश्वानां नाशयत्याशु विषं जङ्गममाश्रितम् ॥'

इति श्रीनकुलकृतेऽश्वचिकित्सिते विषयोगाध्यायः षोड़शः ॥

अथ अश्वशालाविधिः ।

नृपवेश्मवामभागे शुभदिने तु कारयेद्धयागारम् ।
पुण्याश्रिय प्रयत्नाद्दैवज्ञं प्रतिष्ठाप्य ॥
सुशुभे भूमिविभागे पूर्व्वोत्तरजलप्लवविधानात् ।
तस्मिन् शालां चित्रां दृढ़ाङ्गलसमुच्छ्रितां दृढ़ां कुर्य्यात् ॥
खादनकीलकमस्मिन् हस्तद्वितयं समुच्छ्रितं कुर्य्यात् ।
संस्थाप्य दृषभगाधौ सप्ताङ्ग वाजिशालायाम् ॥
अत ऊर्द्धन्तु हुतानि प्रयत्नयेद्वाजिनो यथा योग्यम् ।
कुम्भकैरलनैर्वेलैरनुकूले स्थानपालैश्च ।
हतमङ्गलस्वाराः बध्यास्तेऽत्र चोत्तराभिमुखाः ।
नात्यायता न शिथिला स्थाने वा दक्षिणाभिमुखम् ॥
वेश्यानां तुरगाय समीपं यत्न कारयेत् पूर्व्वम् ।
कार्य्याधिकेन यत्नेन मालिकाख्यं निवारयाम् ॥
गन्धैर्माल्यैर्धूपैः स्थानानि विभूषयेदलङ्कारैः ।
सविशेषं स्वयमपीतौ तुल्यापि पूरयेद्विद्वान् ॥
सच्छिद्रं नासिकास्यं यथा पश्यन्ति वाजिनः ।
स्थानं चैव पृथक् प्राप्य प्रबल रागिणो न वै ।
कीटी कुष्ठी ज्वरी यक्ष्मी परस्परं दूषयन्ति चारैः ।
तिथिवारे कर्षाश्च खुराश्च प्रशमन्ति दोषान् ॥
अश्वस्याङ्गं प्रलिपद्धरिद्रया वरिष्ठया मङ्गल्यार्थं ।
सुवर्णमाला दीपनैर्विभूषयेदलङ्कारैः ॥"

इति श्रीनकुलकृतेऽश्वचिकित्सितेऽश्वशालाविधिर्नाम सप्तदशोऽध्यायः । सप्तदशाध्यायस्तु नाधिगम्यते ॥

अथ ग्रहनामलक्षणानि ।

"हयानां यानि चिह्नानि ग्रहग्रस्तेषु वाजिनाम् ।
तानि सम्यक् प्रवक्ष्यामि ग्रहनामानि यानि तु ॥
लोहिताक्षो विरूपाक्षो हरिर्बलिस्तथैव च ।
पक्षाख्यः चैव विख्यातः शकुनी च परः स्मृतः ॥
सुमस्थितश्च कौबेरो वैश्वानरश्च सद्ग्रहः ।
ऊर्द्धं च शालकश्चैव महरिपौ वरुणग्रहः ॥
हृदयस्तिश्च मन्मथः तथा सर्व्वग्रहोऽपरः ।
एते प्रोक्ता ग्रहाः सर्व्वे दारुणा मुनिसत्तमैः ॥
एतेषां लक्षणं चाशु नैव जीवन्ति सर्व्वशः ।
चिह्नं तत् प्रवक्ष्यामि यथा शास्त्रे व्यवस्थितम् ॥
कम्पते पूर्व्वकायस्तु निश्चलो यस्य पश्चिमः ।
पश्चात्कठी सकम्पश्च विज्ञेयो हरिपीड़ितः ॥
भवन्ति निस्वौ रक्ता अकस्मात् यस्य चक्षुषी ।
हरिनामग्रहगृहीतोऽश्वो यामखेदी च जायते ॥
प्रतिकूलगुरुगात्रश्च क्षुब्धचङ्क्रमणक्रियः ।
शीलताशीलता यस्य स्वभावान्निद्रमेव च ॥
विरूपाक्षगृहीते तु कम्पः स्वेदश्च जायते ।
उत्थितः सहसा यस्तु मध्ये पतति भूतले ॥
लम्बाक्षो मुच्यते कण्ठे तथा वाले खुरैरपि ।
बलिग्रहगृहीतोऽसौ लम्बकर्णशिरोधरः ॥
अकस्मात् यस्य लोमानि शीर्य्यन्ते यश्च लङ्घति ।
मृगपक्षिमपादस्य तस्य काश्चिद्यथ वदेत् ॥
सहसा कुपितो वाजी स्वानि गात्राणि खादति ।
प्रोथतः सततश्चैव शकुनिग्रहपीड़ितः ॥
स्निग्धाङ्गो वेपमानश्च जानुभ्यां यश्च तिष्ठति ।
कौबेरग्रहसन्दुष्टः स विज्ञात कष्टजीवितम् ॥
दृश्यते सततं यस्तु पश्चादात्मानमीक्षते ।
सुखस्थितग्रहाविष्टः स विज्ञेयो मनीषिभिः ॥
स्तम्भेन गुरुणा चैव वेपमानेन पश्चिमः ।
गात्रेण विद्याद् वाहं तु वैश्वानरग्रहसेवितम् ॥
ग्रीवां चैव तथा जिह्वां परिवर्त्तयति मुहुर्मुहुः ।
जृम्भते पूर्व्वकायेन शीतोच्छ्वासी विशोषणः ॥
कोलाहलाविस्ताहतः एष कश्यपः सामिनापि वा ।
स वै दीर्घस्वरग्रस्त दृष्ट्वैव परिवर्जयेत ॥
श्यामं जिह्वामुखं यस्य नष्टदृष्टिस्मृतिर्भवेत् ।
ऊर्द्धग्रहकृतं दोषं तस्य दीनस्य निर्द्दिशेत् ॥
तालुजिह्वं च नेत्रे च श्वयथौ मेढ्रमेव च ।
श्यावं रूपञ्च यस्य स्याद् गात्रगौरवमेव च ॥
तस्य स्वेदपरीतस्य बुद्धिमान् वरुणग्रहे ।
कृतं दोषं महाघोरं लम्बाङ्गस्य विनिर्द्दिशेत् ॥
दृश्यते सततं यस्तु हृष्टरोमा तुरङ्गमः ।
लम्बास्यो जृम्भतेऽथ च सत्त्वापि सलिलग्रहः ॥
सुविस्फारितसर्व्वाङ्गः सलिले निश्चलस्थितः ।
दृश्यते विस्तरं वाजी वरुणग्रहपीड़ितः ॥
सुहूर्त्तावस्थितस्तोये जानुभ्यां योऽवगच्छति ।
मुखपाकश्च यस्याङ्गे स विद्यादुदकग्रहम् ॥
उद्वर्त्तिताश्च खिन्नश्च सदाग्रहीतहृदुग्रश्च यः ।
कम्पमानश्च यो वाजी स हरिग्रहपीड़ितः ।
लम्बग्रीवो न जानाति कदाचन सुदुर्म्मनाः ।
कन्दर्पग्रहगृहीतोऽश्वो वामपार्श्वेन निश्चलः ॥
मूलाधिकुटी रक्ताक्षः लघु स्रवन्ति चामुहुः ।
स्वस्तिग्रहगृहीतोऽसौ नैव जीवति तादृशः ॥
कम्पते पूर्व्वकायेन खण्डपादायनश्च यः ।
शिरो प्रसार्य्य गात्राणि शीताङ्गः सोमपीड़ितः ॥
रक्ताक्षः शूलकण्ठश्च कम्पमानश्च श्वासयुक् ।
पिशिताशग्रहैर्ग्रस्तश्च ग्रहः सृष्टग्रहेण सः ॥
उदकं सततमीक्षते पा प्राप्य दहति दारुणः ।
तुरङ्गं मन्यहीनन्तु स बुधो वारुणग्रहः ॥
यमभूमिचिताश्चैव शून्यवासमुरालये ।
लोहिताक्षाद्यो दोषाद् ग्रहा रक्षन्ति वाजिनः ॥
एवंविधैर्निदानैस्तु ग्रहदोषं विनिर्द्दिशेत् ।
वातपित्तकफानान्तु निदानैर्व्याधिमादिशेत् ॥
एकाकारेण रोगेण म्रियते वा हयो यतः ।
तुरङ्गाणां तदा ज्ञेया उपसर्गाः सुदारुणाः ॥
ग्रहदोषेषु सर्व्वेषु उपसर्गेषु चैव च ।
यथोक्तांश्च महाशान्तिं मान्त्रौषधं प्रयोजयेत् ॥
अश्वरक्षाविधानाय कार्य्यं सम्भाव्य मादकम् ।
जुहुयाद्घृतसंयुक्तं शुचिः स्नात्वा समुत्थितः ।
शान्तिकं कारयन् कर्म्म बलिश्चापि प्रयोजयेत् ।
ग्रहदोषेषु सर्व्वेषु शान्तिकर्म्मादि कारयेत् ॥
दर्भाहृतप्रोक्षितगृहस्थान् यत्नेनापि ।
तोषयेद्धोमनैर्नामैर्वंशीकाश्चनाभिः ॥
रात्रौ शालासमीपे तु बलिं दद्यात् चतुर्दिशम् ।
मत्स्यमांसैश्च पक्वान्नैः कृशरैः पायसादिभिः ॥
त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा ।
नीराजनविधिं कृत्वा नयेदश्वान् पृथक् पृथक् ॥"

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे ग्रहगृहीतचिकित्सितं सप्तदशाष्टमोऽध्यायः ॥)

**घोटिका**, स्त्री, (घोटते परिवर्त्तते कद्राग्निगुणैरिति । घुट + ण्वुल् । ततष्टापि अत इत्वम् ।) हयभेदः । तत्पर्य्यायः । ककटी २ तुरङ्गी ३ चतुरङ्गा ४ । अस्या गुणाः । कटुत्वम् । उष्णत्वम् । मधुरत्वम् । वातश्लेष्मकण्डुकुष्ठाश्मर्य्यशनाशित्वञ्च । इति राजनिघण्टः ॥

**घोणा**, स्त्री, (घोणते गृह्णाति वस्तुगन्धम् । घुण + अच टाप् च । घोणतेऽनया इति करणे घञ् वा ।) नासा । (यथा महाभारते । १ । १५६ । ३२ ।
'दीर्घघोणं महोरस्कं विकटोद्बद्धपिण्डिकम् ॥'
"घोणायां द्वे ॥' इति सुश्रुते शारीरस्थाने पञ्चमाध्याये ॥) अश्वनासिका । तत्पर्य्यायः । प्रोथः २ । इत्यमरः । ३ । ८ । ४८ ॥ (यथा अश्ववैद्यके । २ । ७ ।
नासाच्छिन्नासिमध्ये तु घोणायां समुदाहृतः ।
घोणायामश्वशास्त्रे गण्डौ चौरिकैश्च ततः परम् ॥ )

**घोणी** [न्] पुं (प्रशस्ता घोणा अस्त्यस्य इति । ब्रीह्यादिभ्यश्च । ५ । २ । ११६ । इति इनिः ।) शूकरः । इत्यमरः । २ । ५ । २ ॥

**घोण्टा** स्त्री (घुण्टते गृह्णाति भक्षयायेति । घुण + बाहुलकात् टः ।) हयविशेषः । श्रियाकुल

मन्त्रान्तरं यथा,—
वज्रवैरोचनीये च कूर्च्चयुग्मं सफट्‌ठठः ।
तारादीशा महाविद्या सर्व्वतेजोऽपहारिणी ॥
त्रैलोक्याकर्षिणी विद्या चतुर्व्वर्गफलप्रदा ।
ध्यानपूजादिकं सर्व्वं षोड़शीवत् समाचरेत् ॥६॥
इदानीं षोड़शीविद्याप्रशंसामाह ।
तथा सर्व्वप्रयत्नेन सर्व्वासामपि च षोड़शी ।
लक्ष्मीबीजादिका सैव सर्व्वैश्वर्य्यप्रदायिनी ॥
लज्जाद्या स्वर्गभूनागयोषिदाकर्षिणी परा ।
कूर्च्चाद्या सर्व्वजन्तूनां महापातकनाशिनी ॥
वाग्भवाद्या यदा देवी वागीशत्वप्रदायिनी ।
एवा तु षोड़शीविद्या ज्ञेया सप्तदशाक्षरी ॥
श्रीबीजपुटिता सा तु लक्ष्मीवृद्धिकरी सदा ।
लज्जया पुटिता विद्या त्रैलोक्याकर्षिणी परा ॥
कूर्च्चेन पुटिता सर्व्वपापिनां पापहारिणी ।
वाग्बीजपुटिता चैषा वागीशत्वप्रदायिनी ॥
चतुर्व्विधेति विद्येषा प्रिये ! सप्तदशाक्षरी ।
ताराद्या षोड़शी चान्या भवेत् सप्तदशाक्षरी ।
एषा विद्या महाविद्या भुक्तिमुक्तिकरी सदा ।
कमला भुवनेशानी कूर्च्चबीजं सरस्वती ॥
वज्रवैरोचनीये च पूर्व्वबीजानि चोच्चरेत् ।
फट् स्वाहा च महाविद्या वसुचन्द्राक्षरी परा ।
ताराद्येकोनविंशार्णा मन्त्रविद्यास्वरूपिणी ।
एते विद्योत्तमे देवि ! भुक्तिमुक्तिप्रदे शुभे ॥ ७ ॥
लक्ष्म्यादिपुटिता पूर्व्वा रन्ध्रचन्द्राक्षरी भवेत् ।
चतुर्द्दशी च महाविद्या चतुर्व्वर्गफलप्रदा ॥
प्रणवाद्या यदा चैषा भोगमोक्षकरी सदा ।८।
विद्यान्तरं प्रवक्ष्यामि सावधानावधारय ।
हृल्लेखाकूर्च्चवाग्बीजवज्रवैरोचनीये छूं ॥
अस्त्रं स्वाहा महाविद्या चतुर्द्दशाक्षरी मता ।
सर्व्वैश्वर्य्यप्रदा चैषा सर्व्वसम्मोहकारिणी ॥९॥
भुवनेशीं चितत्त्वस्य वाग्बीजं प्रणवं ततः ।
वज्रवैरोचनीये च फट् स्वाहा च तथापरा ॥
चतुर्द्दशाक्षरी चैषा चतुर्व्वर्गफलप्रदा ।
एषा विद्या महाविद्या जन्ममृत्युविनाशिनी ॥१०॥
तन्त्रान्तरे ।
रमा कामस्तथा लज्जा वाग्भवं वज्र वै पदम् ।
रोचनीये लज्जाद्वन्द्वमन्ते स्वाहासमन्वितम् ॥
इदं वा षोड़शी प्रोक्ता सर्व्वकामफलप्रदा ।
अथवा: सकला विद्या: सारात्सारतरा: शुभा: ॥
अस्या ऋषिर्भैरवोऽयं नाम्ना तु क्रोधभूपति: ।
सम्राट् छन्दो देवता च छिन्नमस्ता प्रकीर्त्तिता ।
षड्‌दीर्घभाक्खरेणैव प्रणवाद्येन सुन्दरि ! ।
खड्‌गाद्येन ठठान्तानि षड़ङ्गानि प्रकल्पयेत् ॥
नाडिदीप्यादिकं चासां ता: सुसिद्धा: सुरासुरै: ।
सकलेषु च वर्णेषु सकलेष्वाश्रमेषु च ॥
अन्तिमेषु च वर्णेषु भुक्तिमुक्तिप्रदायिका ।
प्रसवाद्यास्य या विद्या शूद्रादौ न समीरिता: ॥
अस्यास्त्वेव विशेषोऽयं योषिच्चेत् समुपासयेत् ।
डाकिनी सा भवत्येव डाकिनीभि: प्रचार्य्यते ॥
मतिहीना पुत्रहीना यथा स्यात् सिद्धयोगिनी ।
इति ते कथितं तत्त्वं रहस्यमखिलं प्रिये ! ॥

अतिलोहितरङ्गेण भक्त्या दासोऽस्मि ते प्रिये ! ।
एतासां ध्यानपूजादिकं षोड़शीवत् कार्य्यम् ॥ ५ ॥
नाभौ शुद्धारविन्दे तदुपरि कमलं मण्डलं चण्ड-
रश्मे:
संसारस्यैकसारां त्रिभुवनजननीं धर्म्म-
कामोदयाढ्याम् ।
तस्मिन् मध्ये त्रिकोणे त्रितयतनुधरां छिन्नमस्तां
प्रशस्तां
तां वन्दे ज्ञानरूपां निखिलभयहरां योगिनीं
योगमुद्राम् ॥"
इति छिन्नमस्ताप्रकरणम् । इति तन्त्रसार: ॥
**छिन्नरुह:**, पुं, ( छिन्नोऽपि रोहतीति । रुह+ "इगुपधज्ञेति ।" ३ । १ । १३५ । इति क: । ) तिलकवृक्ष: । इति राजनिर्घण्ट: ॥
**छिन्नरुहा**, स्त्री, ( छिन्ने सत्यपि रोहतीति । रुह + क: । अजादित्वात् टाप् । ) गुड़ूची । इत्यमर: । २ । ४ । ८२ ॥ (यथास्या: पर्य्याया: । "वत्सादनी च्छिन्नरुहा मधुपर्ण्यमृतामरा । कुण्डल्यमृतवल्ली च गुड़ूची चक्रलक्षणा ॥" इति वैद्यकरत्नमालायाम् ॥) स्वर्णकेतकी । शल्लकी । इति राजनिर्घण्ट: ॥
**छिन्नवेशिका**, स्त्री, (छिन्नो विच्छिन्नो वेशो यस्या: । संज्ञायां कन् । ततष्टापि अत इत्वम् ।) पाटा । इति शब्दचन्द्रिका । आकनादी इति भाषा ॥
**छिन्ना**, स्त्री, (छिद्यतेऽसौ । छिद + क्त । "अजाद्यतष्टाप् ।" ४।१।४ इति टाप् ।) गुड़ूची । (यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे । "गुड़ूची मधुपर्णी स्यादमृताऽमृतवल्लरी । छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च ॥" छिद्यते कुलात् वहिष्क्रियते इति । ) पुंश्चली । इति विश्व: ॥
**छिन्नोद्भवा**, स्त्री, ( छिन्ना विभिन्ना सत्यपि उद्भवति पुनर्जायते इति । उत् + भू + अच् । यद्वा, छिन्ने छेदनेऽपि उद्भव उत्पत्तिर्यस्या: । ) गुड़ूची । इति राजनिर्घण्ट: ॥ (गुड़ूचीशब्देऽस्या विवृतिर्ज्ञेया ॥)
**छिलिहिण्ड:**, पुं, ( चिलिना वसनखण्डरूपतया हिण्डते अनाद्रियते इति । हिडि अनादरे + अच् । पृषोदरादित्वात् चस्य छ: । ) पातालगरुड़वृक्ष: । इति भावप्रकाश: ॥
**छुछुन्दरी**, स्त्री, ( छुछुमित्यव्यक्तशब्दो दीर्य्यति निर्गच्छत्यस्या: । दृ + "सर्व्वधातुभ्य इन् ।" उणा ४ । ११७ । इति इन् । तत: कृदिकारादिति ङीष् । ) जन्तुविशेष: । छुँचा इति भाषा । तत्पर्य्याय: । गन्धमूषा २ । इति हेमचन्द्र: । ४ । ३६७ ॥ चिक्क: ३ वेश्मनकुल: ४ पुंध्वज: ५ गन्धमूषिक:६ । इति त्रिकाण्डशेष: ॥ गन्धमूषिका७ । इति हलायुध: । राजपुत्त्री ८ प्रतिमूषिका ९ सुगन्धिमूषिका १० गन्धशुण्डिनी ११ शुण्डिमूषिका १२ । इति राजनिर्घण्ट: ॥ गन्धाखु:१३ गन्धनकुल: १४ मुषु: १५ । इति हारावली । (छुछुन्दरि:१६ । इति मार्कण्डेयपुराणम् ।१५।३१॥

"अभ्यञ्जनाच्छमयेत् क्षिप्रं गण्डमालां सुदारुणाम् । छुछुन्द्र्या विपक्वन्तु चाथ तैलवरं ध्रुवम् ॥" इति वैद्यकचक्रपाणिसंग्रहे गण्डमालाधिकारे ॥)
**छुट**, क छेदे । इति कविकल्पद्रुम: ॥ ( चुरां-तुदां च-सकं-सेट् । ) क, छोटयति । शि, छुटति । अच्छुटीत् । इति दुर्गादास: ॥
**छुण्ड**, स्त्री, (छद + रक् । पृषोदरादित्वात् उत्वम् ।) प्रतीकरणम् । रश्मि: । इति संक्षिप्तसारे उणादिवृत्ति: ॥
**छुप**, श औ स्पर्शे । इति कविकल्पद्रुम: ॥ ( तुदां-परं-सकं-अनिट् । ) श, छुपति । औ, छोप्ता । इति दुर्गादास: ॥
**छुप:**, पुं, ( छुप + घञर्थे क: ।) क्षुप: । स्पर्शनम् । इति मेदिनी । पे, ६ ॥ चपल: । युद्धम् । इति विश्व: ॥
**छुर**, छेदे । इति कविकल्पद्रुम: ॥ ( भ्वां-परं-सकं-सेट् । छोरति । अच्छोरीत् ॥ )
**छुर**, शि लेपे । इति कविकल्पद्रुम: । (तुदां-परं-सकं-सेट् । ) शि, छुरति, अच्छुरीत् चुच्छोर । लेपश्छेद: । इति दुर्गादास: ॥
**छुरा**, स्त्री, ( छुरति रञ्जयति नाशयति दुर्गन्धादिकमिति वा । छुर + क: टाप् च । ) सुधा । चूर्णम् । इति हारावली । १३५ ॥
**छुरिका**, स्त्री, ( छुरति छिनत्तीति । छुर + क्वुन् । यद्वा, छुरी + स्वार्थे कन् । पूर्व्वह्रस्वश्च । ) अस्त्रविशेष: । छुरी इति ख्याता । तत्पर्य्याय: । शस्त्री २ असिपुत्त्री ३ असिधेनुका ४ । इत्यमर: । २ । ८ । ९२ ॥ छुरी ५ । इति भरत: ॥ खुरी ६ छूरी ७ कृपाणिका ८ धेनुपुत्त्री ९ । इति हेमचन्द्र: ॥ छूरिका १० । इति शब्दरत्नावली ॥ (यथा, कथासरित्सागरे ।२५।१४६ । "तावत् स्त्रियमपश्यत्तां छित्त्वा क्षुरिकया मुहु: । खादन्तीं तस्य मांसानि पुंस: शूलाग्रवर्त्तिन: ॥")
**छुरितं**, त्रि, ( छुर + क्त: । ) खचितम् । इति जटाधर: ॥ ( रञ्जितम् । यथा, माघे ।१।२२। "परस्परेण च्छुरितामलच्छवी तदेकवर्णाविव तौ बभूवतु: ॥") छिन्नश्च ॥
**छुरी**, स्त्री, ( छुरति छिनत्तीति । छुर छेदे + "इगुपधज्ञेति । " ३ । १ । १३५ । इति क: । ततो ङीष् । ) छुरिका । इति भरत: ॥
**छूरिकापत्री**, स्त्री, ( छुरिका इव पत्त्राणि यस्या: । स्त्रियां ङीष् । ) श्वेता । इति राजनिर्घण्ट: ॥
**छूरी**, स्त्री, ( छुरी + पृषोदरादित्वात् दीर्घ: । ) छुरिका । इति हेमचन्द्र: । ३ । ४४८ ॥
**छृद**, कि सन्दीपे । इति कविकल्पद्रुम: ॥ ( चुरां-पक्षे भ्वां-परं-सकं-सेट् । ) सन्दीपो दीप्तीकरणम् । कि, छर्द्दयति छर्द्दति दीपं लोक: । इति दुर्गादास: ॥
**छृद**, उ ञ ध इर् देवने । क्लिपि । वमने । इति कविकल्पद्रुम: ॥ (रुधां-उभं-सकं-सेट् । उदित्वात् क्त्वावेट् । ) उ, छर्द्दित्वा छृत्वा । ञ ध, छृणत्ति

जकारस्थानःस्थयकारश्छान्दसो द्रष्टव्य इत्युक्का वर्ण्यादिरयं निर्णीतः। च, चचति। लु च, लचिति। इति दुर्गादासः॥

चणं, क्ली, ( जच+भावे ल्युट्। ) भचणम्। इति हेमचन्द्रः। ३। ८७॥

त्मः, पुं, ( जचिति भचयति शरीरं नाशयतीत्यर्थः। जच+बाहुलकात् मन्।) जच्मा। इत्यमरटीका॥ ( केचित् तु "अर्त्तिस्तुसुहुसिति।" १। १३६। उणादिसूत्रेण यच पूजायामिति धातोर्मन्प्रत्ययनिर्द्देशात् अन्तःस्थयकारादिरिति मन्यन्ते॥ )

जच्मा, [ न् ] पुं, ( जचिति भचयति शरीरं नाशयतीत्यर्थः। जच+"सर्व्वधातुभ्यो मनिन्।" उणां। ४। १४४। इति मनिन्।) यक्ष्मरोगः। इत्यमरटीकायां भरतः॥

जगच्चचुः, [स्] पुं, ( जगतां भुवनानां चचुरिव प्रकाशकत्वात्। ) सूर्य्यः। इति हेमचन्द्रः। २। १२॥ ( यथा, काशीखण्डे। ४६। ४४।
"इति काशीप्रभावज्ञो जगच्चचुस्तमोनुदः।
सत्वा द्वादशधात्मानं काशीपुर्य्यां व्यवस्थितः॥")

जगत्, क्ली, ( गच्छतीति। गम+"द्युतिगमिजुहोतीनां द्वे च।" ३। २। १३८। इत्यस्य वार्त्तिं इति क्विपि द्वित्वे च "गमः क्वौ।" ६। ४।४०। इति मलोपे तुक्। ) विश्वम्। तत्पर्य्यायः। जगती २ लोकः ३ पिष्टपम् ४ भुवनम् ५। इत्यमरः। २। १। ६॥ विष्टपम् ६। इति तट्टीका॥ ( यथा, मनुः। १। ५२।
"यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्।
यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति॥"
गच्छति इतस्ततो वातीति।) वायौ, पुं। (गच्छन्त्यस्मिन् जीवा इति। महादेवः। यथा, महाभारते। १३। १७। १५१।
"विमुक्तो मुक्ततेजाश्च श्रीमान् श्रीवर्द्धनो जगत्॥")
जङ्गमे त्रि। इति मेदिनी। ते, १०८॥

जगत्कर्त्ता, [ऋ] पुं, ( करोतीति। कृ+तृच्। ततो जगतः कर्त्ता कारकः। ) ब्रह्मा। इति हेमचन्द्रः। २। १२६॥

जगत्प्राणः, पुं, ( जगतां विश्वस्थजीवानां प्राणो जीवनम्। ) वायुः। इत्यमरः। १। १। ३५॥

जगत्साची, [न्] पुं, ( जगतां भुवनानां साची कर्म्मद्रष्टा। ) सूर्य्यः। इति हेमचन्द्रः। २।१२॥

जगती, स्त्री, (गच्छति कार्य्यत्वात् नष्टा भवतीति। गम+"वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च।" उणां २। ८४। इति अतिप्रत्ययेन निपातनात् साधुः। ततः शतृतुल्यत्वात् "उगितश्च।" ४। १। ६। इति ङीप्।) भुवनम्। ( यथा, रामायणे। २। ६९। ११।
"स्वप्नेऽपि सागरं शुष्कं चन्द्रञ्च पतितं भुवि।
उपरुद्धाञ्च जगतीं तमसेव समावृताम्॥")
पृथ्वी। ( यथा, मार्कण्डेये। ८। २२।
"तमायान्तं ततो देवी सर्व्वदैत्यजनेश्वरम्।
जगत्यां पातयामास भित्वा शूलेन वचसि॥")
जनः। छन्दोविशेषः। इति मेदिनी। ते,१०९॥ (सा च द्वादशाक्षरा वृत्तिः। यथा, छन्दोमञ्जर्य्यां १ स्तवके।
"त्रिष्टुप् च जगती चैव तथातिजगती मता॥"
अस्या उदाहरणादीनि छन्दःशब्दे द्रष्टव्यानि॥) जम्बूवप्रम्। इति हेमचन्द्रः॥

जगदम्बा, स्त्री, ( जगतामम्बा माता। ) दुर्गा। यथाह कश्चित्।
"अदूरे जगदम्बाया शारदीयो महोत्सवः॥"
"जगदम्बापदद्वन्द्वमापदां चयसाधनम्॥"
इति शूलपाणिः॥
अपि च ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३१ अध्याये।
"विष्णुमायां भगवतीं दुर्गां दुर्गतिनाशिनीम्।
प्रकृतिं जगदम्बाञ्च पतिपुत्त्रवतीषु च॥"

जगदम्बिका, स्त्री, ( जगतां अम्बा जननी। ततः स्वार्थे कन्। टापि अत इत्वम्। ) दुर्गा। यथा,
"सृष्टिस्थितिविनाशानां विधात्री जगदम्बिका।
अहं सर्व्वान्तरस्था च संसारार्णवतारिणी॥"
इति भगवतीगीतायां ५ अध्यायः॥
(यथा च देवीभागवते। १। ७। ४६।
"कामं कुरुष्व वधमद्य ममैव मातर्दुःखं न मे मरणजं जगदम्बिकेऽत्र॥")

जगदाधारः, पुं, ( जगतामाधारः आश्रयः। ) वायुः। इति शब्दचन्द्रिका॥ जगदाश्रयः। यथा,
"कालो हि जगदाधारः।" इति स्मृतिः।

जगदीशः, पुं, ( जगतामीशो नियन्ता। ) विष्णुः। इति शब्दरत्नावली॥ ( यथा, पाद्मे उत्तरखण्डे। १११ अध्याये।
"सर्व्वान्तर्यामी जगदीशश्चाणूरमर्द्दनः प्रभुः॥"
विधाता। यथा, कुमारे। २। ९।
"जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः॥"
स्वनामख्यातपण्डितविशेषः। स च न्यायशास्त्रटीकाशास्त्रार्णवादिग्रन्थप्रणेता अस्य जन्मस्थानं नवद्वीपः॥)

जगद्गौरी, स्त्री, ( जगत्सु मध्ये गौरी। ) मनसा देवी। इति शब्दरत्नावली॥

जगद्धात्री, स्त्री, (जगतां धात्री विधात्री।) दुर्गाविशेषः। अस्याः पूजायाः कालो विधिश्च यथा, निगमकल्पसारज्ञानसारस्वते ग्रन्थे दुर्गाकल्पे।

श्रीशिव उवाच।
"प्रसीद जगतां मातर्ज्जगन्निस्तारकारिणि!।
अतएव महेशानि! तवाहं शरणागतः॥
त्वया यत् कथितं पूर्व्वं तत् सर्व्वञ्च श्रुतं मया।
जगद्धात्री महादुर्गा चतुर्व्वर्गफलप्रदा॥
तस्याः पूजाविधिर्दिनं कालं तन्न प्रकाशितम्।
तद्वद कथयेशानि! श्रोतुमिच्छामि साम्प्रतम्॥

श्रीदेव्युवाच।
कथयामि महेशान! सावधानोऽवधारय।
तस्याः पूजाविधिर्दिनं समयं भावभेदतः॥
कार्त्तिके शुक्लपचे च या दुर्गानवमी तिथिः।
सा प्रशस्ता महादेव! महादुर्गाप्रपूजने॥
प्रातश्च सात्त्विकी पूजा मध्याह्ने राजसी मता।
सायाह्ने तामसी पूजा त्रिविधा परिकीर्त्तिता॥
जपयज्ञादिभिर्द्देव! इति त्रैकालिकी मता।
अथान्यत् संप्रवक्ष्यामि शृणुष्व परमेश्वर!॥
सप्तम्यादिनवम्यान्तं पूजाकालमितीरितम्।
त्रिदिने त्रिविधा पूजा दशम्याञ्च विसर्ज्जयेत्॥
पूजापरेऽह्नि देवेश! तत्राप्यत्र विसर्ज्जनम्।
बोधितायाः प्रकारेण तत्र पूजा प्रकीर्त्तिता॥

श्रीशिव उवाच।
त्रिसन्ध्याव्यापिनी सा तु यदि स्यान्नवमी तिथिः।
त्रिकाले त्रिविधा पूजा कथं देया जगन्मयि!॥
कथयस्व महेशानि! इति मे संशयो हृदि॥

श्रीदेव्युवाच।
सा प्रातर्व्यापिनी यत्र वासरे नवमी तिथिः।
त्रिसन्ध्यं पूजयेत्तत्र वासरे जगदम्बिकाम्॥
मुहूर्त्तव्यापिनी चापि तत्र ग्राह्या महेश्वर!।
एककाले त्रिधा पूजा साधको नैव कारयेत्॥
इति ते कथितं वत्स! किमन्यत् श्रोतुमिच्छसि।
कथयिष्यामि तद्भक्त्या तव प्रीत्या त्रिलोचन!॥"

श्रीपार्व्वत्युवाच।
"दशम्यां वलिदानन्तु निषिद्धं जगदीश्वर!।
कथं त्रिकालं पूजा सा सम्भवेत् परमेश्वर!॥

श्रीशिव उवाच।
नवमीतिथिमाश्रित्य यत्र पूजाविधिर्भवेत्।
निषिद्धं वलिदानन्तु दशम्यां तत्र सुन्दरि!॥
नवमीदिनमाश्रित्य पूजाविधिरिहोदितः।
दशम्यां वलिदानन्तु निषिद्धं नात्र पार्व्वति!॥
ज्ञानाम्टतसारे पूर्व्वं पूजाप्रकारं उक्ताः।
"मुहूर्त्तव्यापिनी चापि प्रातश्चेन्नवमी तिथिः।
तद्दिने पूजनं कार्य्यं त्रिसन्ध्यं वरवर्णिनि!॥
त्रिकालं पूजयेत्तत्र नैककाले कदाचन॥"
अथ कात्यायनीतन्त्रे अष्टसप्ततिपटले।
"कुम्भराशिंगते चन्द्रे नवम्यां कार्त्तिकस्य च।
उषस्यर्द्धोदितो भानुर्दुर्गामाराध्य यत्नवान्॥
पुत्त्रारोग्यबलं लेभे लोकसाचित्वमेव च।
तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि॥
प्रपूजयेन्महादुर्गां धर्म्मकामार्थमोचदाम्॥"
शक्तिसङ्गमतन्त्रे।
"कार्त्तिकस्य सिते पचे नवम्यां जगदीश्वरीम्।
त्रिकालमेककालं वा वर्षे वर्षे प्रपूजयेत्॥
निर्म्माय प्रतिमां शक्त्या जगद्धात्र्या विधानतः।
पूजयित्वा परदिने प्रतिमां तां विसर्ज्जयेत्॥
एवं कृत्वा चक्रवर्त्ती भवेत् साधकसत्तमः।
पुत्त्रपौत्त्रधनैश्वर्य्यसंयुतास्य भवेत् पुरी॥"
तन्त्रान्तरे।
"कुजवारे युगाद्यायां नवम्यान्तु जगत्प्रसूः।
प्रादुर्भूता महेशानी तत्र तां परिपूजयेत्॥"
तन्त्रान्तरे।
"त्रिकालं पूजयेद्दुर्गां सूक्तेनैकाचरेण च।
नानारत्नविधानेन गीतवाद्यपुरःसरम्॥
कार्त्तिकस्य सिते पचे नवम्याञ्च विशेषतः।
कृत्वैवं साधकश्रेष्ठो लभेद्राज्यमकण्टकम्॥"

योगिनीतन्त्रे ।
'कार्त्तिकेऽमलपक्षे तु नवम्याञ्च विशेषतः ।
प्रगल्भाख्यां जगद्धात्रीं पूजयेद्दीपमालया ॥
आगमतत्त्वसारे ।
कार्त्तिकेऽमलपक्षे तु नवम्यां भौमवासरे ।
आविर्भूता जगद्धात्री युगाद्या दैत्यनाशिनी ॥
उत्तरकामाख्यातन्त्रे ।
'कार्त्तिके शुक्लपक्षे तु त्रेतायां प्रथमेऽहनि ।
त्रिसन्ध्यं पूजयेद्देवीं दुर्गां सम्पत्प्रवृद्धये ॥ *॥
कुब्जिकातन्त्रे ।
कार्त्तिके शुक्लपक्षे तु नवम्यां जगदम्बिकाम् ।
दुर्गां प्रपूजयेद्भक्त्या धर्म्मकामार्थसिद्धये ॥ *॥
दुर्गाकल्पे विद्योत्पत्तौ ।
कार्त्तिके शुक्लपक्षेऽह्नि भौमवारे जगत्प्रसूः ।
सर्व्वदेवहितार्थाय दुर्वृत्तशमनाय च ॥
आविरासीज्जगच्छान्त्यै युगादौ परमेश्वरी ॥
व्रतकालविवेकधृतवचनम्
कार्त्तिकेऽमलपक्षस्य त्रेतायां नवमेऽहनि ।
पूजयेत्तां जगद्धात्रीं सिंहपृष्ठे निषेदुषीम् ॥ *॥
स्मृतिः ।
'युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥'*॥
कृत्यतत्त्वार्णवे ।
"कार्त्तिकेऽमलपक्षे तु युगाद्या नवमी स्मृता ।
पूर्व्वाह्णसमये तत्र पूजाविधिरिहोदितः ॥'*॥
भविष्यपुराणकृत्यतत्त्वार्णवयोः ।
'कार्त्तिके शुक्लपक्षे तु युगाद्या नवमी स्मृता ।
पूर्व्वाह्णसमये काष्ठात्मिका परदिने यदि ॥
तत्र पूजादिकं कुर्य्यात् पितृनिर्व्वपणादिकम् ॥'
स्मृतिसारे
कार्त्तिकस्य युगाद्यायामुद्दिकामोऽर्च्चयेदुमाम् ॥
इति जगद्धात्रीपूजाकालव्यवस्था ॥ * ॥ * ॥
"अथ जगद्धात्रीविद्योत्पत्तिः ।
श्रीपार्व्वत्युवाच ।
"भगवन् ! प्राणनाथेश मन्त्रतत्त्वविशारद ।
श्रुता कात्यायनीविद्यासमुत्पत्तिर्म्मयाऽनघ ॥
महादुर्गाजगद्धात्रीविद्योत्पत्तिर्भवद्वचः ।
तत् सर्व्वं ब्रूहि भगवन् ! कृपया परमेश्वर ! ॥
यदि न कथ्यते देव विमुञ्चामि तदा तनुम् ॥
श्रीशिव उवाच ।
शृणु पार्व्वति वक्ष्यामि रहस्यं परमाद्भुतम् ।
यत् श्रुत्वा लभते देवि ! सौभाग्यं सुखमुत्तमम् ॥
पुरा पुरन्दराद्यास्ते स्वेश्वरत्वाभिमानिनः ।
प्राहुः किमीश्वरोऽस्मास्वस्त्यतिरिक्तः सुरा इति ॥
अथ दुर्गा जगन्माता नित्या चैतन्यरूपिणी ।
एतेषां धर्म्मसेतूनामिन्द्रादीनां नियन्त्रणम् ॥
करिष्यामीति निश्चित्य ज्योतीरूपं दधार्यकम् ।
तेषामाविरभूद्दुर्गा जगद्धात्री जगन्मयी ॥
कोटिसूर्य्यप्रतीकाशा चन्द्रकोटिसमप्रभा ।
कालानलप्रज्वलितमिव सर्व्वलोकभयङ्करी ॥
तद्दृष्ट्वा सुराः सर्व्वे भयमापुर्म्महौजसः ।
किमेतदिति निश्चेतुं प्रसक्तो नाभवन् सुराः ।
वायुमाहुः समाहूय किमेतत् परमाद्भुतम् ॥
विजानीहि महावीर ! मातरिश्वा दिशः गते ॥
ततो वायुर्द्दिशं तत्र गतस्तेजोऽन्तिकं ततः ।
समन्तिकमुपायात प्राह तेजोमयी तत ॥
बलवानुत्तमप्रायात्तो वीर्य्यं किञ्चास्ति वा त्वयि ।
आशु प्रकथ्यते सत्त्वं पृथिवीतलसम्भवम् ॥
इति प्रत्युक्तवान् वायुः वायुस्तत्रैव तिष्ठति ।
आनन्त्येन तृणमिति निदधौ वायवे तृणम् ॥
वायुः सर्व्वप्रयत्नेन नादातुं तत् क्षमोऽभवत् ।
ततो देवाः प्राहुरग्निं भीता उद्विग्नमानसाः ॥
अग्ने एतद्विजानीहि किमेतत् कर्म्म चाद्भुतम् ।
इत्युक्तो देवताश्रेष्ठैरग्निस्तेजोऽन्तिकं गतः ॥
अग्निरो जातवेदा वा तेजो याचितुं वाप तम् ।
स प्रोक्तवानग्निरस्मि सर्व्वदाहकशक्तिकः ॥
दहैतत्तृणमल्पमिति तस्मै तृणं ददौ ।
अग्निः सर्व्वप्रयत्नेन दग्धुं नैतत् क्षमोऽभवत् ॥
ततो निवृत्ते वह्निभूत्वा सोऽभवत्पान्वितः ।
एकत्रस्थाः सुराः सर्व्वे मन्त्रयामासुरुत्तमम् ॥
इयमेवेश्वरी नूनं स्तोष्यामो नेश्वरा वयम् ।
इति निश्चित्य सुधियस्तुष्टुवुः परमेश्वरीम् ॥
प्राहुर्द्देवगणाः सर्व्वे त्वमीशा नेश्वरा वयम् ।
ईश्वरत्वाभिमानेन यदस्माकं सुदुष्कृतम् ॥
तत् क्षमस्वेह तत् सर्व्वं कृपया जगदम्बिके ! ।
तव रूपं सुगोप्यं यत् सर्व्वमङ्गलम् ॥
तद्द्रष्टुं वयमिच्छामो देहि दर्शनमुत्तमम् ।
इत्युक्तानां सुरश्रेष्ठानामाविरासीच्छिवाम्बरे ॥
तेजस्यन्तर्हिते तस्मिन् चमत्कारककलेवरे ।
मृगेन्द्रोपरि सुश्रोणी सर्व्वालङ्कारभूषिता ॥
चतुर्भुजा महादेवी रक्ताम्बरधरा शुभा ।
बालार्कसदृशीदेहा नागयज्ञोपवीतिनी ॥
त्रिनेत्रा कोटिचन्द्राभा देवर्षिमुनिसेविता ।
दर्शयामास देवानामेव रूपं जगन्मयी ॥
ततस्तां तुष्टुवुर्द्देवा जगद्धात्रीं महेश्वरीम् ।
वरं प्रापुः सुरगणा यथेष्टं त्रिदशालये ॥
तत्रैवान्तर्हिता देवी महादुर्गा जगन्मयी ।
इति ते कथितं भद्रे ! विद्योत्पत्तिं सुदुर्लभाम् ॥
इति कात्यायनीतन्त्रे ७६ पटलः ॥ * ॥
श्रीशिव उवाच ।
'अथ दुर्गामनुं वक्ष्ये शृणुष्व हरवल्लभे ! ।
यस्य प्रसादमात्रेण मुच्यते भवबन्धनात् ॥
वाक्तत्त्वं समुद्धृत्य वामकर्णविभूषितम् ।
इन्दुबिन्दुसमायुक्तं बीजं परमदुर्लभम् ॥
चतुर्व्वर्गप्रदं साधकानां पातकनाशनम् ।
एकाक्षरीसमा नास्ति विद्या त्रिभुवने प्रिये ! ॥
क्रोधाद्या वा जपेद्विद्यां तदन्ते वाञ्छसुन्दरी ।
लक्ष्म्याद्यां वा जपेद्विद्यां षडर्णां वा जपेत् सुधीः ॥
वधूबीजयुतां वापि स्वाहान्तां वा जपेत् पुनः ।
लक्ष्म्याद्यां वा जपेद्विद्यां चतुर्व्वर्गफलाप्तये ॥
वाग्भवाद्यां जपेद्वापि प्रणवाद्यां जपेत् पुनः ।
कामबीजादिकां वापि षडर्णां वा जपेत् पुनः ॥
अष्टधा विविधा विद्या कथिता मया पुरा ।
विना गन्धैर्विना पुष्पैर्विना होमपुरस्सरैः ॥
प्राणायामं विना देवि ! जपमात्रेण सिद्धिदा ।
मन्त्रस्यास्य ऋषिर्द्देवि ! नारदः परिकीर्त्तितः ॥
गायत्री छन्द आख्यातं जगद्धात्री च देवता ।
चतुर्व्वर्गप्रदा दुर्गा सर्व्वमन्त्रेषु संस्थिता ॥
दीर्घस्वरसमायुक्तनिजबीजानि पार्व्वति ! ।
विन्यसेदात्मनो देहे हृदयादिषु शङ्करि ! ॥
पूर्व्ववन्न्यासपञ्चकं पूर्व्ववत् कर्म्म चाचरेत् ।
कालीवत्तारविद्यां जपहोमादिकं स्मृतम् ॥
तत्र द्वादशकैर्द्देवि ! पुरश्चरणमीरितम् ।
यथास्थाने यथाकाले यथाचारविधानतः ॥
प्रणमेत् परया भक्त्या दुर्गां दुर्गतिनाशिनीम् ॥*॥
ध्यानमस्याः प्रवक्ष्यामि शृणुष्व नगनन्दिनि ! ॥
सिंहस्कन्धाधिरूढां नानालङ्कारभूषिताम् ।
चतुर्भुजां महादेवीं नागयज्ञोपवीतिनीम् ॥
शङ्खचक्रधनुर्व्बाणलोचनत्रितयान्विताम् ।
रक्तवस्त्रपरीधानां बालार्कसदृशीतनुम् ॥
नारदाद्यैर्म्मुनिगणैः सेवितां भवसुन्दरीम् ।
त्रिवलीवलयोपेतनाभिनालमृणालिनीम् ॥
रत्नद्वीपे महाद्वीपे सिंहासनसमन्विते ।
प्रफुल्लकमलारूढां ध्यायेत्तां भवगेहिनीम् ।
एवं ध्यात्वा जगद्धात्रीं पूर्व्वोक्तपूजनं चरेत् ॥
यन्त्रमस्याः प्रवक्ष्यामि शृणुष्व हरवल्लभे ! ।
त्रिकोणमिततत्पार्श्वे चैव विन्दुवृत्तसंयुतम् ।
अष्टपत्रं ततो लिख्य त्रिरेखावेष्टितं ततः ।
चतुर्भूपुरसंयुक्तं लिखेद्दिधिनासुना ॥
तत्र तां पूजयेद्देवीं मूलप्रकृतिरूपिणीम् ।
प्रभाद्याः शक्तयः पूज्या गन्धाद्यैर्न्नवकोणके ॥
प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी पुनः ।
सुप्रभा विजया सर्व्वसिद्धिदा नव शक्तयः ॥
द्वीमाद्याः पूजयेत्तास्तु रक्तचन्दनदूर्व्वकैः ।
प्रणवाद्यनिधी देव्या वामदक्षिणयोगतः ॥
पूजयेत् परया भक्त्या रक्तचन्दनदूर्व्वकैः ।
अर्घ्यदानं ततः कुर्य्यात् पूजान्ते नगनन्दिनि ! ॥
अङ्गावृतिं पुनः पूज्या पत्रकार्ष्णेषु मातरः ।
वज्राद्यायुधसंयुक्ता भूपुरे लोकनायकाः ॥
इति कात्यायनीतन्त्रे ७७ पटलः ॥ * ॥
श्रीशिव उवाच ।
'पूजां तिथिविशेषेण चतुर्व्वर्गफलाप्तये ।
कर्त्तव्या या तु दुर्गायास्तां शृणुष्व शुभानने ! ॥
अष्टम्याञ्च चतुर्द्दश्यां नवम्यां वापि यत्नतः ।
यः पूजयेन्महादुर्गां सोऽभीष्टफलमाप्नुयात् ॥
पौर्णमास्याममायां वा रविसंक्रमणे तथा ।
शनिभौमदिने चैव पूजयेत् परमेश्वरीम् ॥
सुखं सौभाग्यमारोग्यमैश्वर्य्यं लभते ध्रुवम् ।
शनिभौमदिने चैव यदि स्यादष्टमी तिथिः ॥
तत्र पूज्या जगद्धात्री पुत्रपौत्रधनप्रदा ।
सोमवारेऽप्यमावास्या मघानक्षत्रसंयुता ।
उत्तरा श्रवणीयुक्ता चाश्विन्यादि च पार्व्वति ! ।
चतुर्थ्यङ्गारवारे च रोहिणीसंयुता यदि ॥
गुर्व्वष्टम्यां तथा स्वाती यदि स्यात् परमेश्वरि ! ।
एषु पूजा महादेव्याः कर्त्तव्या धर्मसिद्धये ॥
मधुमासे सिताष्टम्यां चैत्राख्यनिलयेऽहनि ।

पौर्णमास्यां तथा ज्यैष्ठे अमायाञ्च महेश्वरि ! ॥
मिथुनेऽर्के द्वितीयायां श्रावणे द्वादशीदिने ।
भाद्रे मास्यसिताष्टम्यां आश्विने शुक्लपक्षके ॥
सप्तम्यामेव चाष्टम्यां नवम्याञ्च विशेषतः ।
अमायां कार्त्तिके चैव नवम्यां शुक्लपक्षके ॥
नक्तं मार्गशिरे भूते पौषेऽष्टम्यां सितेतरे ।
माघे च सितपक्षम्यां फाल्गुन्यां च सुरेश्वरि ! ॥
एषु द्वादशमासेषु तिथिष्वेतासु पार्व्वतीम् ।
पूजयेत् परया भक्त्या यथाविभवविस्तरैः ॥
राजराजेश्वरो भूत्वा वसेत् कल्पायुतं दिवि ।
पुत्त्रपौत्त्रधनर्द्धीनामधिपो जायते ह्यचिरात् ॥
अन्ते देवीपुरं याति सुक्त्वा भोगान् यथेप्सि-
तान् ॥

श्रीपार्व्वत्युवाच ।
देवदेव ! महादेव ! विश्वनाथ ! महेश्वर ! ।
श्रुता तव सुखाम्भोजाद्दुर्गापूजा महाफला ॥
केन वा पूजिता देवी कस्य वा किञ्च सिध्यति ।
केन प्रकाशिता स्वर्गे तत् सर्व्वं कथय प्रभो ! ॥

श्रीशिव उवाच ।
२। नरवानरयोर्युद्धे दुर्गा रामेण पूजिता ।
अवधीद्रावणं राम इषे मासि प्रपूजनात् ॥
तेन लोकाश्चरिष्यन्ति दुर्गायाः शारदोत्सवम् ।
एवमाराध्य देवेशीमिन्द्रजिद्रावणात्मजः ॥
अभवत् कार्त्तिके यो वै दुर्गामेवं समर्च्चयन् ।
अमायां कार्त्तिके मासि तारकासुरनाशकः ॥
कुम्भराशिगते चन्द्रे नवम्यां कार्त्तिकस्य च ।
उपस्थर्द्धोदितो भानुर्दुर्गामाराध्य यत्नवान् ॥
पुनारोग्यवरं लेभे लोकशान्तिस्त्वमेव च ।
तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि ॥
प्रपूजयेत्सदा दुर्गां धर्म्मकामार्थमोक्षदाम् ।
एवं मार्गशिरे मासि वृषराशिगते विधौ ॥
चतुर्द्दश्यां निशायान्तु चन्द्रः संपूज्य पार्व्वतीम् ।
महापापाद्विमुक्तोऽसौ राजेन्द्रत्वमवाप च ॥
तेन मार्गशिरे मासि चतुर्द्दश्यां प्रपूजयेत् ।
इन्द्रत्वमेवमिन्द्रोऽसौ लेभे दुर्गां समर्च्चयन् ॥
ब्रह्मत्वमपि विष्णुत्वं रुद्रत्वञ्च महेश्वरि ! ।
देवत्वं सर्व्वदेवानामभवच्छक्तिकार्च्चनात् ॥
भूतं भव्यं भविष्यं यत् स्थावराणि चराणि च ।
सर्व्वं दुर्गाप्रभावेण स्वस्वभोगमवाप्नुयुः ॥
विना दुर्गां महेशानि ! न किञ्चिदपि वर्त्तते ।
इति ते कथितं देवि ! संक्षेपेण तवाग्रतः ॥
महादुर्गाजगद्धात्रीविद्योतपत्तिं सुदुर्ल्लभाम् ॥"
इति कात्यायनीतन्त्रे ७८ पटलः ॥
(सरस्वती । यथा, मार्कण्डेये । २३ । ३० ।
"जगद्धात्रीमहं देवीमारिराधयिषुः शुभाम् ।
स्तोष्ये प्रणम्य शिरसा ब्रह्मयोनिं सरस्वतीम् ॥")

जगद्बलः, पुं, ( जगतां बलं यस्मात् । ) वायुः । इति त्रिकाण्डशेषः ॥

जगद्योनिः, पुं, ( जगतां योनिरुत्पत्तिस्थानम् । ) शिवः । इति त्रिकाण्डशेषः ॥ ( यथा, महाभारते । ७ । २०० । १३ ।
"जगद्योनिं जगद्बीजं जयिनं जगतो गतिम् ॥")
विष्णुः । इति तस्य सहस्रनाम ॥ (यथा, विष्णुपुराणे । १ । १२ । ३२ ।
"ते समेत्य जगद्योनिमनादिनिधनं हरिम् ॥"
केचित्तु हरिविशेषणं कल्पयन्ति ।)
ब्रह्मा । ( यथा, कुमारे । २ । ९ ।
"जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ॥")
पृथिवी स्त्री । इति शब्दचन्द्रिका ॥

जगद्वहा, स्त्री, ( जगन्ति वहति धारयतीति । वह + अच् । अजादित्वात् टाप् । ) पृथिवी । इति त्रिकाण्डशेषः ॥

जगद्विनाशः, पुं, ( जगतां विनाशो ध्वंसः अखिलकार्य्यनाश इत्यर्थः यस्मिन् । ) युगान्तः । इति हलायुधः ॥ ( प्रलयकाले च अखिलकार्य्यनाशत्वं यथाह मनुः । १ । ५२—५४ ।
"यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति ॥
तस्मिन् स्वपिति तु स्वस्थे कर्म्मात्मानः शरीरिणः ।
स्वकर्म्मभ्यो निवर्त्तन्ते मनश्च ग्लानिमृच्छति ॥
युगपत्तु प्रलीयन्ते तदा तस्मिन् महात्मनि ।
तदायं सर्व्वभूतात्मा सुखं स्वपिति निर्वृतः ॥" )

जगन्नाथः, पुं, (जगतां नाथ ईश्वरः । ) विष्णुः । इति हेमचन्द्रः ॥ (यथा, देवीभागवते ।१।४।३६।
"देवदेव ! जगन्नाथ ! भूतभव्यभवत्प्रभो ! ।
तपश्चरसि कस्मात् त्वं किं ध्यायसि जनार्द्दन ! ॥")
पुरुषोत्तमक्षेत्रम् । यथा,
मुनय ऊचुः ।
"पुरुषोत्तमाख्यं सुमहत् क्षेत्रं परमपावनम् ।
यत्रास्ते दारवतनुः श्रीशो मानुषलीलया ॥
दर्शनान्मुक्तिदः साक्षात् सर्व्वतीर्थफलप्रदः ।
तन्नो विस्तरतो ब्रूहि तत् क्षेत्रं केन निर्म्मितम् ॥
ज्योतिःप्रकाशो भगवान् साक्षान्नारायणः प्रभुः ।
कथं दारुमयस्तस्मिन्नास्ते परमपूरुषः ॥"
जैमिनिरुवाच ।
एतत् क्षेत्रवरञ्चास्य वपुर्भूतं महात्मनः ।
स्वयं वपुष्मान् यत्रास्ते सनाम्नाख्यापितं हि तत् ॥
यथा चासुदिनं देवाः सिद्धाः ब्रह्मर्षयस्तथा ।
समर्च्चितुमिहायान्ति देवेशं न तथान्यतः ॥
अहो ! तत् परमं क्षेत्रं विस्तृतं दशयोजनैः ।
तीर्थराजस्य सलिलादुत्थितं बालुकाचितम् ॥
नीलाचलेन महता मध्यस्थेन विराजितम् ।
एकं स्तनमिवावन्याः सुदूरात् परिभावितम् ॥"
ब्रह्माणं प्रति विष्णुवाक्यम् ।
"सागरस्योत्तरे तीरे महानद्यास्तु दक्षिणे ।
स प्रदेशः पृथिव्यां हि सर्व्वतीर्थफलप्रदः ॥
एकाम्रकाननाद्यावद्दक्षिणोदधितीरभूः ।
पदात् पदात् श्रेष्ठतमः क्रमेण परिकीर्त्तितः ॥
सिन्धुतीरे च यो ब्रह्मन् ! राजते नीलपर्व्वतः ॥
पृथिव्यां गोपितं स्थानं तव चापि सुदुर्लभम् ॥
सुरासुराणां दुर्ज्ञेयं मायया च्छादितं मम ।
सर्व्वसङ्गपरित्यक्तस्तत्र तिष्ठामि देहभृत् ॥
क्षराक्षरालयेनासि नाक्रान्तं क्षेत्रं मे पुरुषोत्तमम् ।
नीलाद्रेरन्तरस्ति कल्पन्यग्रोधमूलतः ॥
वारुण्यां दिशि यत् कुण्डं रोहिणं नाम विश्रुतम् ॥
तत्तीरे निवसन्तो मां पश्यन्तश्चर्म्मचक्षुषा ॥
तदम्भसा क्षीणपापा मम सायुज्यमाप्नुयुः ॥
व्रतेषु तीर्थेषु च यज्ञदानयोः
पुण्यं यदुक्तं विमलात्मनां हि ।
अहर्निवासात्तदिहैव सर्व्वं
निमेषवासात् खलु चाश्वमेधिकम् ॥
जैमिनिरुवाच ।
उदकार्त्तः समागत्य कृतसिद्धायनोत्तमः ।
कारणोदकमस्पृष्टे तस्मिन् कुण्डे निमज्जितः ॥
विलोक्य माधवं नीलरत्नकान्तिं कृपानिधिम् ।
काकदेहं समुत्सृज्य लुठमानं मुहुः क्षितौ ।
शङ्खचक्रगदापाणिस्तस्य पार्श्वे व्यवस्थितः ॥"
यमं प्रति लक्ष्मीवाक्यम् ।
"पञ्चक्रोशमिदं क्षेत्रं समुद्रान्तर्व्यवस्थितम् ।
त्रिकोणं तीर्थराजस्य तटभूमौ सुनिर्म्मलम् ॥
सुवर्णबालुकाकीर्णं नीलपर्व्वतशोभितम् ।
योऽसौ विश्वेश्वरो देवः साक्षान्नारायणात्मकः ॥
संयम्य विषयग्रामं समुद्रतटमाश्रितः ।
उपासितुं जगन्नाथं चतुःषष्ठ्युत्तमः प्रभुः ॥
यमेश्वर इति ख्यातो यमसंयमनात्मनः ।
यं दृष्ट्वा पूजयित्वा तु कोटिलिङ्गफलं लभेत् ॥
सीमा प्रतीची क्षेत्रस्य शङ्खाकारस्य मूर्द्धनि ।
शङ्खाग्रे नीलकण्ठः स्यादेतत् क्षेत्रं सुदुर्लभम् ॥
परमं पावनं क्षेत्रं साक्षान्नारायणस्य वै ।
शङ्खस्योत्तरभागस्तु समुद्रोदकसंप्लुतः ॥
यत्सम्पर्कात् समुद्रोऽस्य तीर्थराजत्वमागतः ।
यत्रायं भगवान्मुक्तिप्रदो दृष्टिपथं गतः ॥
तदिदं मरणात् क्षेत्रं सिन्धुस्नानाद्विमुक्तिदम् ।
चिच्छेद ब्रह्मणः पूर्व्वं रुद्रः क्रोधात्तु पञ्चमम् ॥
तच्छिरो दुस्त्यजं गृह्णन् ब्रह्माण्डं परिबभ्रमे ।
तत्रागतो यदा ब्रह्मकपालं परिसृष्टवान् ॥
कपालमोचनं तीर्थं द्वितीयावर्त्तसंस्थितम् ।
तस्य दक्षिणपार्श्वे तु मरणं भवमोचनम् ॥
तृतीयावर्त्तसीमायां शक्तिं मे विमलाह्वयाम् ।
जानीहि धर्म्मराज ! त्वं भुक्तिमुक्तिफलप्रदाम् ॥
नाभिदेशे स्थितं ह्येतत् स्वयं कुण्डं वटो विभुः ।
कपालमोचनं यावद्दक्षिणनी प्रतिष्ठिता ॥
नाभिं शङ्खस्य जानीयात् सुगुप्तं चक्रपाणिना ।
तां दृष्ट्वा प्रणमेद्यस्तु भोगान् सोऽश्नाति शाश्व-
तान् ॥
सिन्धुराजस्य सलिलात् यावन्मूलं वटस्य वै ।
कीटपक्षिमनुष्याणां मरणान्मुक्तिदो मतः ॥
अन्तर्व्वेदी त्वियं पुण्या वाञ्छ्यते त्रिदशैरपि ।
अत्र स्थितान् हि पश्यन्ति सर्व्वांश्चक्रायुधधारिणः ॥
कामाख्या क्षेत्रपालश्च विमला चान्तरा स्थिता ।
साक्षाद्ब्रह्मस्वरूपोऽसौ वृसिंहो दक्षिणे विभोः ॥
अन्तर्वेद्या रक्षणार्थं शक्त्योऽष्टौ प्रकल्पिताः ।
उग्रेण तपसा पूर्व्वमहं सर्व्वेण भाविता ॥
पत्न्यर्थं सा मया सृष्टा गौरी तस्याश्च भाविनी ।
सर्व्वसौन्दर्य्यवसतिर्वपुषो मे विनिर्गता ॥
तदा दृष्टा मया भद्रे ! वचनं मे प्रियं कुरु ।
अन्तर्व्वेदीं रक्ष मम परितः ...भिः ॥

त्रुष्टुभं मन्त्रराजं सहस्रं प्रजजाप ह ॥
शाखस्यामले पक्षे अष्टम्यां पुष्ययोगतः ।
ता प्रतिष्ठा भो विप्राः शोभने गुरुवासरे ॥”
महाप्रसादमाहात्म्यं यथा,—
बहून् नियोजयेत्तत्र लोकान् त्रैवर्गिकानुत ।
लौकिकव्यवहारोऽयं पचति श्रीः स्वयं भुवम् ।
भुङ्क्ते नारायणो नित्यं तथा पक्वं शरीरवान् ॥
अमृतं तद्धि नैवेद्यं पावनं मूर्द्ध्नि धारयन् ।
सुरापानादिमहादुरितनाशनम् ॥
नाशयत्यमानसं पापं दर्शनाद्दृष्टिजं तथा ।
आस्वादाद्वाक्कृतं पापं श्रावणाच्च व्यपोहति ॥
स्पर्शनात्त्वक्कृतं पापं मिथ्यालापं तथा द्विजाः ॥
मात्रे लेपाद्दहेत् पापं शारीरं वै न संशयः ॥

महापवित्रं हि हरेर्निवेदितं
नियोजयेद्यः पितृदेवकर्म्मसु ।
तृप्यन्ति सर्व्वे पितरः सुराश्च
प्रयान्ति लोकं मधुसूदनस्य ॥

गतः परं हि वक्ष्यामि हव्यकव्येषु भो द्विजाः ॥
नराणां रूपमास्थाय तदश्नन्ति दिवौकसः ॥
विष्ण्वालयगतं तद्धि निर्म्माल्यं पतितादयः ।
स्पृशन्ति चेन्न दुष्टं हि यथा विष्णुस्तथैव तत् ॥
निन्दन्ति ये तदमृतं मूढाः पण्डितमानिनः ।
स्वयं दण्डधरस्तेषु सहते नापराधिनः ॥
येषामत्र न दण्डश्चेद्ध्रुवा तेषां हि दुर्गतिः ।
कुम्भीपाके महाघोरे पच्यन्ते तेऽतिदारुणे ॥
चिरस्थमपि संशुष्कं नीतं वा दूरदेशतः ।
यथा तथोपयुक्तं तत् सर्व्वपापापनोदनम् ॥
नैवेद्यान्नं जगन्नाथगाङ्गं वारि समं द्वयम् ।
दृष्टिस्पर्शनचिन्ताभिर्भक्षणादघनाशनम् ॥”

इत्युत्कलखण्डम् ॥ * ॥

स च कलेर्दशसहस्रवर्षपर्य्यन्तं पृथिव्यां स्थास्यति। यथा,—

“शालग्रामो हरेर्मूर्त्तिर्जगन्नाथश्च भारतम् ।
कलेर्दशसहस्रान्ते ययौ त्यक्त्वा हरेः पदम् ॥”

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

(स्वनामख्यातो बहुलग्रन्थकर्त्ता पण्डितविशेषः । अयं हि तैलङ्गवंशोद्भवः । अस्य पिता पेरमभट्ट इति ख्यातः । असौ पण्डितराजजगन्नाथो दिल्लीप्रभोः शाहजहान्-ज्येष्ठसूनोर्यवनस्य दाराशाहस्य सभायामासीत् । यतोऽनेन जगदाभरणकाव्ये दाराशाहस्यैव यशोवर्णनं कृतम्। अपिच भामिनीविलाससमाप्तौ “दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः” इत्युक्तम् । दाराशाहस्तु १५८१ एकाशीत्यधिकपञ्चदशशतशकाब्दपर्य्यन्तं जीवित आसीत् । अतः पण्डितराजजगन्नाथोऽयं तात्कालिक इत्येवायातम् । अनेन पण्डितराजपदवी शाहजहानस्मात्तो दिल्लीप्रभोः प्राप्तेति तत्कृतासफविलासनामकग्रन्थादेवागम्यते यथा,—

“अथ सकललोकविस्तारविस्तारितमहोपकारपरम्पराधीनमानसेन प्रतिदिनमुद्यदनवद्यगद्यपद्याद्यनेकविद्याविद्योतितान्तःकरणैः कविभिरुपास्यमानेन कृतयुगीकृतकलिकालेन क्रमतिक्रम्यजालसमाच्छादितवेदवनमार्गविलोकनाय समुद्दीपितसुतर्कदहनज्वालाजालेन मूर्त्तिमतेव नव्वावासफखानमनःप्रसादेन माथुरकुलसमुद्रेन्दुना रायमुकुन्देनादिष्टेन सार्व्वभौमश्रीशाहजहान्प्रसादाधिगतपण्डितराजपदवीविराजितेन तैलङ्गकुलावतंसेन पण्डितजगन्नाथेनासफविलासाख्येयमाख्यायिका निरमीयत। सेयमनुग्रहेण सहृदयानामनुदिनमुल्लासिता भवतात् ॥”

एतत्पण्डितविरचिता बहवो ग्रन्था: सन्ति । तेषु अद्यावधि ज्ञातास्त्वेते, रसगङ्गाधरः १, यमुनावर्णनचम्पूः २, रतिमन्मथनाटकम् ३, वसुमतीपरिणयनाटकम् ४, जगदाभरणकाव्यम् ५, प्राणाभरणकाव्यम् (कामरूपदेशाधिपस्य प्राणनारायणमहीपस्य स्तुतिरूपोऽयं ग्रन्थः) ६, पीयूषलहरी ७, अमृतलहरी ( यमुनास्तुतिरूपोऽयं ग्रन्थः ) ८, सुधालहरी ( सूर्य्यस्तवरूपोऽयं ग्रन्थः ) ९, करुणालहरी ( विष्णुलहरी वा ) १०, लक्ष्मीलहरी ११, भामिनीविलासः १२, मनोरमाकुचमर्द्दिनी १३, अश्वधाटीकाव्यम् १४, आसफविलासः १५ ॥ * ॥

तर्कपञ्चाननोपाधिकोऽपरपण्डितविशेषः। अयं हि विवादभङ्गार्णवसेतु-रामचरितादिग्रन्थानां प्रणेता । पितास्य रुद्रदेवः माता च अम्बिका। रुद्रदेवस्तु चतुःषष्टितमवयसि पूर्व्वसहधर्म्मिण्यां सन्ततायां मृतायां संसारविरक्तः काशीवाससुखमभिलषन् चिरसुहृदं त्रिवानन्दपुरनिवासिनं ज्योतिर्विद्याविशारदं सुप्रसिद्धं चन्द्रशेखरवाचस्पतिमभिगम्य स्वीयान्तिमदशाफलाफलं पृष्टवान् । चन्द्रशेखरस्तु रुद्रदेवस्य जन्मलग्नानुसारतश्चरमे वयसि सुप्रसिद्धपुत्त्रलाभरूपं शुभफलमवगम्य वासुदेवनाम्नः कस्यचिद् विप्रवरस्याम्बिकानाम्नीं कन्यामुद्वाहयामास। रुद्रदेवस्तु ज्योतिर्विद्यापारदर्शिनश्चन्द्रशेखरस्य वाक्यादम्बिकां परिणीय सत्पुत्त्रप्राप्तिकामो काशीमभिगम्य विश्वेश्वरमुद्दिश्यैकविंशतिपुरश्चरणं कृतवान्। चरमपुरश्चरणदिवसीययामिन्याः शेषयामे प्राप्तसत्पुत्त्रलाभस्वप्नः प्रहृष्टमनाः पुनः स्वस्थानं त्रिवेणीप्रदेशं प्रत्यावृत्य गार्हस्थ्यधर्म्मानुरक्तो बभूव । अथ गच्छति काले पतिपरायणाम्बिका गर्भमुपलभ्य १६१६ शके (११०१ परिमितवङ्गाब्दे) सौराश्विनस्य देवीपक्षीयपञ्चम्यां पुत्त्ररत्नं जगन्नाथं प्रसूतवती। रुद्रदेवस्तु नवजातपुत्त्रस्य जातसंस्कारादिकं विधाय राश्यनुसारतो रामराम इति नाम चक्रे परं कुमारस्य मातामहो वासुदेवः अस्मिन्नेव समये श्रीजगन्नाथक्षेत्रात् तीर्थस्थानात् प्रत्यावृत्य दौहित्रमुखं दृष्ट्वा जगन्नाथ इत्याख्ययैनमयोजयत्। ततः प्रभृत्येवायं जगन्नाथ इति नाम्ना प्रसिद्धोऽभूत् ।

अयन्तु बाल्यावस्थायामतीवचञ्चलप्रकृतिर्दुर्दान्तोऽपि स्मृतिशक्तिसत्यवादितादिगुणनिकरेण बहूनां नितरां प्रियपात्रमासीत् । अयं प्रथमतः पितृसन्निधाने व्याकरणमधीत्य ततो ज्येष्ठतातस्य न्यायलङ्कारोपनामकस्य भवदेवस्य समीपे साहित्यादिकमधीतवान् । ततो भवदेवस्य परलोकप्राप्त्यनन्तरं कामालपुरनिवासिनं रघुदेवविद्यावाचस्पतिं अध्यापकत्वेन स्वीकृत्य दर्शनशास्त्रादिचिन्तया कालं यापयामास। अस्य एतादृशी प्रखरा स्मृतिशक्तिरासीत् यदनधीतस्यापि भिन्नदेशीयभाषायां निबद्धस्य ग्रन्थस्य द्वित्रिपत्राणि एकवारमात्रमाकर्ण्यैवायं अनर्गलं अभ्रान्त इव आवर्त्तयितुं समर्थः । एतादृशीमेधाशक्तिरेवैनं अल्पसमयेन बहुशास्त्रपारयायिनमकरोत् ।

पञ्चदशवर्षसमय एवायं द्रौपदीनाम्नीं सुलक्षणां कन्यामुपनीतवान् । विवाहात् परमेवास्य ज्येष्ठतातो भवदेवः परलोकं गतः । माता तु पूर्व्वमेव कालधर्म्ममुपगता पिता च चतुर्व्विंशतिवयस्कमेनमवलोक्यैव इह लोकं तत्याज। पितृवियोगानन्तरमेवायं छात्रानध्यापयितुं प्रवृत्त आसीत्।

अथ कदाचित् वर्द्धमानाधिपतिर्महाराजत्रिलोकचन्द्रबाहादुरोऽस्य पाण्डित्यप्रभावमवगम्य राजसभामधिरोहयितुं निमन्त्रयामास। जगन्नाथस्तु राजप्रसादमुपलब्धुं राजसभां प्रविश्य तर्कजालेन तत्रस्थान् पण्डितान् जितवान् । महीपतिस्तु जगन्नाथस्य तादृशीं बुद्धिशक्तिं मेधाशक्तिञ्चावलोक्य विशेषेण परीक्षितुं पथि दृष्टस्य समग्रवस्तुनो वार्त्तां विज्ञापयितुमादिदेश । जगन्नाथस्तु नृपतेर्मनोऽभिप्रायमवगम्य त्रिवेणीप्रदेशात् वर्द्धमानपर्य्यन्तं यावत् पथि स्थितानां प्रत्येकपादपमन्दिराणामपि वृत्तान्तं कथयामास। राजा तु स्वकर्म्मचारिभिरेतद्वृत्तान्तस्य याथार्थ्यमुपगम्य सातिशयेनानन्दितो बभूव ।

एकदा मुर्शिदावादाख्यप्रदेशनृपतेर्यवनस्य मन्त्री नन्दकुमारोऽस्य पाण्डित्यमवगम्य (नवाब) महीपतिसमीपमेनमानयामास। नृपतिस्तु बहुविधैर्दुरूहप्रश्नैरेनं वञ्चयितुमभिललाष परं जगन्नाथः स्वीयबुद्धिप्राखर्य्येण नृपतिकृतप्रश्नानां सदुत्तरं दत्त्वा तं सन्तोष्य च तस्माद् बहुलार्थप्रदां भूम्यादिसम्पत्तिं लब्धवान् ।

अथ कालचक्रगत्यनुसारतो यवनराजानां वैभवरविरस्तं गतः इंराजराजानां सौभाग्यसमयः समुपागतश्च। तदा इंराजनृपतयस्तदानीन्तनप्रजारञ्जनार्थं विचारकार्य्यस्य सौकर्य्याय जगन्नाथतर्कपञ्चाननं समाहूय व्यवहारोपयोगिनं ग्रन्थमेकं प्रणेतुमादिदेश । जगन्नाथस्तु नवीननृपतिभिस्तथादिष्टः “विवादभङ्गार्णवसेतु” नामकं ग्रन्थं प्रणीतवान् ।

अस्य द्विषष्टितमवयसि सहधर्म्मिणी द्रौपदी बहुपुत्त्रपौत्त्रादिकं संरक्ष्य परलोकं गता । अस्य द्वौ पुत्त्रौ तिस्रः कन्याश्चाभवन्। पुत्त्रयोर्घनश्यामसार्व्वभौम एव ज्येष्ठः प्रतिभाशाली बहुशास्त्र-

ड प्राणे। बले। इति कविकल्पद्रुमः। (भ्वा-पर अक सक च सेट।) पञ्चमस्वरी। ड तुड्यते। प्राणो जीवनम्। हिंसायामपीत्येके इति कश्चित्। इति दुर्गादासः॥

तुञ्ज ड क भाषार्थे। इति कविकल्पद्रुमः॥ (चुरा पर अक सक च सेट।) पञ्चमस्वरी। ड क, तुञ्जयति। भा दीप्तिः। षड्‌ार्थो निके तनहिंसावलदानानि। इति दुर्गादासः॥

तुट ध्नि कलहे। इति कविकल्पद्रुमः॥ (तुदा-पर-अक सेट।) ध्नि, तुटति अतुटीत् नीचः परस्परं वचसा। तुतोट। इति दुर्गादासः॥

तुटम पु (तुटति नाशयति द्रव्यजातमिति। तुट+बाहुलकात् उम।) उन्दुरः। इति त्रिकाण्डशेषः॥

तुड, इ ड वधे। इति कविकल्पद्रुमः॥ (भ्वा-आत्म सक सेट।) पञ्चमस्वरी। इ, तुण्ड्यते। ड तुण्डते। वधो निष्पीडनमिति रमानाथः। तुण्डते पान्थं भिक्षुः। इति दुर्गादासः॥

तुड ऋ वधे। इति कविकल्पद्रुमः॥ (भ्वा पर सक सेट।) पञ्चमस्वरी। ऋ अतुतोडत्। वधो द्विधाकरणमिति गोविन्दभट्टः। तोडति मल्लो मल्लाङ्गं भिनत्तीत्यर्थः। इति दुर्गादासः॥

तुड, ध्नि भेदे। इति कविकल्पद्रुमः॥ (तुदा पर सक सेट।) ध्नि, तुडति अतुडीत् तुतोड। उपहनने इति कश्चित्। इति दुर्गादासः॥

तुड्ड नादरे। इति कविकल्पद्रुमः॥ (भ्वा पर सक सेट।) पञ्चमस्वरी उद्दयाम्यः। नादर अनादरः। तुड्डति। षत्वाभावात् अदन्तुड्डत्। इति दुर्गादासः॥

तुण ध्नि कौटिल्ये। इति कविकल्पद्रुमः॥ (तुदा पर सक सेट।) कौटिल्यमिह कुटिलीकरणम्। ध्नि, तुणति क्षेत्रं वायुः। तोणिता। इति दुर्गादासः॥

तुणि, पु (तुणति सङ्कोचयतीति। तुण कौटिल्ये+ 'सर्व्वधातुभ्य इन्।' उणां। ४। ११७। इति इन्।) कुणि। तुन्नवृक्षः। इत्यमरटीकायां स्वामी। (अस्य पर्य्याया गुणाश्च यथा,—
'तुणिस्तुन्नक आपीनस्तुणिकः कच्छकस्तथा।
कुवेरकः कान्तलको नन्दिवृक्षश्च नन्दकः॥
तुणो रक्तः कटुः पाके कषायो मधुरो लघुः।
तिक्तः शीतो हिमो वृष्यो व्रणकुष्ठास्रपित्तजित्॥'
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे।)

तुण्ड क्ली (तुण्डते निष्पीडयति अभ्यन्तरस्य द्रव्यमिति। तुण्ड+पचाद्यच्।) मुखम्। इत्यमरः। २। ६। ८९। (यथा, श्रीमद्भागवते। १०। १। ७६।
'आमिषं न तु निधाय शीघ्रमभ्यद्रवत् द्रुतम्।
तुण्डं तुण्डमयाकारो मातुर्भो ममपक्षगः॥'
पुं महादेवः। यथा महाभारते अनुशासनपर्व्वणि। १५। १५।
'नमस्तुण्डाय तुण्डाय नमस्तुण्डितुण्डाय च॥'
शाखानिधिः। यथा, महाभारते।३। ८४।८।
रत्नं च मत्स्यश्च पन्तुं पन्नगं च॥)

तुण्डकेरिका, स्त्री कार्पासी। इति राजनिर्घण्टः॥

तुण्डकेरी, स्त्री, (प्रशस्तं तुण्डम्। प्रशंसायां कन्। तदीरयति ईरयति वा तत्तुल्यशोभाधारणात्। ईर+कर्म्मण्यण्। स्त्रियां ङीष्।) बिम्बिका। इत्यमरटीकायां भरतः॥ तेलाकुचा इति भाषा॥

तुण्डि, पु, (तुण्डते निष्पीडयति मध्यस्थद्रव्यमिति। तुण्ड+"सर्व्वधातुभ्य इन्।" उणां। ४। ११७। इतीन्।) मुखम्। चञ्चुः। इत्युणादिकोषः॥ नाभौ स्त्री। इति शब्दरत्नावली॥

तुण्डिका स्त्री (तुण्डिरेव। तुण्डि+स्वार्थे कन् टाप् च।) नाभिः। बिम्बिका। इति शब्दरत्नावली॥ (अस्या गुणा यथा —
"तुण्डिका चाग्निरुचिकृद्वातपित्तनिवारणी॥"
इति हारीते प्रथमे स्थाने दशमेऽध्याये॥)

तुण्डिकेरी, स्त्री, कार्पासी। बिम्बिका। इत्यमरः। २। ४। ११६॥ (अस्याः पर्य्याया यथा,
'तुण्डी रक्तफला बिम्बी तुण्डिकेरी च बिम्बिका॥"
इति वैद्यकरत्नमालायाम्॥)
अस्या रूपान्तराणि। तुण्डिकेरिका तुण्डिकेरिः तुण्डकेरी तुण्डिकशी। इत्यमरटीका॥

तुण्डिकशी, स्त्री बिम्बिका। इति शब्दचन्द्रिका॥

तुण्डिभ, त्रि, (तुण्डिर्वृद्धा नाभिरस्य। 'तुन्दिवलिवटेर्भः।" ५।२।१४०। इति भः। "वृद्धनाभिस्तु तुण्डिः।" इति माधवः।) वृद्धनाभिः। वृद्धनाभियुक्तः। इत्यमरः। २। ६। ६१॥

तुण्डिल, त्रि, (तुण्डिरस्त्यस्येति। सिध्मादित्वात् इलच्।) वृद्धनाभिः। इत्यमरः। २।६।६१॥ मुखरः। इत्युणादिकोषः॥

तुत्थ, त क स्तुतौ। इति कविकल्पद्रुमः॥ (अदन्त चुरा पर सक सेट।) आद्यः पञ्चमस्वरः शेषो दन्त्यवर्गाद्ययुक्ताद्यकारः। तुत्थयति तुत्थापयति। स्तुतिराच्छादनम्। इति दुर्गादासः॥

तुत्थ, क्ली (तुदति पीडयत्यनेन। तुद+"पातृतुदीति।" उणां २। ७। इति थक्। यद्वा, तुत्थ आच्छादने+अच्।) खर्परीतुत्थम्। उपधातुभेदः। तुतिया इति भाषा। तत्पर्य्यायः। नीलाञ्जनम् २ हरिताश्मम् ३ तुत्थकम् ४ मयूरग्रीवकम् ५ ताम्रगर्भम् ६ अमृतोद्भवम् ७ मयूरतुत्थम् ८ शिखिकण्ठम् ९ नीलम् १०। इति राजनिर्घण्टः॥ तुत्थाञ्जनम् ११ शिखिग्रीवम् १२ वितुन्नकम् १३ मयूरकम् १४। इत्यमरः। २।९।१०१॥ तूतकम् १५ अमृतासुतम् १६ ह्रतामृतम् १७। इति शब्दचन्द्रिका॥ अस्य गुणाः। कटुत्वम्। कषायत्वम्। उष्णत्वम्। श्वित्रनाशमयनाशित्वम्। सर्व्वविषदोषशमनत्वम्। वान्तिकारकत्वञ्च। इति राजनिर्घण्टः॥ क्षारत्वम्। निर्म्मलत्वम्। लघुत्वम्। भेदकत्वम्। लेखककण्डूकुष्ठकफनाशित्वञ्च। इति राजवल्लभः॥ ॥
'तुत्थं वितुन्नकं चापि शिखिग्रीवं मयूरकम्।
तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण
किञ्चित्ताम्रगुणं तस्मात् ताम्रसमगुणञ्च
तुत्थकं कटुकं क्षारं कषायं वामकं
लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत्
विषाश्मकुष्ठकण्डूघ्नं खर्परं चापि
इति भावप्रकाशस्य पूर्व्वखण्डे १
(अस्य शोधनविधिर्यथा,—
"ओतोर्विड्सम तुत्थं यचौद्र
त्रिधा सुपुटितं शुद्धं
अन्यच्च।
"शम्बूकेन समं तुत्थं
वान्तिभ्रान्ती यदा न स्तस्तदा सिद्धि

शोधितस्यास्य गुणा यथा,—
"तुत्थं सकटुकक्षारं कषायं विशदं लघु
लेखनं भेदि चक्षुष्य
इति वैद्यकरसेन्द्रसारसंग्रहे

रसाञ्जनम्। यावा। इत्युणादिकोषः॥
इति संक्षिप्तसारे उणादिवृत्तिः॥
इति हेमचन्द्रः॥

तुत्थक, क्ली (तुत्थमेव। स्वार्थे कन्।) इति शब्दचन्द्रिका॥ (अस्य गुणाः
'तुत्थकं कटुकं क्षारं कषायं वामकं
लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत्
विषाश्मकुष्ठकण्डूघ्नं खर्परश्चापि
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे

तुत्था, स्त्री (तुत्थ+टाप्।) नीलीवृक्षः। इत्यमरः। २। ४। ९५॥ महानीली राजनिर्घण्टः॥

तुत्थाञ्जन क्ली, (तुत्थयति तुत्थते वा। अच्। तुत्थञ्च तदञ्जनञ्चेति उपधातुविशेषः। तुत्थम्। इत्यमरः। २।

तुद, श ञ औ व्यथे। इति कविकल्पद्रुमः॥ (तुदा उभ सक अनिट।) श ञ, तुदति औ तोत्ता। अथ दध आत्मस्य तुतोद गदया चारिम्। इति भट्टिः॥ तुदः। इति दुर्गादासः॥

तुन्द क्ली, (तुदतीति। तुद+ उणां ४। ९८। इति दन् तुडेर्नुम् च ततो दस्य लोपः।) जठरम्। २। ६। ७७॥

तुन्दकूपिका, स्त्री, (तुन्दः कूप कूपिका। उदरस्य कूपिकेव।) नाभिः। इति १। २। ७०॥

तुन्दकूपी, स्त्री (तुन्दस्य उदरस्य कूपी इव।) नाभिः। इति त्रिकाण्डशेषः॥

तुन्दपरिमार्ज, त्रि, (तुन्दमुदरं परि+मृज+अण्।) तुन्दपरिमृज। मरटीकायां रमानाथः॥ (परिमार्ज्यं यस्य।" इति १। २। ५॥)

तुन्दपरिमृजः, त्रि, ( तुन्दमुदरं परिमार्ष्टीति । परि+मृज+"तुन्दशोकयोः परिमृजापनुदोः ।" ३ । २ । ५ । इत्यत्र "आलस्यसुखाहरणयो-रिति वक्तव्यम् ।" इति वार्त्तिकोक्त्या कः । ) अलसः । इत्यमरः । २ । १० । १८ ॥

तुन्दि, स्त्री, ( तुद+इन् बाहुलकात् नुम् च । ) उदरम् । इति हेमचन्द्रः । ३ । २६८ ॥ गन्धर्व्व-विशेषे, पुं । इति जटाधरः ॥

तुन्दिः, स्त्री, ( तुद्+इन् बाहुलकात् नुम् च । ) नाभिः । इति त्रिकाण्डशेषः ॥

तुन्दिकः, त्रि, ( अतिशयितं तुन्दमुदरमस्त्यस्य । "तुन्दादिभ्य इलच ।" ५ । २ । ११७ । इति चकारात् ठन् । ) विशालजठरो जनः । इति शब्दरत्नावली ॥

तुन्दिका, स्त्री, ( तुन्दमुदरं आश्रयत्वेनास्त्यस्याः । तुन्द+ठन् टाप् च । ) नाभिः । इति शब्द-रत्नावली ॥

तुन्दितः, त्रि, तुन्दिलः । इति भरतस्य द्विरूप-कोषः ॥

तुन्दिभः, त्रि, (तुन्दिर्वृद्धा नाभिरस्त्यस्येति । तुन्दि+"तुन्दिवलिवटेर्भः ।" ५ । २ । १३९ । इति भः । ) तुन्दिलः । इति शब्दरत्नावली ॥

तुन्दिलः, त्रि, ( तुन्दं विशालमुदरमस्त्यस्येति । तुन्द+"तुन्दादिभ्य इलच ।" ५ । २ । ११७ । इतीलच् । ) विशालजठरो जनः । भुँड़े इति भाषा ॥ तत्पर्य्यायः । पिचिण्डिलः २ बृहत्-कुक्षिः ३ तुन्दिकः ४ तुन्दिभः ५ तुन्दी ६ । इति शब्दरत्नावली ॥

तुन्दिलफला, स्त्री, ( तुन्दिलवत् फलमस्याः । ) त्रपुषी । इति राजनिर्घण्टः ॥

तुन्दी, स्त्री, ( तुन्दि+वा ङीष् । ) नाभिः । इति शब्दरत्नावली ॥

तुन्दी, [ न् ] त्रि, (तुन्दं विशालमुदरमस्त्यस्येति । "तुन्दादिभ्य इलच ।" ५ । २ । ११७ । इति चकारात् इनिः । ) तुन्दिलः । इति शब्द-रत्नावली अमरश्च ॥

तुन्नः, पुं, (तुद्यते इति । तुद+क्तः । ) नन्दी-वृक्षः । तुँद इति भाषा । इत्यमरः । २ । ४ । १२७ ॥ त्रि, व्यथितः । ( यथा, रामायणे । २ । १४ । २३ ।

"स तुन्न इव तीक्ष्णेन प्रतोदेन हयोत्तमः । राजा प्रचोदितोऽभीक्ष्णं कैकेयीमिदमब्रवीत् ॥"

छिन्ने । द्विधाकृते च ॥ )

तुन्नवायः, पुं, ( तुन्नं छिन्नं वयतीति । वे+"ह्वावा-मश्च ।" ३ । २ । २ । इत्यण् । ) सौचिकः । इत्यमरः । २ । १० । ६ ॥ दरजी इति भाषा ॥ ( यथा, मनुः । ४ । २१४ ।

"शैलूषतुन्नवायानां कृतघ्नस्यान्नमेव च ॥")

तुन्प, वधे । इति कविकल्पद्रुमः ॥ (भ्वा-परं-सकं-सेट् । ) तुम्पति । इति दुर्गादासः ॥

तुन्प, श वधे । क्लेशे । इति कविकल्पद्रुमः ॥ ( तुदां-सकं-अकं च-सेट् । ) श, तुम्पति तुतुम्प । तुप प श तुन्प श क्लिशि वधे इत्येताभ्यामेव तुम्पति तुपतीति सिद्धौ तुन्प वधे इत्यस्य भ्वादौ पाठस्तु वेदे शवन्तस्य शान्तस्य चोधा-रणभेदार्थः । इति दुर्गादासः ॥

तुन्फ, वधे । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-सकं-सेट् । ) तुम्फति । इति दुर्गादासः ॥

तुन्फ, श वधे । क्लेशे । इति कविकल्पद्रुमः ॥ ( तुदां-परं-सकं-अकं च-सेट् । ) श, तुफति तुतुम्फ । इति दुर्गादासः ॥

तुप, वधे । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-सकं-सेट् । ) तोपति । इति दुर्गादासः ॥

तुप, इ क अर्द्दने । इति कविकल्पद्रुमः ॥ ( चुरां-परं-सकं-सेट् । ) पञ्चमस्वरी । इ क, तुम्प-यति । अर्द्दनं वधः । इति दुर्गादासः ॥

तुप, प श क्लेशे । वधे । इति कविकल्पद्रुमः ॥ (तुदां-परं-अकं-सकं च-सेट् । ) प श, तुपति तुतोप । इति दुर्गादासः ॥

तुफ, वधे । इति कविकल्पद्रुमः ॥ ( भ्वा-परं-सकं-सेट् । ) तोफति । इति दुर्गादासः ॥

तुफ, प श क्लेशे । वधे । इति कविकल्पद्रुमः ॥ ( तुदां-परं-अकं-सकं च-सेट् । ) प श, तुफति तुतोफ । इति दुर्गादासः ॥

तुब, इ कि अर्द्दे । इति कविकल्पद्रुमः ॥ ( चुरां-पक्षे भ्वा-परं-सकं-सेट् । ) तवर्गाद्यादिः । पञ्चम-स्वरी । इ, तुम्बते । कि, तुम्बयति तुम्बति । अर्द्दो वधः । इति दुर्गादासः ॥

तुभ, ऌ ङ हिंसे । इति कविकल्पद्रुमः ॥ ( भ्वा-आत्मं-सकं-सेट् । ) ऌ, अतुभत् । ङ, तोभते । इति दुर्गादासः ॥

तुभ, य ग हिंसे । इति कविकल्पद्रुमः ॥ (दिवां-क्र्यां च-परं-सकं-सेट् । ) य, तुभ्यति । ग, तुभ्नाति : तुतोभ । इति दुर्गादासः ॥

तुमरः, पुं स्त्री, ( तुमुलः । रस्य लः । ) तुमुलः ॥ इत्यमरटीकायां रायमुकुटः ॥ ( क्षत्रियजाति-विशेषः । यथा, मात्स्ये । ११३ । ५३ ।

"तुमरास्तुम्बराश्चैव पद्मगा नैषधैः सह ॥")

तुमुलं, क्ली, ( तु सौत्रो धातुः+बाहुलकात् मुलक् । ) रणसङ्कुलम् । सङ्कीर्णयुद्धम् । इत्य-मरमेदिनीकरौ ॥ परस्परसम्बाधो रणसंघट्टः । इति भरतः ॥ (यथा, देवीभागवते । ५।४१।२८।

"तत्राभूत्तुमुलं युद्धं देवदानवसैन्ययोः ॥")

तुमुलः, पुं, ( तु+बाहुलकात् मुलक् । ) कलि-वृक्षः । इति मेदिनी । ले, ९८ ॥ व्याकुलो रणः । इति त्रिकाण्डशेषः ॥ ( प्रचण्डे उग्रे सङ्कुलमात्रे च त्रि । यथा, राजतरङ्गिण्याम् । ४ । ५४१ ।

"एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्ज्जितैः । सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः ॥"

तथा, महाभारते । १ । ५३ । १२ ।

"ववौ गन्धश्च तुमुलो हव्यतामनिशं तदा ॥")

तुम्बः, पुं स्त्री, ( तुम्बति नाशयत्यरुचिमिति । तुम्ब अर्द्दने+अच् । ) अलावुः । इत्यमर-टीकायां भरतः ॥ ( अलाबोः शुष्कत्वक् । यथा, हरिवंशे । ६४ । ५ ।

"सच्छिक्यतुम्बकरकौ गोपवेणुप्रवादकौ ॥")

तुम्बकः, पुं, (तुम्बति अरुचिमिति । तुम्ब+ण्वुल् । ) अलावुः । इति शब्दरत्नावली ॥ राजालावुः । इति राजनिर्घण्टः ॥

तुम्बा, स्त्री, ( तुम्ब+टाप् । ) अलावुः । इति शब्दरत्नावली ॥ ( यथा, अम्बाष्टके । ७ ।

"श्यामायतीसमविडम्बा गलेन नवतुम्बाभवीण-सविधा शं बाहुलेयशशिबिम्बाभिरामसुखसंबाधित-स्तनभरा ॥")

गवी । इति त्रिकाण्डशेषः ॥

तुम्बिः, स्त्री, ( तुम्बति नाशयत्यरुचिमिति । तुबि अर्द्दने+"सर्व्वधातुभ्य इन् ।" उणां ४ । ११७ । इतीन् । ) अलावुः । इति शब्दरत्नावली ॥ ( अलावुशब्देऽस्या विवरणं ज्ञातव्यम् ॥ )

तुम्बिका, स्त्री, (तुम्ब अर्द्दने+ण्वुल् । टापि अत इत्वम् । ) अलावुः । इति शब्दरत्नावली ॥ कटुतुम्बी । इति राजनिर्घण्टः ॥

तुम्बिनी, स्त्री, ( तुम्बति नाशयत्यरुचिमिति । तुम्ब+णिनिः ङीप् । ) कटुतुम्बी । इति राज-निर्घण्टः ॥

तुम्बी, स्त्री, ( तुम्बि+कृदिकारादिति वा ङीष् । ) अलावुः । इत्यमरः । २ । ४ । १५६ ॥ ( यथा, शान्तिशतके । ३ । १६ ।

"अरे चेतोमीन ! भ्रमणमधुना यौवनजले त्यज त्वं स्वच्छन्दं युवतिषु जलधौ पश्यसि न किम् । तनूजालीजालं स्तनयुगलतुम्बीफलयुगं मनोभूः कैवर्त्तः क्षिपति परितस्त्वां प्रति सखे ॥"

"अलावुः कथिता तुम्बी द्विधा दीर्घा च वर्त्तुला । मिष्टं तुम्बीफलं हृद्यं पित्तश्लेष्मापहं गुरु ॥ वृष्यं रुचिकरं प्रोक्तं धातुपुष्टिविवर्द्धनम् ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ ) कुलिकवृक्षः । इति रत्नमाला ॥

तुम्बीपुष्पं, क्ली, (तुम्ब्याः पुष्पमिव पुष्पमस्य । ) कला-म्बुजम् । अलावुपुष्पम् । इति हारावली । २०२ ॥

तुम्बुकं, क्ली, (तुम्ब+बाहुलकात् उकः । ) अलावु-फलम् । इति हेमचन्द्रः ॥

तुम्बुकः, पुं, (तुम्ब+बाहुलकात् उकः । ) अलावुः । इति भरतधृतहेमचन्द्रः ॥

तुम्बुरी, स्त्री, ( तुम्बवदाकारं रातीति । रा+कः । ङीष् । पृषोदरादित्वादुत्वम् । ) कुक्कुरी । धन्या-कम् । इति मेदिनी । रे, १६३ ॥

तुम्बुरु, क्ली, कुस्तुम्बुरु । इत्यमरटीकायां भरतः ॥ ( यथा, वैद्यके ।

"तुम्बुरुश्टङ्गघण्टाङ्ककन्दकं कटुरोहिणी ॥"

अस्य तैलगुणाः ।

"तुम्बुरूत्थं करञ्जोत्थं ज्योतिष्मत्युद्भवन्तथा । व्रणकुष्ठकृमिश्लेष्मशुक्रमेदोऽनिलापहम् ॥"

इति हारीते प्रथमे स्थाने नवमे ऽध्याये ॥ )

तुलसीं ये विचिन्वन्ति धन्यास्ते करपल्लवाः ॥"

इति ॥ * ॥

"संक्रान्त्यादौ निषिद्धोऽपि तुलस्यवचयः स्मृतः ।
परं श्रीविष्णुभक्तैस्तु द्वादश्यामेव नेष्यते ॥" * ॥

अथ तुलस्यवचयनिषेधकालः । विष्णुधर्म्मोत्तरे ।

"न छिन्द्यात् तुलसीं विप्रा द्वादश्यां वैष्णवः क्वचित् ॥"

गारुडे ।

"भानुवारं विना दूर्व्वां तुलसीं द्वादशीं विना ।
जीवितस्याविनाशाय न विचिन्वीत धर्म्मवित् ॥"

पाद्मे च ।

श्रीकृष्णसत्यासंवादीयकार्त्तिकमाहात्म्ये ।

"द्वादश्यां तुलसीपत्रं धात्रीपत्रञ्च कार्त्तिके ।
लुनाति स नरो गच्छेन्निरयानतिगर्हितान् ॥"

अतएवोक्तम् ।

"देवार्थे तुलसीच्छेदो होमार्थे समिधामपि ।
इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च ॥
एवं कृत्वा महापूजामङ्गोपाङ्गादिकं प्रभोः ।
क्रमादृयया सम्प्रदायं तत्तत्स्थानेषु पूजयेत् ॥"

इति श्रीहरिभक्तिविलासे ७ विलासः ॥ * ॥

अथ तुलसीविवाहः प्रतिष्ठाविधिश्च ।

श्रीवशिष्ठ उवाच ।

"विवाहं संप्रवक्ष्यामि तुलस्यास्तु यथाविधि ।
यथोक्तं पञ्चरात्रे वै ब्रह्मणा भाषितं पुरा ॥
आरादेव वनेऽवाप्य तुलसीं स्वगृहेऽपि वा ।
वर्षत्रयेण पूर्णेन ततो यजनमारभेत् ॥
सौम्यायने प्रकर्त्तव्यं गुरुशुक्रोदये तथा ।
अथवा कार्त्तिके मासि भीष्मपञ्चदिनेषु च ॥
वैवाहिकेषु भ्रन्देषु पूर्णिमायां विशेषतः ।
मण्डपं कारयेत्तत्र कुण्डवेदीं तथा पुनः ॥
शान्तिकञ्च प्रकर्त्तव्यं मातॄणां स्थापनं तथा ।
मान्द्यश्राद्धादिकं सर्व्वं विवाहवत् समाचरेत् ॥
आह्वयेत् शुचिघ्रातान् वेदवेदाङ्गपारगान् ।
ब्रह्मा चार्देशकश्चैव चत्वारश्च तदृत्विजः ॥
वैष्णवेन विधानेन वर्द्धनीकलसं न्यसेत् ।
मण्डपं कारयेत्तत्र लक्ष्मीनारायणं शुभम् ॥
अग्रतश्च पुरः कृत्वा मातॄणां यजनं तथा ।
कृत्वा नान्दीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिम् ॥
कृत्वारोप्य च तुलसीं लग्ने लक्षमिते रवौ ।
वासः शतेन मन्त्रेण वस्त्रयुग्मेन वेष्टयेत् ॥
यदा बध्नाति मन्त्रेण कङ्कणं पाणिपल्लवे ।
कोऽदादिति च मन्त्रेण पाणिग्राहो विधीयते ॥
ततः कुण्डे समागत्य आचार्य्यः सहसा द्विजैः ।
आचार्य्यो वेदिकाकुण्डे जुहुयाच्च नवाहुतीः ॥
विवाहकर्म्मवत् सर्व्वं वैष्णवं देशिकोत्तमैः ।
कर्त्तव्यश्च ततो होमो विधिपाद्दिधिपूर्व्वकम् ॥"

ॐ नमो भगवते केशवाय नमः स्वाहा । नारायणाय स्वाहा । माधवाय । गोविन्दाय । विष्णवे । मधुसूदनाय । त्रिविक्रमाय । वामनाय । श्रीधराय । हृषीकेशाय । पद्मनाभाय । दामोदराय । उपेन्द्राय । अनिरुद्धाय । अच्युताय । अनन्ताय । गदिने । चक्रिणे । विष्वक्सेनाय । वैकुण्ठाय । जनार्द्दनाय । मुकुन्दाय । अधोक्षजाय स्वाहा । इति होमः ॥

यजमानः सपत्नीको लग्ने ये गोत्रबान्धवाः ।
प्रदक्षिणाञ्च कर्त्तव्याश्चत्वारो विष्णुना सह ॥
तुलस्याः पाणिग्रहणे वेदिकायां विभावसौ ।
घृतकुम्भं ददेत् पश्चात् पायसान्नं विशेषतः ॥
तथैव शान्तिकाध्यायं नवरत्नं तथैव च ।
सौवर्णं पुनर्न्नाम्ना तथा वैष्णवमंदिताम् ॥
दानञ्च दिनिर्णये यैर्नैरीतिमुख्यं निमन्त्रणे ।
गायन्ते मङ्गला नार्य्यो माङ्गल्यं विधिमाचरेत् ॥
दद्यात् पूर्णाहुतिं पश्चादभिषेकविधिं ततः ।
आचार्य्याय हयं दद्यादाचार्य्यं परिधाप्य च ॥
वस्त्रं पटञ्च तथा यज्ञसामग्र्याचार्य्याय प्रदापयेत् ।
ब्रह्मणेभ्यो दापयेद्दत्वाऽऽशेषां दद्याच्च दक्षिणाम् ॥
एवं प्रतिष्ठितां देवीं विष्णुना च समर्चयेत् ।
आजन्मोपार्ज्जितं पापं दर्शनेन प्रणश्यति ॥
रोपयेत्तुलसीं यस्तु सेवयेच्च प्रयत्नतः ।
प्रतिष्ठाप्य यथोक्तेन विष्णुना सह मानवः ॥
स मोक्षं लभते जन्तुर्विष्णुलोकं तथाव्ययम् ।
प्राप्नोति विपुलान् भोगान् विष्णुना सह मोदते ॥
प्रतिष्ठा श्रीतुलस्यास्तु लिखिता विष्णुयामले ॥"

इति श्रीहरिभक्तिविलासे २० विलासः ॥

**तुलसीद्वेषा**, स्त्री, ( तुलसीं द्वेष्टि तुल्यगन्धत्वात् स्पर्द्धते इति । द्विष + अण् । ततष्टाप् । ) वर्व्वरी । इति रत्नमाला ॥ ( वर्व्वरीशब्देऽस्या गुणादिकं ज्ञेयम् ॥ )

**तुला**, स्त्री, ( तोल्यतेऽनया । तुल उन्माने भिदादङ् । अतुलोपमाभ्यामिति निर्द्देशात् गुणाभावः । ) सादृश्यम् । ( यथा, रघुः । ८।१५ ।

"नभसा निभृतेन्दुना तुलामुदितार्केण समारुरोह तत् ॥" )

मानम् । ( यथा, पञ्चतन्त्रे । २ । ८४ ।

"सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य ।
हस्ततुलयापि निपुणाः पलपरिमाणं विजानन्ति ॥" )

गृहाणां दारुबन्धाय पीठिका । पलशतम् । ( यथा, अमरकोषे । २ । ६ । ८७ ।

"तुला स्त्रियां पलशतं भारः स्यात् विंशतिस्तुला ॥" )

भाण्डम् । इति मेदिनी । ले, २५ ॥ मेषादिद्वादशराश्यन्तर्गतसप्तमराशिः । तत्पर्य्यायः । यूकः २ युक् ३ घटः ४ तौली ५ तुलाभृत् ६ । इति ज्योतिषम् ॥ सा चित्राशेषपादद्वयस्वातीसमुदायविशाखाप्रथमपादत्रयेण भवति । तदधिष्ठातृदेवता तुलाधारिपुरुषः । अस्याः शिरस उदयः नानावर्णः उष्णस्वभावः । सा पश्चिमदिक्स्वामिनी वायुराशिः स्निग्धा चिक्कणा निःशब्दा वनचारिणी अल्पसन्ताना अल्पस्त्रीसङ्गा शूद्रवर्णा समानाङ्गा च । तत्र जातस्य फलम् । यस्मा विद्याधरः क्षौद्रःश्रितः । इति जातकम् ॥ जन्मकालीनचन्द्राश्रितेतद्राशिफलम् ।

"द्युतसुरद्विजगणक्रयविक्रयो
द्विजसुराधनदानमनाः पुमान् ।
शशिनि तौलिगते बहुदारभा-
गिभवलस्थितचिन्तितविक्रमः ॥"

इति कोष्ठीप्रदीपः ॥

तस्या उदये तन्नामकलग्नं भवति । तस्य गनितप्रमाणपरिमाणं दशदण्डाधिकपञ्चाङ्गुल-प्रभे देशे वर्त्तमानीनविंशायनांशे षट्त्रिंशत् पलाधिकपञ्चदण्डाः । इति ज्योतिषम् ॥ तत्र जातफलम् ।

"तुलाजलग्ने पुमान् जातः सुधीः सत्कर्म्मतत्परः ।
विद्वान् सर्व्वकलाभिज्ञो धनाढ्यो जनपूजितः ॥"

इति कोष्ठीप्रदीपः ॥ * ॥

परीक्षाविशेषः । यथा नारदः ।

"आशाङ्गस्य घटो देयः क्षत्रियस्य हुताशनः ।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु ॥
साधारणः समस्तानां कोषः प्रोक्तो मनीषिभिः ।
विषवर्ज्जं ब्राह्मणस्य सर्व्वेषान्तु तुला स्मृता ॥" *

अथ तस्या उत्तमसिद्धिविधिः । यज्ञियं दृढं यूपवज्जन्तपूर्व्वकं छित्वा लोकपालेभ्यः प्रणम्य वल्लिभिः चतुर्हस्ता चतुरस्रा ऋज्वी तुला कार्य्या तत्र चित्रु स्थानेषु वलयानि दातव्यानि । तत्र यद्धस्तौ खम्भौ कृत्वा हस्तद्वयमवधानेन द्विविगोप्रयोर्दिशोर्यसद्वयनिखननं कृत्वा षड्-धारकोलकाग्रसमायोग्यपरि अणद्वयचिह्नं मध्यनिवेशितलौहाकृष्णमकं निधाय तत्पट्टकस्य मध्यस्थिताकृष्णेन तुलामध्यवलयस्थलौहं संयुञ्ज्यात् । एवञ्च सति स्तम्भयोरन्तरतिर्यक् तुलादण्डस्तिष्ठति तुलाग्रस्थिताभ्यामायसकीलकाभ्यां शिक्यद्वयस्योत्तोलनं कुर्य्यात् । तुलायाः पार्श्वयोः प्राक्प्रत्यग्दिशोस्तोरणस्तम्भौ तुलातो दशाङ्गुलोच्छ्रायौ कार्य्यौ तोरणयोरुपरिस्थसंनद्धौ स्तम्भयोरधोमुखौ घटमस्तकचुम्बिनाववलम्बौ कार्य्यौ । तुलादण्डः पूर्व्वपश्चिमयोर्धार्य्यः । पूर्व्वशिक्ये शिलां तोलयेत् पश्चिमे कर्त्तारं तुलाया उपरि जलं देयं यदि जलं न प्रवते तदा तुला समा ज्ञेया ॥ * ॥ अथैतत्प्रयोगः । कृतोपवासः कृतस्नानादिः प्राड्विवाको वा ब्राह्मणः कार्य्यं दृष्ट्वैव निवेदितं विवेचयेत् । ततोऽभियुक्तं तोलयित्वावतार्य्य धर्म्मावाहनादिकं कुर्य्यात् । ॐ तत् सवितुर्धार्य्यं ब्राह्मणत्रयं गन्धादिना पूजयित्वा तान् सवितुपुण्याहशब्दैः प्रत्येकं निर्व्वाचयित्वा दिशाङ्गभूतहोमार्थं ब्रह्मचतुष्टयं ऋत्विक्चतुष्टयञ्च पाद्यादिभिरभ्यर्च्य वृणुयात् । अग्न्यादावेकं ब्रह्माणमेकं ऋत्विजञ्च । ततस्तुलां सपताकां ध्वजालङ्कृतां भूमौ निधाय तस्यां प्राङ्मुखः प्राड्विवाकः पुष्पाक्षतमादाय ॐ भूर्भुवः स्वरित्युच्चार्य्य ।

एह्येहि भगवन् धर्म्म ! शिक्ये ह्यस्मिन् समाविश ।

युता सुवर्णेन तु रत्नमाला
विभूषिता माल्यविलेपनाढ्या ॥
चक्रं लिखेद्वारिजगर्भयुक्तं
नानारजोभिर्भुवि कीर्णपुष्पम् ।
वितानकञ्चोपरि पञ्चवर्णं
संस्थापयेत् पञ्चपताकशोभम् ॥
इति तुलानिर्म्माणसूक्तम् ॥ ७ ॥
अथ द्विजा वेदविदश्च कार्य्याः
सुवामवेशान्वयशीलयुक्ताः ।
विधानदक्षाः पटवोऽनुकूला
ये चार्य्यदेशप्रभवा द्विजेन्द्राः ॥
गुरुश्च वेदाङ्गविदार्य्यदेश-
समुद्भवः शीलकुलाभिरूपः ।
कार्य्यः पुराणाभिरतोऽतिदक्षः
प्रसन्नगम्भीरसरस्वतीकः ॥
पूर्व्वेण ऋग्वेदविदौ यथास्तां
यजुर्व्विदौ दक्षिणतश्च शस्तौ ।
स्थाप्यौ द्विजौ सामविदौ च पश्चा-
दथर्व्वणावुत्तरतश्च कार्य्यौ ॥
विनायकादिग्रहलोकपाल-
वस्वष्टकादित्यमरुद्गणानाम् ।
ब्रह्माच्युतेशानवनस्पतीनां
स्वमन्त्रतो होमचतुष्टयं स्यात् ॥
जप्यानि सूक्तानि तथैव चैषा-
मनुक्रमेणापि यथा स्वरूपम् ।
अभ्यर्च्चयेल्लोकपतीन् क्रमेण
मन्त्रैरमीभिर्य्यजमानयुक्तः ॥
इत्यावाह्य सुरान्दद्यादृत्विग्भ्यो हेमभूषणम् ।
कुण्डलानि च हैमानि सूत्राणि कटकानि च ॥
द्विगुणं गुरवे दद्याद्भूषणाच्छादनादिकम् ।
जपेयुः शान्तिकाध्यायं जापकाः सर्व्वतो दिशम् ॥
उपोषितास्ततः सर्व्वे कृत्वैवमधिवासनम् ।
आदावन्ते च मध्ये च कुर्य्याद्ब्राह्मणवाचनम् ॥
ततो मङ्गलशब्देन स्नापितो वेदपुङ्गवैः ।
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ॥
शुक्लमाल्याम्बरो भूत्वा तां तुलामभिमन्त्रयेत् ।
नमस्ते सर्व्वदेवानां शक्तिस्त्वं शक्तिमास्थिता ।
साक्षीभूता जगद्धात्रा निर्म्मिता विश्वयोनिना ॥
एकतः सर्व्वसत्यानि तथा भूतशतानि च ।
धर्म्माधर्म्मकृतां मध्ये स्थापितासि जगद्धिते ॥
त्वं तुले ! सर्व्वभूतानां प्रमाणमिह कीर्त्तिता ।
मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते ॥
योऽस्य तत्त्वाधिपो देवः पुरुषः पञ्चविंशकः ।
स एवाधिष्ठितो देवि ! त्वयि तस्मान्नमोऽस्तु ते ॥
नमो नमस्ते गोविन्द ! तुलापुरुषसंज्ञक ! ।
त्वं हरे ! तारयस्वास्मानस्मात् संसारसागरात् ॥
पुण्यं कालमथासाद्य कृत्वाधिवासनं पुनः ।
पुनः प्रदक्षिणं कृत्वा तां तुलामारुहेद्बुधः ॥
सखड्गचर्म्मः कवची सर्व्वाभरणभूषितः ।
धर्म्मराजमथादाय हैमं सूर्य्येण संयुतम् ॥
कराभ्यां बद्धमुष्टिभ्यामास्ते पश्यन् हरेर्मुखम् ।
ततोऽपरे तुलाभागे न्यसेयुर्द्विजपुङ्गवाः ॥
या स्यादभ्यधिकं यावत् काञ्चनं चातिनिर्म्मलम्
पुष्टिकामस्तु कुर्व्वीत भूमिसंस्थन्नरेश्वर ! ॥
क्षणमात्रं ततः स्थित्वा पुनरेतदुदीरयेत् ।
नमस्ते साक्षीभूतानां साक्षीभूते सनातनि ! ॥
पितामहेन देवि ! त्वं निर्म्मिता परमेष्ठिना ।
त्वया धृतं जगत् सर्व्वं सहस्थावरजङ्गमम् ॥
सर्व्वभूतात्मभूतस्थे नमस्ते विश्वधारिणि ।
ततोऽवतीर्य्य गुरवे पूर्व्वमर्द्धं निवेदयेत् ॥
प्राप्य तेषामनुज्ञाञ्च तथान्येभ्योऽपि दापयेत् ।
दीनानाथविशिष्टादीन् पूजयेत् ब्राह्मणैः सह ॥
न चिरं धारयेद्गेहे हेम संप्रोक्षितं बुधः ।
तिष्ठद्भयावहं यस्माच्छोकव्याधिकरं नृणाम् ॥
शीघ्रं परस्वीकरणात् श्रेयः प्राप्नोति पुष्कलम् ॥”
तस्य द्रव्यविशेषेण फलं यथा,—
“अष्टानामपि धातूनां यस्तुलां कुरुते नरः ।
सर्व्वपापैः प्रमुच्येत मनोवाक्कायसम्भवैः ॥
यावद्धातु स्थितं तत्र तावत् कोटिशतानि च ।
मोदते तत्र वर्षाणां स्वर्गलोके न संशयः ॥
अथ मानुष्यमाक्रम्य कदाचित् कालपर्य्यये ।
धनधान्यसमृद्धो वै जायते महतां कुले ॥
आत्मनस्तु तुलां कृत्वा सुवर्णं यः प्रयच्छति ।
स तारयेत् पितृगणान् दश पूर्व्वान् दशापरान् ॥
आत्मनस्तु तथा तद्वत् फलभाग्जायते नरः ।
जन्मप्रभृति यत् पापं मातृकं पैतृकं तथा ॥
सुवर्णदानात् दारिद्र्यं न पश्यति कदाचन ।
रजतस्य तुलां कृत्वा सुकृती यः प्रयच्छति ॥
तावद्वर्षप्रमाणेन निर्म्मलः स्वर्गभाग्भवेत् ।
अनन्तरं भवेद्राजा पृथिव्यां नात्र संशयः ॥
सुवर्णहारी कुष्ठी वा सर्व्वव्याधियुतोऽपि वा ।
ताम्रस्य तु तुलां कृत्वा मुच्यते नात्र संशयः ॥
स तु वर्षसहस्रं वै स्वर्गलोके महीयते ।
कांस्यस्य तु तुलां कृत्वा विप्रेभ्यो यः प्रयच्छति ॥
स तु इन्द्रपदं प्राप्य ऊर्व्वश्या सह मोदते ।
आयसस्य तुलां कृत्वा दाता रत्नाधिपो भवेत् ॥
लभते युत्तमस्थानं बलवान् जायते सदा ।
रैत्यस्य तु तुलां कृत्वा यो ददाति द्विजातये ॥
सोऽप्सरःशतसंकीर्णे विमाने दिवि मोदते ।
सीसकस्य तुलां कृत्वा यो ददातीह मानवः ॥
स गन्धर्व्वपदं गच्छेत् नानाभरणभूषितः ।
रङ्गस्य तु तुलां कृत्वा विप्रेभ्यो यः प्रयच्छति ॥
विमुक्तः सर्व्वपापेभ्यश्चन्द्रसायुज्यमाप्नुयात् ।
घृतस्य तु तुलां कृत्वा ये प्रयच्छन्ति मानवाः ॥
तेजस्विनोऽभिजायन्ते गोभिश्च चिरजीविनः ।
तैलस्य तु तुलां कृत्वा यो वै दद्याद्द्विजा-
तये ॥
अरोगित्वं सुखित्वं वै आयुष्मानपि जायते ।
अभयः सर्व्वसौभाग्यं सर्व्वान् कामान् मधुप्रदः ॥
अनेन विधिना यस्तु तुलापुरुषमाचरेत् ।
प्रतिलोकाधिपस्थाने प्रतिमन्वन्तरं वसेत् ॥
विमानेनार्कवर्णेन किङ्किणीजालमालिना ।
पूज्यमानोऽप्सरोभिश्च ततो विष्णुपुरं व्रजेत् ॥
कल्पकोटिशतं यावत्तस्मिंल्लोके महीयते ॥
कर्म्मक्षयादिह पुनर्भुवि राजराजो
भूपालमौलिमणिराजितपादपीठः ।
श्रद्धान्वितो भवति यज्ञसहस्रयाजी
दीप्तप्रतापजितसर्व्वमहीपलोकः ॥
यो दीप्यमानमपि पश्यति तन्नियुक्तः
कालान्तरे स्मरति वाचयतीह लोके ।
यो वा शृणोति पठतीन्द्रसमानरूपः
प्राप्नोति वासवपुरं परदेवजुष्टम् ॥”
इति दानसागरः ॥

**तुलावीजं**, क्ली, ( तुलायास्तोलनस्य वीजं मूलम् । यद्वा, तुलायै परिमाणाय वीजम् ।) गुञ्जा । इति त्रिकाण्डशेषः ॥

**तुलिः**, स्त्री, ( तुरिः । रस्य लः । ) तुरी । इति शब्दरत्नावली ॥ तूलिका । इत्यमरटीकासारसुन्दरी ॥

**तुलिका**, स्त्री, ( तोलयति सादृश्यं गच्छतीति । तुल + बाहुलकात् इकन् । स च कित् ।) खञ्जनिका । इति त्रिकाण्डशेषः ॥

**तुलिनी**, स्त्री, (तूलमस्ति फलेऽस्याः । तूल + इनिः । ङीप् । पृषो ह्रस्वः ।) शाल्मलिः । इति रत्नमाला ॥

**तुलिफला**, स्त्री, (तूलि तूलयुक्तं फलं यस्याः । पृषोदरादित्वात् ह्रस्वः । ) शाल्मलिः । इति रत्नमाला ॥

**तुली**, स्त्री, ( तुरी + रस्य लः । ) तुरी । इति शब्दरत्नावली ॥

**तुल्यः**, त्रि, (तुलया सम्मितः । “नौवयोधर्म्मेति ।” ४ । ४ । ९१ । इति यत् ।) सादृश्ययुक्तः । तत्पर्य्यायः । समः २ सदृक्षः ३ सदृशः ४ सदृक् ५ साधारणः ६ समानः ७ । इत्यमरः । २ । १० । ३७ ॥ सधर्म्मः ८ सम्मितः ९ स्वरूपः १० । इति जटाधरः ॥ ( यथा, पञ्चतन्त्रे । १ । २७८ ।
“तुल्यार्थं तुल्यसामर्थ्यं मर्म्मज्ञं व्यवसायिनम् ।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते ॥”)
उत्तरपदस्थास्तुल्यवाचका यथा । निभः १ सङ्काशः २ नीकाशः ३ प्रतीकाशः ४ उपमा ५ । इत्यमरः । २ । १० । ३८ ॥ भूतः ६ रूपः ७ कल्पः ८ । इति भरतः ॥ प्रभः ९ । इति शब्दरत्नावली ॥ ( पुं, स्वनामख्यातो गन्धर्व्वविशेषः । यथा, महाभारते । १ । १०१ । ७ ।
“गन्धर्व्वराजो बलवांस्तुल्यनामाभ्ययात्तदा ॥”)

**तुल्यपानं**, क्ली, ( तुल्यैरात्मीयजनैः सह पानम् । ) आत्मीयेन जनेन सह मिलित्वा एककाले कृतं पानम् । तत्पर्य्यायः । सपीतिः २ । इत्यमरः । २ । ९ । ५५ ॥

**तुवरः**, पुं क्ली, ( तवति हिनस्ति रोगानिति । तु + बाहुलकात् ष्वरच्प्रत्ययेन साधुः ।) कषायरसः । इत्यमरः । १ । ५ । ९ ॥ त्रि, कषाययुक्तः । ( यथा, सुश्रुते १ । ४५ ।
“नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे ॥” )
श्मश्रुहीनः । इत्युणादिकोषः ॥

**तुवरयावनालः**, पुं, ( तुवरः कषायो यावनालः ।) धान्यविशेषः । तत्पर्य्यायः । तुवरः २ कषाय-

